## अधुनोभयानुष्ठानोपायमाह—

यनेन सम्पाद्य मनुष्यकारं यना[1]वसाने पुरुषो निरुद्धे ।
प्रतीक्षते दैवमतन्द्रियो य स्तमापदो नामकृतः स्पृशन्ति ॥ १७ ॥

मनुष्यकारं पुरुषकारं यत्नेन प्रयत्नेन सम्पाद्य कृत्वा पुरुषो नरो यत्नावसाने यत्न छिद्रे निरुद्धे निच्छिद्रे कृते दैवं प्रतीक्षते। प्राक्तनमिष्टानिष्टफलं दैवम्, तत्प्रतिपादयति, अतन्द्रियो यत्नपरः सावधानमित्यर्थः। य एवंविध स्तं पुरुषं आपदः, आत्मकृताः स्वयमेव पुरुषापराधोत्पादिता न स्पृशन्ति न ढौकते। आपदो द्विविधा दैवकृता आत्मकृताश्च, मरणादि दैवकृता अपराधः पूर्विका आत्मकृता। एतदुक्तं भवति। सावधानः पुरुषः पुरुषकारं कृत्वा सावधानतस्तां निश्छिद्रां कृत्य दैवं प्रतीक्षते तस्य आत्मकृता आपदो न भवन्ति। यत्तन्नियमेन संपाद्य निर्वर्त्य मनुष्यकारं कृत्वा, यत्नावसाने तदन्ते यः पुरुषो मनुष्यो निरुद्धः फलमलभमानो दैवं प्रतीक्षते प्रतिपालयति, अतन्द्रितः प्रयत्नपर स्तं पुरुषं आपदो विपत्तयः, आत्मकृता स्वयमेवोत्पादिता न स्पृशन्ति ॥ १७ ॥

### अथ दैवपुरुषयोः फलसिद्धिर्निमित्तत्वे प्रतिपादिते सति कथं केषांचिन्निरुध्यमान दृश्यन्ते, अन्येषां कृच्छ्रेण वा दृश्यन्ते तत्किं कारणमत आह-

सत्वार्जितं कर्मफलं सुखेन विपच्यते राजसमुद्यमेन ।
कृच्छ्रेण शेषं महता यतोऽतो भाग्यानि मृग्यानि नृभिर्विकारैः ॥ १८ ॥

पूर्वकृतं दैवं तच्च त्रिविधं सात्विकं राजसं तामसं च, तत्र सत्वार्जितं सात्विकं यत्कर्मफलं शुभं तत् सुखेन विपच्यते विपरिणमति। निरुद्यमस्यैवाल्पोद्यमस्य वा राजसोद्यमेन कर्मणा कृतेन पच्यते, शेषं तामसं पुनः कृच्छ्रेण क्लेशेन महता पच्यते इति। यतोऽस्माद्धेतोर्भाग्यानि पूर्वजन्मकृतानि कर्मफलानि नृभिः पुंभिर्नृकारैः पुरुषकारै र्मृग्यानि अन्वेषणीयानि ॥ ८ ॥

इति भट्टोत्पलविरचितायां यक्षेऽश्वमेधीययात्राविवृतौ
दैवपुरुषकारोऽध्यायः प्रथमः ॥ १ ॥

---

१ केचित्, यात्रावसाने पुरुषो निरुद्ध इति पठन्ति ।



# अथातः प्रश्नोदयाध्यायो व्याख्यायते

## तत्रादावेव यात्राकालार्थमाह—

यात्राकालमतः परं मुनिमतान्यालोक्य संक्षेपतो
वच्म्युद्दिश्य पृथूक्तलक्षणगुणैः संपन्नमीशं भुवः ।
ज्ञाते जन्मनि तस्य यानसमयं वाञ्छन्ति होराविद्-
स्त्वज्ञातेऽस्य फलं घुणाक्षरमिव प्राहात्र रत्नावलिः ॥ १ ॥

उक्त गुणयुक्तस्य विजिगीषोरभिलषितार्थप्राप्तिनिमित्तं गमनं यात्रेत्युच्यते। तद्गमनं पञ्चप्रकारम्।

यथा च कामन्दकि—

उत्कृष्ट फलवीर्यस्य विजिगीषो र्जयैषिणः।
गुणानुरक्तप्रकृतेर्यात्रा यानमिति स्मृतम् ॥
विगृह्य सत्वाय तथा संस्तूयाथ प्रसंगतः ।
उपेक्षा... ... ... मानं पञ्च विधं स्मृतम् ॥

अतोऽस्मादेव पुरुषकादनन्तरं हृदि स्थिताज्ज्ञातकपदार्थाद्वा सर्ववर्णानां यात्राकालं यानसमयं, भुवः भूमे रीशं स्वामिनं राजानमुद्दिश्याभिसंधाय वच्मीति कथयामि। किं भूतं पृथुक्तलक्षणैः सम्पन्नं पृथुना विस्तारेणोक्तैः शरीरावयवलक्षणैर्युक्तम्।

तथा च—

उन्मानमानगतिसंहतिसारवर्णस्नेहस्वरप्रकृतिसत्वमनूकपादौ ।
क्षेत्रंमृजा च विधिवत्कुशलोवलोऽक्य सामुद्रविद्वदति जातमनागतं वा ॥

तथा च—

त्रिषु विलोमं गम्भीरं स्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः ।
सप्तसु रक्तो राजा पञ्चसु दीर्घश्च सूक्ष्मश्च ॥

नाभिः स्वरः सत्वमिति प्रशस्तं गम्भीरमेतत्त्रितयं नराणाम् ।
उरो ललाटं वदनं च पुंसां विस्तीर्णमेतत्त्रितयं प्रशस्तम् ॥
वक्षोऽथ कक्षौ नखनासिकाख्यं कृकाटिका चेति षडुन्नतानि ।
ह्रस्वानि चत्वारि च लिङ्गपृष्ठे ग्रीवा च जङ्घे च हितप्रदानि ॥

नेत्रान्तपादकरताल्वधरोष्ठजिह्वारक्तं नखाश्च खलु मुक्तसुखावहानि ।
सूक्ष्माणि पञ्चदशनांगुलिपर्वकेशाः साकं त्वचा कररुहाश्च न दुःखिताम् ॥

हनु लोचन बाहुनासिकं स्तनयोरन्तरमत्र पञ्चकम् ।
इति दीर्घमिदं तु पञ्चकं न भवत्येव नृणामभूभृताम् ॥

इत्यादिकै लक्षणै र्युक्तम् । यावद्विस्तरोक्तैर्गुणैः प्रागुक्तै र्विजिगीषु लक्षणै रुत्साह-मंत्रप्रभुशक्तिरित्याद्यैः पूर्वं किल दैवपुरुषयोगात्तु फलसंपदभिहितम् । तत्र शरीरावयव-लक्षणैर्युक्तस्य पुरुषाकारसंपदस्तीति ज्ञेयम् । उत्साहशक्त्यादियुतस्य पुरुषाकारसंपदिति । शरीरावयवलक्षणसंपत्त्या दशाविभागेन फलं सम्यक् विज्ञापिते ।

तथा च—

पादौ सगुल्फौ प्रथमं प्रदिष्टं जङ्घे द्वितीयं च सजानु चक्रे ।
मेढ्रोऽथ मुष्कश्च ततस्तृतीयं नाभिं कटिं चेति चतुर्थमाहुः ॥
उदरं कथयन्ति पञ्चमं हृदयं षष्ठमथ स्तनान्वितम् ।
अथ सप्तममंसजत्रुणी कथयन्त्यष्टममोष्ठ कन्धरे ॥
नवमं नयने च सभ्रुणि स ललाटं दशमं शिरस्तथा ।

एवं दैवपुरुषकारयुक्तं राजानमधिकृत्य यात्राकालं फलप्रदं कथयामि । कथं मुनिमता-न्यालोक्य संक्षेपतः मुनिमतानि गर्गवसिष्ठ-पराशर-कश्यपादिऋषिप्रणीतानि शास्त्राण्यालोक्य



पर्यालोच्य, स्वमनीषिकया । अथ तेषु सत्सु कथं पुनरुक्तेनेत्यत आह, "संक्षेपत" इति, ऋषिकृतानि शास्त्राण्यतिविस्तृतानि, अतोऽहं पुनस्तमेवार्थं संक्षेपेण कथयामीति । राजानमुद्दिश्य सर्वा एव यात्रा प्रभृतयः प्रवर्तन्ते, न च स्वबुद्धिकृतप्रयत्नः । एवमज्ञातजातकस्वयात्रायां दत्तायां यस्य शुभदशाफलसंपत्तस्य यात्रा सिद्ध्यति तत्र च तत्सिद्धि घुणाक्षरवदिति ।

तथा च यवनेश्वरः—

जन्म क्रमोद्दिष्ट विकल्पदृष्ट सम्पन्न भाग्यं विजिगीषमाणम् ।
नृपं नृपाचारगुणोपपन्नमुद्दिश्य संयानविधिं विधास्ये ॥
अत्रास्मिन्नेवार्थे रत्नावलि नामाचार्यः, प्राहोक्तवानिति ॥ १ ॥

## अथात्र रत्नावलिकृतेयमार्या साक्षात् पठति

**विदिते होराराशौ स्थानबलपरिग्रहे ग्रहाणां च ।**
**आयुषि च परिज्ञाते शुभमशुभं वा फलं वाच्यम् ॥ २ ॥**

येन लग्नेन पुरुषो जातः स तस्य होराराशिरित्युच्यते । तस्मिन् होराराशौ जातकलग्ने विदिते ज्ञाते, तथा ग्रहाणां राश्यादीनां स्थानपरिग्रहे बलपरिग्रहे च ज्ञाते प्रष्टुर्जन्म-कालिको ग्रहः कस्मिन् राशौ द्रेष्काण नवांशक द्वादशभाग त्रिंशांशे वा कस्मिन् आसीत् । तथा ग्रहाणां चतुः प्रकारं बलमुक्तः 'स्थान दिक् चेष्टा काल बलारभ्यम्' तत्र कस्य ग्रहस्य कियद्बल-मासीदिति बलपरिग्रहः, तस्मिन् स्थानबलपरिग्रहे च ज्ञाते, सम्यक् बलिनः स्वतुङ्गभागे स्थितस्यारोहिणीदशा संपूर्णफला भवति, तत्र विजययात्रा कर्तव्येति भावः । बलवर्जितस्य दशा रिक्ता तत्र यात्रा न देया । तथा यातु रायुषिः च परिज्ञाते, मृत्युरपमृत्युर्वेति विदिते सत्य-नेन ज्ञात्वा शुभमशुभं वाच्यं वक्तव्यम् ।

यतोऽत्र वक्ष्यति—

रिक्तोपहतदशायां जन्मोदयनाथ शत्रुपाके चेति ॥ २ ॥

## अधुना ज्ञाताज्ञातजन्मनो र्द्वयोरपि सिद्धान्तरूपेणाह—

[१]अन्ये वदन्ति विदितेऽपि हि जन्मकाले
योग्यः प्रमाण समयो मनुजेश्वराणाम् ।
प्रश्नोदयोद्भवफलम् सदसद्विभज्य
तत्त्वार्थविन्निगदतिस्म वचो वसिष्टः ॥ ३ ॥

अन्ये मुनयो वसिष्ठादयः, अविदितेष्यज्ञातेऽपि हि जन्मकाले जातकसमयेऽपि शब्दा ज्ञातेऽपि मनुजेश्वराणां राज्ञां प्रयाण समयो यात्राकालो योग्यो न्याय्य इति वदन्ति कथयन्ति कथमित्याह– "प्रश्नोदयोद्भवफलमित्यादि" प्रश्नोदयः पृच्छालग्नं तदुद्भवं तत्समुत्पन्नं सदस शुभाशुभफलं विभज्य विभागीकृत्य तत्त्वार्थवित्परमार्थज्ञो वसिष्ठमुनिर्वचो वचनं निगदति प्रोक्तवान् स्वसंहितायाम् ॥ ३ ॥

## अथ वसिष्ठोक्तं श्लोकपञ्चकं दर्शयति—

अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्य कस्यचित् ।
होराकेन्द्रत्रिकोणेभ्य स्तस्य विन्द्याच्छुभाशुभम् ॥ ४ ॥

अपृच्छतोऽकथयतः स्वयमेव दैवज्ञो विचारयति, पृच्छतो वा प्रष्टा स्वयमेवागत्य पृच्छति तथाविधस्य यस्य कस्यचित् जिज्ञासोः ज्ञातुमिच्छोः, तस्य प्रष्टुः शुभाशुभं विंद्यात जानी-

---

यदाह नारदः—

१ "अज्ञातजन्मनां नृपाणां फलानि र्घुण वर्णवत् ।
प्रश्नोदयनिमित्ताद्यै स्तेषामपि फलोदयः ॥"
नारदसंहिता अ. ३२ श्लो. २

वसिष्ठोऽपि

"निखिलगुणयुतानां राज्ञां कथयामि विधानमत्र यात्रायाम ।
जातकमवलोक्य वदेत्फलमन्यथा मृपा भवति ॥"



यात् । कथमिति, तत एव ये त्रिकोणे नवपञ्चमे स्थाने केन्द्रे प्रथम–चतुर्थ–सप्तम-दशम-स्थानानि तेभ्यः प्रष्टुः शुभाशुभं विंद्यात् जानीयात् ।

उक्तं च—

केन्द्रत्रिकोणेषु शुभस्थितेषु पापेषु केन्द्राष्टमवर्जितेषु ।
सर्वार्थसिद्धिं प्रवदेन्नराणां विपर्ययत्वे तु विपर्ययः स्यात्, इति ॥
केन्द्रत्रिकोणेषु शुभाःप्रशस्ता स्तेष्वेव पापा न शुभप्रदा स्युः ॥ ४ ॥ इति ॥

## अथ यदुक्तं प्रश्नकालो जन्मकाल एव तत्र युक्तिमाह—

दैवज्ञस्य हि दैवेन सदसत्फलवाञ्छकः ।
अवशो गोचरं मर्त्यः सर्वः समुपनीयते ॥ ५ ॥

हि शब्दो यस्मादर्थे, यस्माद्दैवज्ञस्य, नैमित्तिकस्य दैवेश्वरेण प्राक्कर्मणा गोचरं मार्गः सर्वः निःशेषः मर्त्योऽवशः पुरुषः स्वतन्त्रः सन् समुपनीयते हठात् प्रेर्यते । मर्त्यः कीदृशः, सदसत्फलवाञ्छकः, सदसत्फलानां शुभाशुभानामर्थानां वाञ्छकोऽभिलाषकः, इति ॥ ५ ॥

## अधुना तस्यैवार्थस्यागमप्रदर्शनार्थमाह—

अश्रौपीश्च पुरा विष्णोर्ज्ञानार्थं समुपस्थितः ।
वचनं लोकनाथस्य निःसृतं मुखपङ्कजात् ॥ ६ ॥

स च वसिष्ठमुनिः पुराः पूर्वं विष्णोर्नारायणस्य ज्ञानं समुपस्थितः सम्यक् समीपे स्थितः, तत्र भगवतो मुखपङ्कजाद्वदनारबिन्दात् लोकनाथस्य सर्वभूतप्रभोर्वचनं वाक्यं निःसृतं, निष्कान्तं, अश्रौषीः श्रुतवान् किल स वसिष्ठमुनिर्नारायणात् ज्ञानं प्राप्तवान् ।

तथा च—

यद्दानवेन्द्राय मयाय सूर्यः शास्त्रं ददौ स प्रणताय पूर्वम् ।
विष्णोर्वसिष्ठश्च महर्षिमुख्यो ज्ञानामृतं यत् परमाससाद, इति ॥ ६ ॥

## अधुना सिद्धान्तरूपेणाह–

यत्सारं पृच्छतः पुंसो ग्रहहोराश्रयं फलम् ।
तत् सारं तस्य तज्जन्य यद्यप्यन्यगृहे भवेत् ॥ ७ ॥

पुंसः पुरुषस्य पृच्छतः प्रष्टुर्ग्रहहोराश्रयं ग्रहानाश्रित्य होरालग्नं च यत्फलं तत्कालजातं सारं सत्यं शुभाशुभमुत्पन्नं तस्य प्रष्टु स्तदेव सारं सत्यं, तज्जन्म यद्यप्यन्यगृहे भवेत, तत्तस्य जन्म जातकं यद्यप्यन्यराशौ लग्नगते भवेत्, अन्यादृश्यां च ग्रहसंस्थायां तथापि, तत्सारं जातकफलसमं जन्मकालफलस्य द्योतकं भवतीत्यर्थः ।

उक्तं च–

जन्मसये यदुक्तं शुभाशुभं निरवशेषमाचार्यैः ।
पृच्छाकालेऽपि नृणां तदेव भवतीति ज्ञेयम् ॥

तथा चोक्तं— "जन्मन्याधाने प्रश्नकाले वेति" ॥ ७ ॥

## अथ यदुक्तं पृच्छाकाले शुभाशुभं ज्ञेयं, तत्कथमित्याह–

बुध्वा शास्त्रं यथा न्यायं बलाबलविधानतः ।
यथोक्तं जातके सर्वं तदत्रापि विचिन्तयेत् ॥ ८ ॥

शास्त्रं ज्योतिः शास्त्रं यथा न्यायं न्यायादनपेतं आगमविच्छेदरहितं, आगमं बुध्वा ज्ञात्वा बलविधानतः, जातकोक्तं ग्रहाणां राशीनां च बलाबलं ज्ञात्वा यथा येन प्रकारेण जातके होराशास्त्रे, उक्तं कथितं तथा तेनैव प्रकारेण तत्राऽपि प्रश्नकालेऽपि सर्वं निःशेषं चिन्तयेत् लक्षयेत् । अयमर्थः— जातकेषु सुनफाऽनफादुरुधरा प्रभृतयः शुभयोगा उक्ता ये च नाभसयोगाः शुभा येचाखिला नृपयोगा स्तैः प्रश्नकाले दृष्टैः प्रष्टुरभीष्टार्थसिद्धिं ब्रूयात्, एवं येऽरिष्टयोगा उक्ता ये च नाभसा दुष्टफला ये च केमद्रुमप्रभृतयोऽनिष्टयोगा स्तैः प्रश्नकाले दृष्टैः प्रष्टुरनिष्टं फलं चिन्तयेत्, एतदुक्तं भवति, अविज्ञातेऽपि जन्मकाले प्रश्नलग्नाद्वा विजिगीषोः सदसत्फलं, होराशास्त्रोक्तन्यायेन सर्वमत्र योज्यं यस्माज्जातकमपेक्षितं, यात्राफलपरिज्ञानं तस्माद्विजिगीषोः सर्वमत्रापि चिन्त्यम् ॥ ८ ॥



## अधुना प्रष्टुर्निरूपणार्थमाह–

तस्मान्नृपः कुसुमरत्नफलाग्रहस्तः प्रातः प्रणम्य रवये हरिदिङ्मुखस्थः ।
[1] होराङ्गशास्त्रकुशलान् हितकारिणश्च [2]संहृत्य दैवगणकान् सकृदेव पृच्छेत् ॥ ९ ॥

तस्मात् प्रागुक्ताद्धेतो नृपो राजा, दैवगणकान् ज्योतिःशास्त्रज्ञान् संहृत्य एकीकृत्य सकृदेव एकवारमेव पृच्छेत । कीदृशान, होराङ्गशास्त्रकुशलान्, होरा जातकं तस्याङ्गभूतानि संहिता, गणित, तत्कालनिमित्तशास्त्राणि तेषु कुशलान् पारगान्, तथा हितकारिणः, राज्ञोऽभीष्टकरणैकवृत्तिमन्तः । नन्वत्र पूर्वोक्तसांवत्सरलक्षणे स्वतंत्राङ्गपटुः कुलीन इत्यनेनैव गतार्थत्वात् पुनर्होराङ्गशास्त्रकुशलान् हितकारिणश्चेति साम्वत्सरगुणविशेषेण निर्दिष्टेऽपि किञ्चित प्रयोजनमधिकमित्यत्रोच्यते । यान् विशेषतो हितकारिणः शास्त्रार्थतत्वं निर्णेतुं समर्थान् न चोदासीनानिति ध्येये ।

अत एवाह—

इत्येवमेषामविकल्पितानां क्रियाविभागार्थमुदाहृतानाम् ।
अन्योऽन्यसंयोगविकल्पनाभि रिदं समुद्राम्बुवदप्रमेयम् ॥

समुद्रभूते होराशास्त्रे निमित्तानां लग्नावयवानां च निरुप्यमाणानां कदाचित् किञ्चिदवशिष्यते । साम्वत्सरस्य निमित्तसंशयार्थं होराङ्गशास्त्रकुशलान् हितकारिणश्च, अन्यानपि दैवगणकान् संहृत्य सकृदेव दैवज्ञं पृथक् पृथक् पृष्टे कालस्य नानात्वेनैकवाक्याभावात् फले भाविनि शंका दुर्निवाराः । दैवज्ञेनापि निमित्तपरिज्ञानार्थमन्ये तद्विदः कर्तव्याः किं पुनराज्ञाम् । तच्च साम्वत्सरसूत्रे प्रदर्शितमाचार्येण, न च एकाकिना शक्यन्ते अहर्निशमवधारयितुं निमित्तानि, तस्मात् सुभृतेन दैवज्ञेनाऽन्येऽपि तद्विदः कर्तव्या इति । आचार्येणात्र पूर्वोत्तरविरोधमाशंक्य स्पष्टतरमुक्तं, "होराङ्गशास्त्र कुशलानिति" हितकारिणः क्रोधेर्ष्यादिरहिताः हितकारिणोऽपि कदाचित्सर्वावयवलक्षणसम्पन्ना न भवन्ति । तस्मात् तान् संहृत्य साम्वत्सरिकत्वात्साम्वत्सरसूत्रोक्तगुणान्वितं प्रधानतमं दैवज्ञं पृच्छेत् । वक्ष्यमाणानन्तरोक्तेनैव वचन निर्देशेन प्रतिपादितम् ।

---

[1] अत्र केचित् होराङ्गतन्त्रकुशलानिति पठन्ति । [2] संगृह्य इत्यपि ।

एवं नृपेण पृष्टः प्रधानज्योतिर्वित्कृत्यमाह–

अथ "नृपतिसमीपे दैववित्पृष्टमात्र" इति प्रष्टव्यो दैवविदां विश्वब्धमित्यादिना । एक एव सर्वगुणान्वितः सिद्धमेतत् । एवं पुनरुक्तता न दोषः । किं कृत्वा पृच्छेत्, प्रातः रवये सूर्याय प्रणम्य नमस्कृत्य, प्रातः पूर्वाह्णे पृच्छेत् ।

तथा च भगवान् पराशरः—

वेलाः सर्वाः प्रशस्यन्ते पूर्वाह्णे परिपृच्छतः ।
सन्ध्ययोरपराह्णे च क्षपायां च विगर्हितः ॥ इति ॥

कीदृशो राजा हरिदिङ्मुखस्थः, हरिरिन्द्रस्तद्दिक् पूर्वा तदभिमुखः तथा कुसुमरत्नफलाग्रहस्तः कुसुमानि पुष्पाणि रत्नानि मुक्ताफलप्रभृतीनि फलानि जातीफल–नारिकेल–पूग-प्रभृतीनि चाग्रहस्ते दक्षिणहस्ते यस्य ॥ ६ ॥

## नैमित्तिकंप्रत्याह–

अथ नृपतिसमीपे दैववित्पृष्टमात्रः
फलमुदयनिमित्तै स्तर्कयेच्छास्त्रदृष्ट्या ।
सदसि सदिति वाच्यं यद्यपि स्यादसत्तत्
स्फुटमपि कथनीयं [1]भूभुजे मन्त्रिणे वा ॥ १० ॥

अथानन्तरं प्रश्नात्परतो दैववित् साम्वत्सरिकः पृष्टमात्रः परिपृष्टः सन्, नृपतिसमीपे राजसन्निधौ, असन्निधौ वा तत्कालं उदयं लग्नं निमित्तानि अङ्गस्पन्दनशकुनानि तत्कालजातानि तैः शास्त्रबुद्ध्या आगमानुसारेण यातुः शुभाशुभफलं तर्कयेत् उह्येत्, एवं तर्कयित्वा ततः किं कर्तव्यमित्याह । "सदसि सदिति वाच्यमित्यादि" तत्फलं प्रश्नकालोद्भवं यद्यपि शास्त्रदृष्ट्याऽसत् अशोभनं स्यात्तदपि सदसि सभायां सत्, शोभनमिति वाच्यं वक्तव्यम्, यतो त्रिविगोपुणा गूढचारेण भवितव्यम् ।

[1] केचित् भूभुजो मन्त्रिणो वेति पठन्ति ।



उक्तं च ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... कोशहीनोऽपि पार्थिव इति ।

यत् स्फुटमन्यदपि भूभुजे राज्ञि मन्त्रिणे सचिवाय कथनीयम् । इष्टं फलं चेत्तदा राज्ञेऽनिष्टं चेन्मन्त्रिण इति, मन्त्री राज्ञः तथा यात्रानिवृत्तिं करोति । यतोऽस्य नृपस्य पराक्रम शृङ्गारभङ्गो न भवतीति ॥ १० ॥

## अथ निमित्तलक्षणान्याह–

सुमधुरफल-पुष्प-क्षीरवृक्षावृतायां
चतुरगतिसुखायां गोसकृत्फेनवत्याम् ।
सलिल–कुसुमवत्यां पृच्छतो भद्रमूर्व्यां
ग्रह–भगणगतिज्ञ स्त्वादिशेत् पृच्छकस्य ॥ ११ ॥

एवं विधायामूर्व्यां भूमौ पृच्छकस्य प्रष्टु र्यियासोर्भद्रं कल्याणमादिशेत् । कः ग्रहभगण-गतिज्ञः ग्रहाणामादित्यादीनां भगणस्य नक्षत्रगणस्याश्विन्यादेर्गतिं जानाति गणितविद्दैवज्ञ इत्यर्थः । कीदृश्यां भूमौ सुमधुराणि सुस्वादूनि फलानि पुष्पाणि च येषु वृक्षेषु तथा च क्षीर-वृक्षा वटाम्राकर्दयस्तैरावृतायां संयुक्तायां तथा चरणगतौ पादविहरेण या भूः सुखं करोति तस्यां तथा गोसकृत फेनवत्यां गोः शकृत् गोमयं फेनश्च गवां चर्वित चर्वणेनोत्पन्नः फेन स्तद्विद्यते यस्यां तथा सलिलकुसुमानि जलजपुष्पाणि उत्पलादीनि तानि विद्यन्ते यस्यां अथवा सलिलवत्यां सजलायां कुसुमवत्यां सपुष्पायामिति । आदृतः प्रष्टुरादरेण शास्त्रतत्वज्ञा भवन्तो वयं त्वदाज्ञानुचराः, येन भवतां यशोऽभिवृद्धिर्मादृशानामपि भवत्कृपया फलसिद्धि-रित्याद्यादरेण यदा प्रष्टा पृच्छति तथापि दैवज्ञो भद्रं वदेत् ।

उक्तञ्च—

प्रश्ने मनोरमाभूर्माङ्गल्य-द्रव्यदर्शन श्रवणम्
यदि चादरेण पृच्छति दैवज्ञो निर्दिशेद्विजयम्, इति ॥ ११ ॥

## एवं वाह्य निमित्तान्युक्त्वा, अधुनाभ्यन्तरनिमित्तान्याह—

स्तनचरणतलौष्ठाङ्गुष्ठहस्तोत्तमाङ्ग
श्रवणवदननासा गुह्यरंध्राणि भूपः ।
स्पृशति यदि कराग्रैर्गण्डकट्यंशकं वा
प्रवदति शुभशब्दं वा ततः शास्ति शत्रून् ॥ १२ ॥

संवत्सरसूत्राङ्गसंग्रहेंऽगविद्या निर्दिष्टा तस्य मात्रास्थानं स्तनौ प्रसिद्धावुरस्थौ चरणत पादतलं, ओष्ठौ दन्तच्छदौ, अङ्गुष्ठौ हस्तपादयोः प्रधानाङ्गुली हस्तौ करौ उत्तमाङ्गं शि श्रवणौ कर्णौ वदनं मुखं नासा घ्राणं गुह्यं मेढ्रं गुदे, रन्ध्राणि शरीरछिद्राणि तानि च नव सिद्धानि, श्रोत्रे चक्षुषी नासापुटौ लिङ्गमपानमिति । अथवा श्रवणवदननासागुह्यानां रंध्रा एतानि भूपो राजा कराग्रैर्हस्वप्रान्तैः स्पृशति अथवा गण्डौ कपोलौ कटिर्जघनं अंशौ स्क एतानि वा कराग्रैः स्पृशति अथवा वाह्यतः कश्चिच्छुभशब्दं प्रवदति एवमादितो हेतोः राजा शत्रून् शास्ति जयति शत्रून् नाशयति । अत्र स्तन-चरण-लक्षणाद्युपलक्षणार्थं ते माङ्गल्यद्रव्यदर्शनश्रवणादि तज्जातं सर्वमत्र चिन्तनीयमिति । यात्रापरिशुद्धिर्द्विप्रकारा वाह्याऽऽभ्यन्तरा च, वाह्या तावदभिधीयते, सत्फलदशाविपाका वृकबर्गपरिशुद्धि ग्रहा यायिग्रहाश्च विजयादिफलमुक्ता यातुश्चोपचयकराः तात्कालिकलग्नादि—परिशुद्धिर्जन्मर्क्षा नवनक्षत्रशुद्धिः सेनायां देशे च सुभिक्षक्षेमारोग्यमभिप्रेतद्रव्याप्तिः स्त्रिविधोत्पातानामस म्भव श्चन्द्रश्चोपचयकरः यतश्चन्द्रः सर्वेषां भूतानां मनः ।

तदुक्तमाचार्येण—

आश्रित्य चन्द्रस्य बलाबलानि ग्रहाः प्रयच्छन्ति शुभाशुभानि ।
मनः समेतानि यथेन्द्रियाणि कर्मण्यतां याति न केवलानि ॥

तथा च—

गोचरेण शुभदः शशी न चेदष्टवर्ग-परिशोधितोऽपि वा ।
पूर्ववायुरिव पुष्पकालजो यायिनां फलविनाशकृद्भवेत् ॥

अथेयं यात्राशुद्धि द्विप्रकाराः-, अमुमेवार्थं ऋषिपुत्र आह ।



आभ्यन्तरा शुद्धिश्च । कारुण्यं दया च सर्वप्राणिनां देवताऽतिथिपूजनं व्यसनेष्वशक्तिः सौर्यबलोत्साहादि सम्यक्करुणा, मनसा वाचा प्राणिनामविरोध जितेन्द्रियत्वं सुस्वप्नदर्शनं, एतानि यस्य स एवाभ्यन्तरदैवसंपन्न स्तस्याभ्यन्तरयात्रा शुद्धिरिति । अत्र आचार्येणापि प्रदेशान्तरेऽभिहितम् ।

तद्यथा—

आक्षेपशीलः परुषाभिधायि विरक्त भृत्यः परदारगामी ।
लुब्धोऽसहायो व्यसनी कृतघ्नः स्थितिः प्रभेत्ताकरशीर्णराष्ट्रः ॥
विश्वस्तहा क्रोधपरो नृशंसः क्षुद्रः प्रमादी न बहुश्रुतश्च ।
दिव्यन्तरिक्ष--क्षितिजैर्विकारै निपीडितो यश्च सदैव हीनः ॥
अतो विपर्यस्त गुणेन राज्ञा तादृग्विधोभिस्त्वभियुक्तमात्रः ।
तरुर्घुणैर्जीर्ण इवात्तवीर्यो महानपि क्षिप्रमुपैति भङ्गम् ॥

इत्यमुमेवार्थमृषिपुत्र आह—

कर्मणा मनसा वाचा सर्वभूतेषु तिष्ठता ।
देवता तिथि भृत्येभ्यः प्रणाम निरतः सदा ॥
शौचमार्जवमार्यत्वमास्तिक्यं श्रद्धानता ।
आत्मवत्वं प्रियत्वं च शौचं दाक्ष्यं तितिक्षता ॥
अनुग्रहश्च मनसोत्साहवान् सुदृढव्रतः ।
असङ्गश्चाप्यकार्येषु कीर्तिरारोग्यमेव च ॥
आमल्लवान् युद्धजयः प्रशस्त स्वप्नदर्शनम् ।
लाघवञ्च प्रहर्षञ्च दैवमात्माश्रितं विदुः ॥ इति ॥

आभ्यन्तर मनोमुकूलतां प्रष्टव्या दैवविदा, स्तब्धमुपह्वरा इत्यादि प्रवेशान्तरे वक्ष्यत्या-चार्यो वयमपि तत्रैव व्याख्यास्यामः ॥ १२ ॥

## एवं वाह्यान्तर निमित्तान्युक्त्वाऽधुना लग्नाश्रयफलान्याह-

उदयमुदयपं वा जन्मभं जन्मपं वा
तदुपचयगृहं वा वोच्यलग्नं यियासोः ।

विनिहतमरिपक्षं विद्धिशत्रोरिदं वा

यदि हिबुकसमेतं पृच्छतोऽस्त स्थितं वा ॥ १३ ॥

यियासोर्यातुमिच्छोरिदं लग्नं प्रश्नलग्नं वीक्ष्य दृष्ट्वा विनिहतं निर्जितमरिपक्षं श संघं विद्धि जानीहीति वक्तव्यम् ।

किं तदुच्यते– उदयमुदयपं चेति, उदयं जन्मलग्नं उदयपं जन्मलग्नाधिपं जः जन्मनि चन्द्राश्रितो राशिः, जन्मपं तदधिपं वा यदि तत्कालिकप्रश्नलग्ने भवति, तदापि प्र विनिहतमरिपक्षं विद्धीति वक्तव्यम् । तदित्यनेन जन्मलग्न—जन्मराशी—परामृश्येते, अः ताभ्यां जन्मलग्न जन्मराशिभ्यां यदुपचय गृहं त्रिषडेकादशदशमानामन्यतमं यदि तत्काल भवति तदापि प्रष्टुर्विनिहतमरिपक्षं विद्धि वक्तव्यम् ।

उक्तञ्च--

जन्मर्क्षोदयलग्ने तदधिपयोर्वा यियासतः प्रश्ने ।

त्रिषडेकादशदशमोदयेषु लग्नेषु च जयः स्यात् ॥

शत्रोरिदं वा यदि हिबुकसमेतमिति, अथवा शत्रो रिपोः सम्बन्धीदं प्रागुक्तमुदयं श जन्मलग्नं उदयपं जन्मलग्नाधिपं वा तदधिपतिं वा जन्मलग्न जन्मराश्योरुपचयगृहं वा य तत्काललग्नाद्धिबुकसमेतं चतुर्थस्थानस्थितं सप्तमस्थानगतं वा भवति, तथापि पृच्छतः प्र र्विनिहतमरिपक्षं विद्धीति वक्तव्यम् । अत्र केचिदुपचयगृहं नानुवर्णयन्ति ।

तथा चोक्तं समासयात्रायाम् -

शत्रोर्होराराशिस्तदधिपतिर्जन्मभं तदीशो वा ।

यद्यस्ते हिबुके वा तथापि शत्रोर्विनाशफलम् ॥ १३ ॥

## अधुना पार्ष्णिग्रहादीनां अन्यनृपाणां ग्रहवशेन बलाबलविचारमाह–

पार्ष्णिग्राहःपृष्ठतो भास्करस्य

प्राग्यातव्य स्तिग्मरश्मिश्च याता ।



आक्रन्दोऽर्कात्सप्तमे यःस्थितश्च

तत्तुल्यास्ते शक्तित श्चिन्तनीयाः ॥ १४ ॥

भास्करः सूर्यः स च यस्मिन् राशौ व्यवस्थितः तस्माद्भुक्तभागेषु तथा द्वादशैकादशयो-रन्यतमे राशौ दशमस्यादित्यादिक्रान्तराशेरभुक्त भाग तुल्येषु भागेषु यो ग्रहः स्थितः स च आदित्यस्य पृष्ठतोऽवस्थितस्तस्य पार्ष्णिग्राह इति संज्ञा । सीमान्ततो यातव्य व्यतिरिक्तो राजा पार्ष्णिग्राहो विजिगीषोः शत्रुविजयप्रवृत्तस्य पृष्ठ शुद्धकृत पृष्ठभागस्थ इति । अथार्कात् भुक्तभागेषु द्वितीयतृतीययोरन्यतमे आदित्याक्रान्तराशेर्भुक्ततुल्येषु चतुर्थराशिभागेषु यो ग्र-हस्थितः स आदित्यात्प्राक् व्यवस्थितः तस्य यातव्येति संज्ञा । यस्योपरि यात्रा दीयते । तिग्मरश्मिदित्यः स च याता विजिगीषु पार्ष्णिग्राहेण राजान्तरितो नृप आक्रन्दाख्यः । स चार्कात्सप्तमे यो ग्रहः स्थितः तस्याक्रान्दसंज्ञा ।

अत्र प्राक् पश्चाद्वहुषु वा व्यवस्थितेषु योऽर्कः सन्निकृष्टः स गृहीतव्यः सप्तमेऽप्यर्कोदय-कालास्तलग्नांशस्य सन्निकृष्टो वहुषु विद्यमानेषु आक्रन्दो ज्ञेयः । असति तत्र ग्रहे राश्याधिपो वाच्यः । एते सर्वे एव तत्तुल्यास्तसमा शक्तितो वीर्येण चिन्तनीयो लक्ष्यः । उक्त ग्रहैर्बलवद्भिस्ते वलिनस्थैर्बल हीनैस्तेऽप्यबलाः, मध्यबलैस्तेऽपि मध्यबलाः, यातुरनकूलैर्ग्रहैः पार्ष्णिग्राहादयो ऽनुकुला इति ।

तथा च सिद्धार्थः—

सूर्याक्रान्तांशकात् पश्चात् यो ग्रहः समवस्थितः ।

आभागनवतेर्ज्ञेयः स पार्ष्णिग्राहसंज्ञकः ॥

द्वयोर्बहुषु वा तत्र यो रवेः स्यात्समीपगः ।

अभावात् द्वादशभयो रविराशे रुदाहृतः ॥

एवं सूर्यस्य पुरतः स्थितो यातव्यसंज्ञकः ।

सप्तमे सप्तमांशस्य रवेराक्रान्दसंज्ञकः ॥

स्वयमेव रविर्याता ज्ञेय एषां बलाबलम् ।

पार्ष्णिग्राहादयः सर्वे बलिनोऽबलिन स्मृताः ॥ १४ ॥

## अधुना प्रश्नलग्नवशेन यात्रायां शुभाशुभज्ञानमाह–

[1]जीवज्ञार्कसितापरैः सुतसुहृद्दुश्चिक्य लग्नायगैः ।
सिद्धार्थोऽरिगणान् विजित्य नचिरात्प्रष्टुः स्वमेत्यालयम् ॥
लग्ने वा कुजमन्दयोः सुतगते जीवे रवौ कर्मगे
लाभे कर्मणि वा सितेन्दुसुतयोः प्रष्टुर्जयो निश्चितम् ॥ १५

अस्यार्थः— जीवो, गुरुर्ज्ञो, बुध, अर्को रविः सितः शुक्र अपरे चन्द्र भौमसौराः एतैर्य थासंख्यं सुतसुहृद्दुश्चिक्यलग्नायगतैः पञ्चम–चतुर्थ–तृतीयविलग्नैकादशस्थैरिति, तत्रैतज्ज्ञ

यदाह कश्यपः—

फञ्चमे ज्ञो रविः षष्ठे वर्त्तते नवमे गुरुः ।
भाग्ययोगाऽभिधे योगे निहन्ता वैरिणां सदा ॥
गुरुः केन्द्रे त्रिकोणे वा रविर्लाभे च कर्मणि ।
कल्याणयोगो भूपस्य यातुः कल्याणकृद्भवेत् ॥
दिग्गीशो दिग्बली चेत्स्यात् लग्नेशस्य सुहृद्यदि ।
विजयो नाम योगोऽयं याता राजा जयी भवेत् ।

अत्रि रपि–

सहजस्थानगो भौमो भाग्यस्थश्च बृहस्पतिः ।
चिन्तामणिसमाख्योऽयं यातुः संकल्पपूरकः ॥
लग्ने शुक्रः शशी बन्धौ कर्मस्थाने गुरुर्यदा ।
मृगेन्द्रयोगो विख्यातो यातुः सर्वार्थसाधकः ॥
लग्ने भौमो गुरुश्छिद्रे षष्ठस्थाने च भास्करः ।
मृत्युञ्जयसमाख्योऽयं सर्वशत्रुनिवर्हणः ॥
आपोक्लिमगते चन्द्रे केन्द्रस्थे सुरपूजिते ।
योगः पारावतो यातुः शुक्रे वा लग्नकेन्द्रगे ॥
प्रबलो यदि योगोऽसौ गमने सर्वसिद्धिदः ।
रवि षष्ठे सितश्छिद्रे तृतीये भूमिनन्दनः ॥
पिनाकियोगो विख्यातो यातु विजयकारकः ।



पञ्चमे गुरुः, चतुर्थे बुधः, तृतीयेऽर्कः, लग्ने शुक्रः, एकादशे चन्द्रभौमसौराः, एवं विधे पृच्छा समये योगे जाते प्रष्टा पृच्छकोऽरिगणान् शत्रुसंघान् विजित्य जित्वा सिद्धार्थः कृतकार्यः स्वमालयं आत्मीयगृहं न चिरात् शीघ्रमेवेति आगच्छति । अन्य योगान्तरमाह, लग्ने वा कुजमन्दयोरिति वा शब्दोऽन्ययोग सूचकः कुजो भौम मन्दः सौर एतयोर्लग्ने प्रश्नोदये समवस्थितयोः, सुतगते पञ्चमस्थानस्थे जीवे गुरौ, रवौ आदित्ये कर्मगे–दशमस्थानस्थे । सितः शुक्रः इन्दुतनयो बुध स्तयोर्लाभे एकादशे कर्मणि दशमे वा स्थितयोः, अथैकादशे परे एकादशे तथापि योगः एवं विधे योगे प्रष्टु पृच्छकस्य निश्चितो ध्रुवो विजयो वाच्यः ॥ १५ ॥

## अथान्ययोगान्तरमाह–

अस्मिन्नेव भवेद्योगे यदि [1]शुक्रोऽष्टमाश्रितः ।
प्रष्टारमुद्यमादेव हतशक्ति विंशत्यरिः ॥ १६ ॥

अस्मिन्नेव प्रागुक्ते योगे लग्ने कुजमन्दयोः सुतगे जीवे रवौ कर्मगे लाभे कर्मणि वा इन्दुः सुतस्थिते यदि शुक्रोऽष्टमाश्रितोऽष्टमस्थानस्थो भवति तदा प्रष्टारं पृच्छकं उद्यमात् यत्नारम्भमात्रात् अरिः शत्रुर्हतशक्तिर्नष्टसामर्थो विशति प्रविशति, अकृतयत्नस्यापि यातु–र्विधेयत्वमेति तदधीनो भवति ।

यस्माद्बादरायणः—

लग्ने यमारौ खे सूर्यः शुक्रौ मृत्यौ सुते गुरुः ।
लाभे कर्मणि वा सौम्यो योगेऽस्मिन्निश्चयाज्जयः ॥ १६ ॥

## अथान्ययोग द्वयमाह-

गुर्वर्कशशिभिः सिद्धिर्लग्नारिदशमस्थितैः ।
तद्वल्लग्नारिरन्ध्रस्थैर्जीवशुक्रदिवाकरैः ॥ १७ ॥

गुरुर्जीवः अर्को रवि शशी चन्द्रः एतैर्यथासंख्यं लग्नारिदशमस्थितैः उदयपष्ठकर्मगैः तत्रै-तज्जातं, लग्ने जीवः षष्ठेऽर्कः दशमे चन्द्रः, एवं विधे पृच्छाकाले योगे जाते प्रष्टुः सिद्धिर्भ-

१, अत्र केचिद्यदि जीवोऽष्टमाश्रित इति पठन्ति । तदयुक्तम्

वेदभीष्टार्थप्राप्ति भवतीत्यर्थः । तद्वदिति पूर्ववत् लग्ने जीवः षष्ठ शुक्रः अष्टमे, सूर्यः ए
विधे योगे तद्वत्प्रष्टुर भीष्टार्थसिद्धि भवति ॥ १७ ॥

## अथान्ययोगद्वयमाह–

सचिवाप्ति गुरावाये कर्मण्यसितवक्रयोः ।
चतुर्थेज्येऽष्टमे चन्द्रे जायास्थे च सिते जयः ॥ १८ ॥

गुरौ जीवे आये एकादशस्थाने असितः सौरः वक्रोऽङ्गारकः एतयोः कर्मणि दशमे स्था
स्थितयोः प्रष्टुः सचिवावाप्तिः शत्रुमंत्रि लब्धि भवति । चतुर्थ इति, ज्ञे बुधे चतुर्थस्थे शशिन्य
ष्टमे सिते शुक्रे जायास्थे सप्तमगे प्रस्टुर्जयो भवति ॥ १८ ॥

## अथान्यदपि योगमाह–

कर्मण्यारे रवावाये तृतीयस्थेऽर्कनन्दने ।
चन्द्रे षष्ठे विलग्नस्थैः शेषैः प्रष्टु ध्रुवं जयः ॥ १९ ॥

कर्मणि दशमे आरे भौमे स्थिते रवौ सूर्ये आये एकादशस्थेऽर्कनन्दने सौरे तृतीये, चन्
शशिनि षष्ठस्थे शेषैरन्यैः, बुधजीवशुक्रै विलग्ने प्राग्लग्ने स्थितैः प्रष्टुः पृच्छकस्य ध्रुवोऽवश
जयो भवति ॥ १९ ॥

## अथान्ययोगद्वयमाह–

[1]सहजेऽर्काऽर्कि भूपुत्रैः सौम्यै लग्नगतै जयः ।
गुरौ वा लग्नगे पापै र्लाभे कर्मणि वा स्थितैः ॥ २० ॥

---

नारदः–

१ स्वोच्चस्थे लग्नगे जीवे चन्द्रे चायगते यदि ।
गतो राजा रिपून्हन्ति पिनाकी त्रिपुरं यथा ॥



अर्को रविः, आर्किः सौरः भूसुतो भौमः, एतैः सहजे तृतीयस्थाने स्थितैः सौम्यैः, बुधगुरु-
शुक्रैः, लग्नगतैः पृच्छकस्य जयो भवति । गुरावेति, वा शब्दः प्रकारार्थः । गुरौ जीवे लग्नगते
पापैरादित्यभौमसौरै र्लाभे कर्मणि एकादशे दशमे वा द्वयोः स्थानयोः स्थितैः प्रष्टुर्जयो
भवति ॥ २० ॥

## अथान्ययोगमाह–

[1]माहेययमयोः षष्ठे लग्ने गुरुशशाङ्कयोः ।
सितचन्द्रजयो रन्त्ये जयः कर्मणि चोष्णगौ ॥ २० ॥

---

शुक्रे त्रिकोणे केन्द्रस्थे लग्ने चन्द्रेऽथवा रवौ ।
शत्रून् हन्ति गतो राजा ब्रह्मद्वेषः कुलं यथा ॥

नारदसंहिता अ. २२

रत्नावल्याम्–

उदयारिनभस्तलगै दिनकृद्यमशीतकरैः ।
न भवन्त्यरयोऽभिमुखा हरिणा इव केशरिणः ॥

दैवज्ञवल्लभे–

ज्ञे सितेन सहितेऽस्तगे विधौ बन्धुगे प्रवसता महीभुजा ।
सङ्गरे रिपुगणो विकीर्यते तूलराशिरिव मातरिश्वना ॥
मूर्तिवित्तसहजेषु संस्थितः शुक्रचन्द्रसुततिग्मरश्मयः ।
यस्य यान समये रणाङ्गणे तस्य यान्ति शलभा इवारयः ॥

१ प्रभ्रष्टद्युतितारका स्फुटतटी प्राची भवेन्निर्मला
　　त्वीषद्रक्तविलोहिता न धवला दैवैः सदा वाञ्छिता ।
नो वारं न तिथिं न चापि करणं लग्नञ्च नापेक्षते
　　हत्वा दोषसहस्रकञ्च यमुपा नूनं करोत्युन्नतिम् ॥
मध्यव्योमप्रयाते स्फुरदनलनिभे केसरैः स्वर्कबिम्बे
　　छाया साध्वीव कान्ता प्रचलति पुरुषे यत्र तत्पादलग्ना ।

माहेयोऽङ्गारकः यमः सौरः, एतयोः षष्ठे षष्ठस्थानस्थितयोः, गुरुर्जीवः शशांकः चन्द्रः, एतयोर्लग्ने स्थितयोः, सितः शुक्रः, चन्द्रजो बुधः, एतयोरन्ते द्वादशे स्थितयोः, उष्णगौ सूर्ये कर्मणि दशमे स्थाने स्थिते एवं विधयोगे प्रष्टुर्जयो वाच्यः ॥ २० ॥

## एवं शुभयोगान् उक्त्वाऽधुनाऽशुभान् योगान् वक्ष्यामीत्याह–

इति योगाः शुभाः प्रोक्ताः प्रश्नकाले यियासतः ।
अशुभा ये भवन्त्यत्र तान् प्रवक्ष्याम्यतः परम् ॥ २१ ॥

इत्येवं प्रकारा ये प्रागुक्ता योगा स्ते प्रश्नकाले पृच्छासमये यियासतोर्गच्छतः शुभाः प्रोक्ताः कथिताः । नान्यस्य प्रष्टु यियासोरेवेति । अत्रास्मिन् प्रश्नकाले यियासोरेव येऽशुभा अनिष्टा योगा भवन्ति । तान् योगान् अतोऽस्मात् परं अनन्तरं वक्ष्यामि कथयिष्यामि ॥ २१ ॥

## अधुनाऽशुभयोगद्वयमाह–

स्युद्धे भङ्गो यमेन्द्वारैर्नवमात्मजलग्नगैः ।

---

तावत्सौ रर्न वृष्टिः कुजकृतमशुभं नैव कृच्चं न योगः
सम्मानारोग्यसंपत्तिविपथयुवतिं तत्र गन्ता लभेत ॥
यावत् सिन्दूरवर्णं गगनतलगतं भानुबिम्बं च नास्तं
यावन्नो दिक्षु शान्तिं व्रजति खुरपुटैरुद्धृतो रेणुसङ्घः ।
तावन्नैवारित दोषः प्रभवति न च सा क्रूरदृष्टि ग्रहाणां
यात्रायां वा विवाहे सकलशुभकरी सर्वकार्येषु सिद्धिः ॥

–समरयात्रायाम् ।

यदाह अत्रिः–
२. अन्योऽन्यक्षेत्रगावेकक्षेत्रे वा कविभास्करौ ।
मृत्युयोगोऽयमाख्यातो यातु मृत्यु प्रदायकः ॥
एकर्क्षगौ जीवशुक्रौ स्यातामन्योऽन्यसप्तगौ ।
भयङ्कराख्ययोगोऽयं यातु भीतिप्रदः स्मृतः ॥



शशाङ्कयमयोर्लग्ने मृत्युर्भूपुत्रदृष्टयोः ॥ २२ ॥

यमः शनिः, इन्दुश्चन्द्रः, आरो भौमः, एते यथासंख्यं नवमात्मजलग्नगैः शनैश्चरो नवमे पञ्चमे चन्द्रः, लग्ने भौमः, अस्मिन् योगे प्रष्टुर्युद्धे संग्रामे भङ्गः पलायनं भवति । शशाङ्कयमयोरिति, शशाङ्कश्चन्द्रः यमः सौरः स्तयोर्लग्ने स्थितयोश्च भूपुत्रेणांगारकेन दृष्टयोरवलोकितयोः पृच्छकस्य मृत्युर्मरणं भविष्यति ॥ २२ ॥

## अथान्ययोगद्वयमाह–

सवक्रे निधने मन्दे मृत्युर्लग्ने दिवाकरे ।
चन्द्रे वा त्र्यायमृत्युस्थे ससूर्ये वा वदेत् वधम् ॥ २३ ॥

मन्दे सौरे स वक्रे वक्रेणांगारकेन सहिते तथा भूते निधनेऽष्टमस्थाने स्थिते दिवाकरे सूर्ये लग्ने प्रष्टुर्मृत्युर्भवति । चन्द्रे शशिनि ससूर्ये रविणा संयुक्ते त्र्यायमृत्युस्थे तृतीयैकादशाष्टमस्थानानामन्यतमस्थानस्थे, पृच्छकस्य वधं मरणं प्रवदेत्, वा शब्दोऽत्र प्रकाराय ॥ २३ ॥

## अथान्ययोगद्वयमाह–

वक्रज्ञशशिभिर्द्यूने प्रष्टुर्नाशोऽभिगच्छतः ।
क्षुदार शत्रुवृद्धिश्च लग्ने माहेयशुक्रयोः ॥ २४ ॥

द्यूने सप्तमे वक्रज्ञशशिभिः वक्रो भौमः ज्ञो बुधः शशी चन्द्रः, एतैर्द्यूने सप्तमे सति प्रष्टुः गच्छतः पथि विनाशो मरणं भवति । क्षुदारेति, माहेयो भौमः शुक्रः सितः एतयोर्लग्ने उदये स्थितयोः पृच्छकस्य क्षुद् बुभुक्षा, आरो मरणं शत्रुवृद्धिश्च भवतीति ॥ २४ ॥

---

भार्येशो व्ययगो नीचः पुत्रस्थाने शनैश्चरः ।
विदारिक समाख्योऽयं यातुः पत्नीं निहन्त्यसौ ॥
मार्गेशः शनिसंयुक्तः सप्तमेऽस्तङ्गतो ग्रहः ।
विदारिकमिमं मन्दो यातुः प्रियतमां हरेत् ॥
सप्तमे चन्द्रमास्तमात्सप्तमे नीचखेचरः ।
कुटुम्बहारको योगो यातुः प्रियतमां हरेत् ॥

## अथान्ययोगमाह–

चन्द्रावनिजयोर्मूर्तौ षष्ठे शशिजशुक्रयोः ।
निधनस्थे सहस्रांशौ विज्ञेयो मन्त्रिणो वधः ॥ २५ ॥

चन्द्रः शशी अवनिजो भौमः, एतयोर्मूर्तौ लग्ने स्थितयोः शशिजो बुधः शुक्रः सितः एतयोः षष्ठस्थानस्थितयोः सहस्रांशावर्के निधनस्थेऽष्टमगे प्रष्टुः मन्त्रिण सचिवस्य वधो मृत्यु विज्ञेयो ज्ञातव्यः ॥ २५ ॥

## अथान्ययोगद्वयमाह–

तनयस्य वधः प्रष्टुः पापैरुदयपुत्रगैः ।
स चन्द्रे रुधिरे लग्ने भङ्गः सूर्यात्मजे क्षिते ॥ २६ ॥

पापै रविभौमसौरैः उदये लग्ने पुत्रस्थाने पञ्चमे गतैः। एतत् स्थानद्वयं वर्जयित्वा नान्यत्र स्थितैः पृच्छकस्य तनयस्य पुत्रस्य वधो मरणं भवति। स चन्द्र इति। रुधिरे अङ्गारके सचन्द्रे शशियुक्ते लग्ने उदयस्थिते तत्र सूर्यात्मजेन सौरेणेक्षिते दृष्टे पृच्छकस्य भङ्गः पलायनं भवति ॥ २६ ॥

## अथान्ययोगद्वयमाह–

घूननैधनयोश्चन्द्रे लग्नयाते दिवाकरे।
विपर्ययो वा यातस्य त्राशभङ्ग वधागमाः ॥ २७ ॥

घूनं सप्तमं नैधनमष्टमं अनयोरन्यतमस्थे चन्द्रे शशिनि दिवाकरे सूर्ये ग्नं याते उदयस्थे एको योगः। अस्मिन्नेव योगे विपर्यते विपरीतस्थे, अयमर्थः घूननैनधनयो सूर्ये लग्नं याते निशाकरे द्वितीयो योगः। अस्मिन् योगद्वये पृच्छकस्य यातस्य गतस्य त्राशभङ्ग-बधागमाः त्रासो भीतिः भङ्गः, पलायनं वधो मरणं एषामागमा प्राप्तयो भवन्ति ॥ २७ ॥



## अथान्ययोगान्तरमाह–

द्वित्रिकेन्द्रस्थितैः पापैः सौम्यैश्च बलवर्जितैः ।
अष्टमस्थे निशानाथे प्रष्टु र्बन्धवधात्ययः ॥ २८ ॥

पापैः रविभौमसौरैः श्च द्वित्रिकेन्द्रस्थितैः द्वयोः केन्द्रयोः त्रिषु केन्द्रेषु वा स्थितैः सौम्यैः शुभग्रहैः बुधजीवशुक्रैर्बलवर्जितैः वीर्यहीनैः निशानाथे चन्द्रे लग्नादष्टमस्थे पृच्छकस्य बन्धव-धात्ययाः बन्धोर्बन्धनं, वधस्ताडनं अत्ययो विनाशः एते भवन्ति । अत्र केचिल्लग्नाद् द्वितीय-तृतीयकेन्द्रस्थै पापैरितीच्छन्ति तदसत् ।

यस्मात वादरायणः-

त्रिकेन्द्रगैर्यमाराकैः केन्द्रद्वयगतैस्तथा ।
शुभैर्हीनबलैश्चन्द्रे ऽष्टमे यातु र्वधं वदेत् ॥ २८ ॥

## अथान्ययोगान्तरमाह–

कुजचन्द्रमसौर्घूने स्वभेदोऽर्कबुधोदये ।
तद्वन्मन्दारयोर्युद्धे भङ्गः सौम्यार्कयोस्तथा ॥ २९ ॥

कुजोऽङ्गारकः चन्द्रः शशी, एतयोर्घूने सप्तमस्थाने स्थितयोः अर्कबुधयोः सूर्यज्ञयोः, उदये लग्ने स्थितयोः स्वभेदः स्वकीयैरात्मीयैरेव कटक भेदो भवति। मन्दः शनैश्चरः, आरो भौमः, एतयोः तद्वत् तेनैव प्रकारेण प्रावत् सप्तमे स्थितयोः सौम्यार्कयोः बुधार्क्योरतथा तेनैव पूर्वोक्तेन प्रकारेण लग्ने स्थितयो युद्धे भङ्गः पलायनं भवति ॥ २९ ॥

## अथान्यदपि योगद्वयमाह–

सर्वैस्तु नवगै राजा हन्ति मन्त्रिपुरोहितान् ।
योगेऽत्राथोदये चन्द्रे सुतरथपतिदेशिकान् ॥ ३० ॥

सर्वैरशेषैः सप्तभिर्ग्रहैः लग्ननवमगै राजा नृपः प्रष्टा स्वयमेवात्मीयान् पुरोहितान् सचि-वान् हन्ति व्यापादयति। अत्रास्मिन् योगे सर्वै ग्रहै र्नवमगैः, अथ शब्दः पादपूरणे उदये

लग्ने चन्द्रे स्थिते राजा स्वयमेव सुतस्थपतिदैशिकान् , सुतः पुत्रः स्थपतिः कर्माधिपः दैशिका देशवासिमङ्ग्जनाः, एतान् हन्ति ॥ ३० ॥

## अथान्यानपि योगानाह–

अर्कार्कसुतयो लग्ने दृष्टयोः क्षितिसूनुना ।
[1]चन्द्रेऽस्तेऽबलिभिः सौम्यैः प्रष्टुः सेनापते र्वधः ॥ ३१ ॥

अर्कः आदित्यः तत्सुतः सौरः, एतयोर्लग्ने स्थितयोः क्षितिसूनुना भूपुत्रेणाऽङ्गारकेन दृष्टयोरवलोकितयोः चन्द्रः शशिनि अस्तस्थे सप्तमस्थे सौम्यैः शुभग्रहै यत्र तत्रावस्थितैरबलिभि वीर्यरहितैः पृच्छकस्य सेनाधिपते श्चमूनाथस्य मरणं भवति अत्र केचिद्बलिभिः सौम्यैरिति च्छन्ति तदयुक्तम् ॥ ३१ ॥

यस्माद्बादरायणः—

लग्ने सपुत्रो दिनकृत भौमदृष्टोऽस्तगः शशी ।
वीयहीनैः शुभैः प्रष्टु श्चमूनाथ वधं वदेत् ॥ ३१ ॥

## अन्यदप्याह–

निधने वक्रयमयो श्चन्द्रेऽस्ते लग्नगे रवौ ।
ज्ञे तृतीये च विक्रम्य समन्त्री हन्यते नृपः ॥ ३२ ॥

वक्रोऽङ्गारकः यमः शनिः एतयोर्निधनेऽष्टमस्थाने स्थितयोः, चन्द्रे शशिनि अस्ते सप्तमस्थे रवावर्के लग्नगे, ज्ञे बुधे तृतीये एवं विधे योगे प्रष्टारं राजानं विक्रम्य आक्रम्य समन्त्र सचिवेन सहितो राजा शत्रुभि र्हन्यते बध्यत इति ॥ ३२ ॥

## अथ सामान्येन शुभशुभज्ञानार्थं योगमाह–

मूर्द्धोदयं शुभसुहृद्युतमीक्षितं वा
लग्नं शुभाश्च बलिनः शुभवर्ग लग्नम् ।

[1] तस्मात् , चन्द्रेऽस्ते विबलैः सौम्यैरिति भ्रान्ति रहितः पाठः



सिद्धिप्रदं भवति नेष्टमतोऽन्यथाय–
ज्जन्मप्रयाणफलयुक्तिभिरन्यदूह्यम् ॥ ३३ ॥

मूर्द्धोदयं शीर्षोदयं यदि लग्नं भवति तच्च यदि शुभग्रहयुतं दृष्टं भवति, अथवा सुहृदा लग्नाधिपतिमित्रेण युक्तं वीक्षितं वा भवति । शुभसुहृद्ग्रह मत्रोपलक्षणार्थं तथा स्वस्वामिना युत दृष्टं भवति । तथा यत्र तत्रस्थाः शुभाः सौम्यग्रहाः बलिनो वीर्यवन्तो भवन्ति । शुभग्रहाणां वर्गं लग्नगतं भवति । वर्गश्च "गृहहोराद्रेष्काणनवांशद्वादशभागत्रिंशद्भागाः" तेषां शुभग्रहेसत्वं चतुर्भ्योऽधिकं भवति । तदा पृच्छकस्य सिद्धिप्रदं अभीष्टार्थदं भवति । एवं यथा यथा गुणाधिक्यं तथा तथा सत्फलाधिक्यमिति, नेष्टमतोऽन्यथेति । अतोऽस्मादुक्तादन्यथा अन्येन प्रकारेण नेष्टं अशुभं, एतदुक्तं भवति लग्नं पृष्टोदयं तच्च पापग्रहेण स्वामिशत्रुणा युतं दृष्टं सौम्यग्रहबलरहिता, तत्काल लग्नञ्च पापवर्गाधिक्यं भवति तदा नेष्टम् , असिद्धिप्रदं भवति, अर्थादेव लग्नस्य व्यामिश्रत्वान्महत्क्लेशात्सिद्धिः, तदपि भाविसत्फलत्वे, भाव्यशुभाधिकत्वे, तु प्रारम्भे किञ्चिच्छुभफलत्वेऽपि परिणामेत्वसिद्धिरिति जन्मप्रयाणफलयुक्तिभिरन्यदूह्यमिति । जन्मनि ये शुभाराजयोगचन्द्रयोगादय उक्ता, । अशुभाः केमद्रुमाद्यनिष्टयोगाः । एषां शुभशुभयोगानां यानि फलानि तथा प्रयाणे यात्रायां ये योगाः शुभाशुभा उक्ता तेषां यानि फलानि, तथात्र ज्ञात शकुननिमित्तफलपुष्पमङ्गलद्रव्याणां दर्शनं तेषां यानि फलानि यथा संभवं जातिकुलदेशान् बुध्वा ऊह्यम् , तत्करणीयम् । शुभेषु तत्काल दृष्टेषु यातुः शुभफलं, अशुभेष्वशुभं व्यामिश्रेषु मिश्रफलमिति वाच्यम् । जन्मनि ये सत्फलदा ग्रहा स्तेषां दशान्तर्दशासाहित्येन तत्कालप्रश्नोद्भवयोगसत्फलं प्रचुरं भवतीत्यनयादिशा । उभयेऽनिष्टेऽनिष्टं व्यामिश्रे मिश्रफलं, तत्रापि जन्माधीनं फलं परिणामे प्रश्नाधीनं फलं कार्यारम्भ समये वेद्यम् ॥ ३३ ॥

## अथान्येऽपि योगान्तरमाह–

निधन हिबुकहोरा सप्तमर्क्षेषु पापा–
नशुभकृतकराः स्युः पृच्छतो मानवानाम् ।

दशमभवनयुक्तेष्वेषु सौम्याः प्रशस्ताः

सदसदिदमशेषं यानकालेषु चिन्त्यम् ॥ ३४ ॥

निधनमष्टमं, हिबुकं चतुर्थं, होरालग्नं, सप्तर्क्षं सप्तमस्थानं, एतेषु स्थानेषु यदि पापा भवन्ति तदा पृच्छतां प्रष्टॄणां मानवानां पुरुषाणां न शुभफलकराः स्यु भवेयुः । शुभफलमिष्टफलं न कुर्वन्ति । अर्थादेव परिशेषस्थानेषु व्यवस्थिताः, अशुभफलकराः स्युः । दशमभवनयुक्तेष्विति । एतेष्वेव निधनहिबुकहोरासप्तमर्क्षेषु दशमभवनयुक्तेषु दशमस्थानसहितेषु सौम्याः शुभग्रहाः प्रशस्ताः शुभफलाः । एवं यथा गुणाधिक्य तथा तथा शुभाधिक्यं अथ यदिदं सदसत् शुभाशुभं प्रश्नकालेऽभिहितं तदशेषं सर्वं यानकाले यात्रासमयेऽपि विचिन्त्यं विचार्यम् । यतदुक्तं भवति प्रश्नकाले ये शुभयोगा अभिहिता ये जातकोक्ताः शुभयोगास्ते सर्वे यात्राकाले भवन्ति, तदा तथा विधं शुभाशुभफलं आदेश्यमिति ।

इति भट्टोत्पलविरचितायां यक्षेऽश्वमेधीययात्राविवृत्तौ प्रश्नाध्यायो द्वितीयः ॥ २ ॥





# अथातस्तिथिफलाध्यायो व्याख्यायते

## तत्र प्रश्नलग्नाद्विदितशुभफलस्य यातु र्यात्रायां तिथ्याद्युपयोगी प्रशस्तकाल उपदेश्य इत्यत स्तत्फलज्ञानमाह ।

[१]नन्दाभद्राजयारिक्तापूर्णा–

चैताः ॥ लमेवं विदध्युः ।

नेष्टामध्या प्रवराश्चेति शुक्ले

कृष्णे चिन्त्या स्ताः क्रमेण प्रतीपम् ॥ १ ॥

प्रतिपत्प्रभृतयः पञ्चदशतिथयः तासां पञ्चानां यथासंख्यं नन्दादिकाः पञ्चसंज्ञाः, तद्यथा प्रतिपन्नन्दा, द्वितीया भद्रा, तृतीया जया, चतुर्थी रिक्ता, पञ्चमी पूर्णा, एवं क्रमेण षष्ठ्याद्यादि पुनरप्येकादशाद्याः,. तेन प्रतिपत्षष्ठ्यैकादश्यो नन्दासंज्ञाः, द्वितीयासप्तमीद्वादश्यो भद्रासंज्ञाः, तृतीयाष्टमीत्रयोदश्यो विजयाः, चतुर्थीनवमीचतुर्दश्यो रिक्ताः, पञ्चमीदशमीपौर्णमास्यः पूर्णा इति । एताः फलमेवं विदध्युः, एता यथोक्ताः तिथयः नामसदृशंफलं दध्युः कुर्युः । तद्यथा नन्दा आनन्दं करोति समृद्धिं वा भद्रा भद्रं मङ्गल्यं, विजया विशेषेण जयं, रिक्ता रिक्तं नैष्फल्यं शून्यं, पूर्णा पूर्णं सकलार्थसिद्धिं करोतीति । नेष्ट मध्य प्रवरा इति संज्ञारूपं फलं विदध्युः । तत्रायं विशेषः शुक्ले शुक्लपक्षे एताः तिथयः नेष्टामध्याप्रवरा यथासंख्यं, तत्र यत प्रथम पञ्चकं तत्स्वनाम सदृशफलापेक्षया नेष्टं, अत्यल्पं फलं, ततः द्वितीय पञ्चकं मध्यफलं, तृतीयपञ्चकं प्रवरफलं श्रेष्ठफलं परिपूर्णफलमित्यर्थः इति । कृष्णे कृष्णपक्षे तु पुरस्तादेव नन्दाद्या तिथयः प्रतीपं वैपरित्येन चिन्त्या लक्षणीया, तेन प्रथमाः पञ्चतिथयः प्रवराः, ततः परं पञ्चमध्या ततः परं पञ्चनेष्टा इति ॥

१ नन्दाभद्रा विजया चाथरिक्ता इति मुख्यपाठः ।

उक्तञ्च--

नन्दा भद्रा विजया रिक्ता पूर्णा च नाम सदृशफलाः ।
न्यूनसमेष्टास्तिथयः शुक्ले कृष्णे प्रतीपास्ताः ॥

अधुना शैवमतान्तरमाह–

सर्वाशस्तास्तिथयः शुक्लपक्षे
हित्वा रिक्तां बहुलेऽन्त्यं च कश्चित् ।
षष्ठ्यष्टम्योर्वसुलब्धापि याता
द्वादश्यां वा नाशमाशु प्रयाति ॥

कैश्चिन्मुनिभिर्वसिष्ठादिभिः, एता नन्दाद्यास्तिथयो रिक्ता वर्जिताः सकलाः सर्वाः शुक्लपक्षे प्रशस्ताः प्रशस्तफला उक्ता। तथा बहुले कृष्णपक्षे अन्त्यं तृतीयावृत्तौ पतितमेकादश्यायमान्तदिनपञ्चकं त्यक्त्वा सर्वा एव शोभनांशस्ता उक्ता। एतदाचार्यस्य नाभिप्रेतम् ॥ १ ॥

## यतोऽस्य प्रतिज्ञा–

ज्योतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम् ।
स्वयमेव विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये, इति ॥ २ ॥

षष्ठ्यष्टम्योरिति कैश्चिदनुवर्तते। षष्ठ्यामष्टम्यां च तथा द्वादश्यां तिथावुभयोरपि पक्षयोर्यो याता गच्छति स च वसु धनं लब्ध्वाऽपि प्राप्यापि, आशु क्षिप्रमेव नाशं प्रयाति। तथा च

भगवान् वसिष्ठः—

नन्दा भद्रा जया रिक्ता पूर्णा चैव तु पञ्चमी ।
तिथयः प्रतिपन्मुख्या नामतुल्यफलप्रदाः ॥
शुक्ले पक्षे पुनश्चान्त्यं त्र्यंशं हित्वा यथाक्रमम् ।
नामानुरूपफलदाः पक्षयोरुभयोरपि ॥
न्यूनाः समाः श्रेष्ठफलाः शुक्लेपक्षेपरे च ताः ।
वैपरीत्येन विज्ञेया विशेषोऽत्राभिधीयते ॥



षष्ठ्यां तिथौ तथाष्टम्यां द्वादश्यां यस्तु गच्छति ।
सोऽपि वित्तचयं लब्ध्वा क्षिप्रमेव प्रणश्यति ॥

## अथात्रैवान्यद्विशेषमाह–

१प्रतिपदि फलमेके पञ्चदश्यां च नेष्टं
जगुरिदमिति तज्ज्ञैर्याप्यमेवावधार्यम् ।
किमपि कमपि नूनं तैः समीक्ष्योक्तमेत–
त्समवचनविघाते युक्तता केन चिन्त्या ॥ ३ ॥

ये केचिन्मुनयो देवलादयः प्रतिपत्तिथिं पौर्णमासीं च नेष्टमतः प्रतिपदि पञ्चदश्यां च नेष्टं अशोभनं फलं जगुरुक्तवन्तः।

---

यदाह वसिष्ठः

१ वलक्ष पक्षे प्रतिपत्प्रयाणे भङ्गप्रदा या निधनप्रदा वा ।
यशस्करी भूरिधनप्रदा च या पञ्चमी मृत्युकरी च षष्ठी ॥
सप्तमी विजयदा ह्यथाष्टमी शोक--दुःख-भयदामय प्रदा ।
सर्व दुःखशमनी यशस्करी लाभदा च दशमी निरन्तरम् ॥
पशुप्रदामानकरीसुगन्धरक्ताम्बरानेकशुभप्रदाः स्यात् ।
एकादशी चित्रमृगप्रभूताधान्याकराद्युत्तम वस्तुदा स्यात् ॥
भूरिभूति नाशिनी भूरिशर्म हारिणी
भूरिभीति दायिनी द्वादशीप्रभङ्गदा ।
त्रयोदशी सुभोगदा विपक्ष पक्षनाशिनी
विनाशदाथ पूर्णिमा यशः क्षयं करोत्यमा ॥

नारदोऽपि

षष्ठ्यष्टमीद्वादशिकारिक्तामावर्जितासु च ।
यात्रा शुक्लप्रतिपदि निधनाय भवेदिति ॥

नारदसंहिता अ. ३३, श्लो. ३

तथा च देवलः—

प्रतिपच्छुक्लपक्षेतु पञ्चदश्यां तथैव हि ।
यानाभियाना स्वगृहं वित्तनाशं समश्नुते ॥

एवमन्यैः शुभमुक्तं अन्यैरशुभमुक्तं इति शब्दो हेतौ. तस्मादिदं फलं तज्ज्ञः पण्डितैरेवावधार्यं भवति वा न भवति वेत्येतदुपलक्षणार्थं शुभत्वं न्चाशुभत्वं च परिहार्यमित्यर्थः।। कुतो हेतोरवधार्यमित्याह । नूनं निश्चयं तैरप्याचार्यैः किमपि किञ्चित्कचित् शास्त्रान्तरं समीक्ष्य पर्यालोच्य एतदुक्तं कथितं तत्र न ज्ञायते कैः सम्यगालोचितं केन नालोकितं पर्याप्तं,

## तिथियोगिनी चक्रम्

| | | |
|---|---|---|
| ई. महालक्ष्मी ८।१० | पू. ब्राह्मी १।६ | आ. कौमारी ३।११ |
| माहेश्वरी उ. २।१० | | वाराही द. ५।१३ |
| चामुण्डा ७।१५ वा. | इन्द्राणी ६।१४ प. | वैष्णवी ४।१२ नै. |

पूर्वस्यामुदये ब्राह्मी प्रथमे नवमे तिथौ ।
माहेश्वरी चोत्तरस्यां द्वितीया दशमी तिथौ ॥
एकादश्यां तृतीयायां कौमारी वह्निकोणगा ।
चतुर्थी द्वादशी प्रोक्ता वैष्णवी नैर्ऋती तथा ॥



सर्वेषां मुनित्वात्, तस्मात्समचनविघाते तुल्ययोर्वाक्ययोर्विरोधे सति केन मतेन युक्तता चिन्त्या, इदं युक्तं इदमयुक्तमिति, केन चिन्त्यं मनुष्यत्वात् । तस्मात्परिहर्तव्यं केनचित् 'मुनिवचनविरोधे युक्तता केन चिन्त्येति" पठन्ति मुनीनां परस्परं वचन विरोधे सति केन युक्तता चिन्त्येति। तस्मात्परिहर्तव्यमित्यर्थः । अत एव शिष्टा सिताद्यप्रतिपत् पष्ठ्यष्टमी रिक्ता द्वादशी पूर्णिमामात्यजन्ति । परं तत्रापि विशेषोऽस्त्येव ग्रन्थान्तरे ॥ ३ ॥

इति भट्टोत्पलविरचितायां यद्येऽश्वमेधीययात्राविवृत्तौ तिथिफलाध्यायस्तृतीयः ॥ ३ ॥

वाराही दक्षिणे भागे पञ्चमी च त्रयोदशी ।
षष्ठी चतुर्दशी चैव इन्द्राणी पश्चिमे स्थिता ॥
पौर्णिमायां च सप्तम्यां वायव्ये चण्डिकोदयः ।
नष्टचन्द्रदिनाष्टम्यां महालक्ष्मीः शिवालये ॥
जयदापृष्ठदक्षस्था भङ्गदा वाम सन्मुखी ।
इति स्वरोदये ॥
यत्रोदयगता देवी ततो यामार्द्धं भुक्तिदा ।
भ्रमन्ति तेन मार्गेण भवेत्तत्कालयोगिनी ॥
इति स्वरोदये ।



# अथ नक्षत्रविजयाध्यायो व्याख्यायते

## तत्र येषु नक्षत्रेषु यां दिशं गच्छन्ति तानि नक्षत्राणि दर्शयितुमाह—

दिशिदिशि बहुलाद्याः सप्तकाः प्राक् प्रवृत्ताः
पवनदहनदिक्स्थस्तिर्यगत्युग्रदण्डः ।
सुरपतिरपि कृच्छ्रं याति तं लङ्घयित्वा
न तु भवति विरोधो दिक्षुदण्डैक्य गासु ॥ १ ॥

दिशि दिशि प्रतिदिशं बहुलाद्याः बहुला कृत्तिका आद्या येषां सप्तकानां ते बहुलाद्याः सप्तकाः कृत्तिकाद्या श्चत्वारः सप्तकाः दिशि दिशि प्रवृत्ता व्यवस्थिताः कृत्रिकादीनि सप्तसप्त नक्षत्राणि प्रागाद्यासु चतसृषु दिक्षु स्थितानि. तद्यथा कृत्तिका रोहिणी मृगशीर्षा–आर्द्रा–पुनर्वसु–तिष्या–ऽश्लेषाः सप्त पूर्वस्याम्, मघापूर्वफाल्गुन्युत्तरफल्गुनीहस्तचित्रास्वातिविशाखा दक्षिणस्याम्, अनुराधाज्येष्ठामूलपूर्वाषाढोत्तराषाढाभिजिच्छ्रवणः पश्चिमायाम, धनिष्ठाशतभिषकपूर्वभाद्रपदोत्तरभाद्रपदारेवत्यश्विनीभरण्युत्तरस्याम् ।

अथ तैरेव परिघलक्षणमाह। पवन दहन दिक्स्थ इति, पवनदिग्वायवी, दहनदिगाग्नेयी, अनयो स्तिर्यक्, अत्युग्रतरो दण्डः, तं दण्डं सुरपतिर्देवराडपि लङ्घयन्तो उल्लङ्घ्य कृच्छ्रं क्लेशं याति प्राप्नोति। दण्डस्यैकगतासु एक मार्गाश्रितासु दिक्षु गतस्य विरोधो नभवति ।

एतदुक्तं भवति, यथा प्राक्द्वारिकैर्नक्षत्रैरुत्तरामुत्तरामुदग्द्वारिश्च पूर्वाऽत्र विरुध्यते, तथा दक्षिण द्वारिकैः पश्चिमां पश्चिम द्वारिकैर्दक्षिणामिति, उक्तञ्च प्राच्यादि सप्तसप्तेति ।

तथा च यवनेश्वरः—

आग्नेय पूर्वाणि च सप्तभानि
क्रमेण पूर्वादि दिगाश्रितानि ।



द्वाराणि मुख्येष्वनुकल्पितानि
तेषु प्रयाणेऽनु दिशं जयः स्यात् ॥
प्राचीमुदग्द्वारिभिरभ्युपेया—
त्प्राग्द्वारिकै श्चोडुभिरप्युदीचिम् ।
तथापि याम्यामपराश्रितैर्वा
याम्याश्रितै श्चाप्यपरां प्रयायात् ॥
अतोऽन्यथा यः परिघादि भेदं
कुर्वन् जयैषी नृपतिः प्रयायात् ।
स्वभूरि नागाश्च बलोत्कटोऽपि
संग्राम दुर्गोभसि नाशमेति ॥ १ ॥

## अथात्रैव विदिक्षु गमनर्क्षाणि शूलर्क्षं वर्जं सर्वनक्षत्रगमनमाह–

[1]प्राग्द्वारिकैरनलदिक् प्रविरोधमेति
शेषाः प्रदक्षिणगताः विदिशः प्रकल्प्या ।
उलङ्घ्य दण्डमपि काममियान्नरेंद्रः
शूलं विहाय यदि दिङ्मुख लग्नशुद्धिः ॥ २ ॥

---

स्पष्टमाह गुरुः

१ "प्राग्द्वारिकैश्च नक्षत्रै राग्नेयां शोभना गतिः ।
दक्षिणस्थैश्च नैर्ऋत्यां वायव्यां वारुणै रपि ॥
ऐशान्यां दिश्युदक्संस्थै र्यात्रातीव शुभप्रदा ।"

वसिष्ठोऽपि

"पुरुहूतदिशं पुरन्दरर्क्षे नेयाद्याम्यदिश त्वजाङ्घ्रिधिष्ण्ये ।
ज्वलनाप्यदिशं पितामहर्क्षे शूलाख्याप्यथ सौम्यमर्यमर्क्षे ॥
शूल संज्ञानि धिष्ण्यानि शूलसंज्ञश्च वासरः ।
यायिनां मृत्युदाः शीघ्रमथवा चार्थ हानिदा ॥"

प्राक्द्वारिकैः कृत्तिकादि सप्तभिर्नक्षत्रैः अनलदिगाग्नेयाशां पूर्वदक्षिणां गच्छतो नविरोध-मेति, शेषा अन्याश्च विदिशो नैऋत्य वायव्यैशान्यः प्रदक्षिणगताः प्रकल्प्याः प्रादक्षिण्येन गच्छतो नविरुध्यन्ते, तेन दक्षिणद्वारिकैर्नैऋती, पश्चिमद्वारिकै र्वायवी उत्तरद्वारिकैरैशानीम् । उल्लङ्घ्य दण्डमिति । आत्ययिक कार्ये नरेन्द्रो राजा दण्डमप्युल्लङ्घ्य अतिक्रम्य कार्यवशात् कामं यथेष्टं इयात् गच्छेत, किन्तु शूलं शूलनक्षत्रं वारं च विहाय वर्जयित्वा अन्यैर्यायात् । यदि दिङ्मुख लग्नशुद्धिः दिङ्मुख लग्नानि प्रति दिशमुक्तानि "प्रागादीशाः क्रियवृषनृयुक्कर्कटाः सत्रिकोणा इति" ॥

दिङ्मुखलग्नस्य यदि शुद्धिः ग्रहाणां च शुभस्थान संस्थित्या आनुकूल्यं त्रिविधोत्पातादिना अनाहतत्वं अथवा दिङ्मुख शुद्धिः यस्यां दिशियात्रा तस्यां मुखशुद्धिः प्रतिशुक्र प्रति-बुधौ नभवतः । शुभशकुनदर्शनं नक्षत्रानुकूल्यं, दिक्पते रनभिमुखत्वं लालाटमिति यावत्, तेन लालाटं विहाय केन्द्रत्रिकोणाय गतत्वं दिक्पतयः !

"प्रागाद्या रविशुक्रलोहिततमः सौरेन्दुवित्सूरयः" ॥ इति ॥

उत्पातर्क्षादि सद्भावाभावत्वं लग्नस्य च सम्यक् शुद्धि र्यात्रा कर्तव्या नान्यथेति ।

## अधुना प्रतिदिशं शूलनक्षत्राण्याह–

ज्येष्ठायां पुरुहूत दिङ्मुखगतः प्राप्तो बलिर्बन्धनं
याम्यामाजपदे मुरश्च गतवान् यातो [1]मुरारेर्वशम् ।
रोहिण्यां नमुचिः प्रतीच्यभिसृतः [2]चूर्णीकृतो वज्रिणा
सौम्यामर्यमदैवते च गतवान्मृत्योर्वशं शंबरः ॥ ३ ॥

पद्यार्थस्तु स्पष्ट एव । तस्मादात्ययिकेऽपि कार्ये चत्वार्ये तानि नक्षत्राणि गमने वर्जनीयानि । केचित्तद्दिग्विलोमगमनमत्यात्ययिके हितमिति पठन्ति ।

तद्यथा—

प्रत्यग्यात्रा शक्रभे च प्राग्यात्रा धातृधिष्ण्यके ।
सौमी यात्राजपद्भे यामी यात्रार्यमर्क्षके ॥

१ अत्र केचित् चूर्णीकृतो विष्णुनेति पठन्ति ।

२ शक्रेण युद्धे हत इति पठन्ति । २ केचित् चूर्णीकृतो जिष्णुना इति पठन्ति ।



कर्तव्यात्ययिके कार्ये कर्तव्येति कश्चिन्मतम् ।

तथा च यवनेश्वरः—

ज्येष्ठाजपैतामहफाल्गुनीषु
प्राच्यादिकाष्ठानुगता महीपाः ।
बलिर्मुरोऽथोनमुचिः क्रमेण
विनाशमीयुर्मधुकैटभौ च ॥
ऋक्षेष्वथैतेषु यथोक्त काष्ठा
नभूति कामो मनसापि यायात् ।
मोहादथोल्लङ्घ्य यदि प्रयाया—
त्सराष्ट्रभृत्यो नचिराद्विनश्येत् ॥

तथा च

ज्येष्ठा प्राग्भाद्रपदा रोहिण्यथोत्तराश्च फाल्गुन्यः ।
शूलानि प्राच्यादिषु तेषु गतोऽभ्येति यदि वित्तम् ॥ ३ ॥ इति ॥

## अथ प्रतिदिशं यात्रिकानि प्रधाननक्षत्राण्याह–

पुष्योऽथ हस्तः श्रवणः श्रविष्ठा
प्राच्यादि मुख्यान्युदगश्वयुक् च ।
नैशाकरं त्वाष्ट्रमथोऽनुराधां
पौष्णं च मध्यानि तथाऽऽहुरेव ॥ ४ ॥

पुष्यादीनि नक्षत्राणि प्राच्यादिषु दिक्षु चतसृषु मुख्यानि श्रेष्ठानि । तद्यथा— पूर्वस्यां तिष्यो मुख्यः, दक्षिणस्यां हस्तः, पश्चिमायां श्रवणः, उत्तरस्या धनिष्ठा तथोत्तरस्यां दिशि अश्वयुगश्विनी मुख्याः । नैशाकरमिति । अन्ये वशिष्ठादयः, नैशाकरादीनि नक्षत्राणि प्राच्यादिषु दिक्षु मध्यमानीत्याहुः ।

तद्यथा

नैशाकरं मृगर्क्षं पूर्वस्यां दिशि मध्यमत्वाष्ट्रं चित्रा दक्षिणस्यां अथ शब्दो निपातः पाद-

पूरणे अनुराधा पश्चिमायां पौष्णं रेवत्युत्तरस्यां ।

तथा च वसिष्ठः

पूर्वस्यामुत्तमं तिष्यं सौम्य तत्रैव मध्यमम् ।
याम्यायामेव सावित्रं चित्रा तत्रैव मध्यम् ॥
वारुण्यां वैष्णवं श्रेष्ठमनुराधा तु मध्यमम् ।
कौवेर्यां वासवं श्रेष्ठमाश्विनं चापरं स्मृतम् ॥
पौष्णंमध्यफलं तत्र शेषर्क्ष्याणि विवर्जयेत् ।
परमतमप्रसिद्धमनुमतमित्याचार्यस्याप्यभिप्रेतम् ॥ इति ॥

अथाऽधुना सार्वद्वारिकानि नक्षत्राण्याह—

सार्वद्वारिक संज्ञितानि "गुरुभंहस्ताश्विमैत्राणि च श्रेष्ठाऽन्यैन्दवपौष्णविष्णुवसुभान्याद्यैः सहाष्टौ सदा।" गुरुभं तिष्यं हस्तः, अश्विनी मैत्रं अनुराधा एतानि चत्वारि नक्षत्राणि सार्वद्वारिक संज्ञितानि, एतेषु सर्वासुदिक्षु यायात्। सर्वस्मिन् द्वारेहितानि सार्वद्वारिकानि।

उक्तञ्च

सार्वद्वारिकसंज्ञं नक्षत्रचतुष्टयं विनिर्दिष्टम् ।
पुष्यो हस्तोऽश्विन्यो नक्षत्रमित्रदेवं चेति श्रेष्ठानिः ॥ इति ॥

ऐन्दवं मृगशीर्षः पौष्णं रेवती वैष्णवं श्रवण वसु धनिष्ठा एतान्यपि श्रेष्ठानि सार्वद्वारिकनीत्यर्थः । एवं आद्यैः पूर्वोक्तैश्चतुर्भिः सह साकं सदा सर्वकालं अष्टौनक्षत्राणि सार्वद्वारिकानि, एतेषु गतस्य परिघोल्लङ्घनाद्दोषो नभवतीति ॥ ४ ॥

## अधुना वर्ज्यानि यानि नक्षत्राणि यात्रायां तान्याह–

[1]रौद्राजाहियमानिलानलमघाशक्राग्निभैर्निन्दितम् ।
यानं त्वाष्ट्रानिलान्तरेग्नियमयोः पित्र्योरगे चान्तरे ॥ ५ ॥

यदाह भरद्वाजः

१ "भरण्यां सप्तघाटिका वह्निभे चैक विंशति ।



रौद्रं आर्द्रा आजं पूर्वभाद्रपदा अहिरश्लेषा यमो भरणी अनिलं स्वातिः, अनलं कृत्तिका मघा प्रसिद्धा शक्राग्निभं विशाखा एतैर्नक्षत्रै यानं गमनं निन्दितं कुत्सितं विरुद्धमित्यर्थः ।

उक्तञ्च—

चित्रास्वातिविशाखाभरणी पित्र्येश कृत्तिकाऽश्लेषा ।
नाति शुभदानि याने शेषाणि शुभानि धिष्ण्यानि ॥

त्वाष्ट्रानिलान्तर इति। त्वाष्ट्रं चित्रा अनिलं स्वातिः, अनयोरन्तरे मध्ये निर्मितं यानं, आग्नेयं कृत्तिका याम्यं भरणी अनयोरप्यन्तरे निर्मितं यानं नक्षत्रद्वयान्तरमध्ये गमनं अप्रशस्तमित्यर्थः। कार्यावश्यके विपत्तावपि नगन्तव्यम् । अन्तरग्रहणेनात्रार्द्धमुच्यते । यथा चित्रायाः पश्चिममर्द्धं, स्वात्याः पूर्वार्द्धं, भरण्याः पश्चिममर्द्धं, कृत्तिकाया पूर्वार्द्धमवगन्तव्यं। तदेव स्पष्टीकृतमाचार्येण योगयात्रायाम् ।

विवर्जयेत्त्वाष्ट्रयमोरगानामर्द्धं द्वितीयं गमने जयेप्सुः ।
पूर्वार्द्धमाग्नेयमघानिलानां स्वाति मघां चोशनसः समस्तम् ॥ इति ॥

केचिदेवं व्याचक्षते, अन्तरमत्र चतुर्भागो ज्ञेयः, चित्रायाः पश्चिमचरणः स्वातेः प्राक्चरणः एवमन्येषामपि। तथा च भगवान् व्यास एवमाह यतस्तेन विवाहपटले उक्तम् ।

आद्ये मघा चतुर्भागे नैऋतस्यादिरेव च ।
रेवत्यन्ते चतुर्भागे विवाहः प्राणनाशकः ॥ इति ॥
एतदेव चेतसि कृत्वेदमभिहितम् ।
"चित्रास्वात्यन्तरे नद्यां प्रस्थिता न निवर्त्तिता ॥ इति ॥"

इदमेव शोभनं जलयाने निषिद्धम् । चित्रास्वात्यन्तरे वृश्चिकधन्वंशकौ भवतः, भरणी–

एकादशघटी पित्रे त्रिपूर्वासु च षोडशः ॥
स्वातीसार्पविसाखासु ज्येष्ठायी च चतुर्दशम् ।
वर्जये च्छेषघटिका यातुः शुभफलप्रदा ॥
निषिद्धेष्वपि ऋक्षेषु त्यक्त्वा दुष्टघटी क्रमात् ।
तदन्या घटिका ग्राह्या आवश्यगमने सति ॥"

कृत्तिकयोस्तावेव, अश्लेषामघयो मीनमेषावतः, आचार्याणां मते नक्षत्रचतुर्थांशो गण्डान्त इति प्रसिद्धः, एवं गण्डान्तत्वात्, नक्षत्रचतुर्भागो नवांशक इति ॥ ५ ॥

## अथाधुना कालवशेन सर्वेषां नक्षत्राणां यात्रिकत्वमाह—

स्वे स्वे कर्मणि पूजितानि मुनिभिः शुद्धानि सर्वाण्यपि ।
त्यक्त्वाऽर्कोदयमानलेऽरिविषयं यात्रा दिधक्षोः शुभा ॥ ६ ॥

स्वे स्वे कर्मणि आत्मीयस्मीयक्रियायां मुनिभिर्गर्गादिभिः सर्वाण्यशेषाणि नक्षत्राणि शुद्धानि निरुपहतानि पूजितानि प्रशंसितानि । येन येन नक्षत्रेण यत्कर्म क्रियते तत्तन्नक्षत्रं शुभदमित्यर्थः । सर्वग्रहणात्सार्वद्वारिकादिन्यपि, अपि शब्दात्प्रतिषिद्धान्यपि स्वस्व कर्मणि शुद्धानि पूजितानि । अत आह । 'त्यक्त्वार्कोदयमिति' आनले कृत्तिकायां अर्कोदयं सूर्योदयकालं त्यक्त्वा विहाय अरिविषयं शत्रुदेशं दिधक्षोर्दहनेच्छोः, यात्रा शुभा प्रशस्ता, सूर्योदयमत्र घटिकाद्वितयम् ।

तथा च—

शत्रुविषयं दिधक्षोरन्यत्रार्कोदयाच्छुभाग्नेये ॥ ६ ॥

## अथान्येष्वपि कालनियममाह—

रोहिण्यां तिसृषूत्तरासु विजयो यातु त्रिशाखासु च ।
त्यक्त्वा वासरपूर्वभागमवदद्गर्गोऽपि राज्यार्थिनः ॥ ७ ॥

रोहिण्यां तथा तिसृषूत्तरासु उत्तरफाल्गुन्युत्तराषाढोत्तरभाद्रपदासु तथा विशाखासु एतेषु नक्षत्रेषु यातुर्गच्छतो विजयो भवति । किं भूतस्य राज्यार्थिनः, अधिराज्ये योऽर्थी तस्य राज्ञः राजेच्छोः कदा त्यक्त्वा वासरपूर्वभागमिति । वासरस्य दिवसस्य पूर्वं प्रथमं भागं त्यक्त्वा विहाय, अत्र सामान्येनोक्तं तथा च त्रिभागो ज्ञेयः प्राग्दिनत्रिभागस्य पूर्वाण्हसंज्ञा, द्वितीयस्य मध्याण्हसंज्ञा, तृतीयस्यापराण्ह संज्ञा, एवं रात्रेरपि त्रिभागपरिकल्पना ज्ञेया, कुत एव तदवगम्यते आचार्यादेव । यस्मादनेन संहितायां स्वातीयोगे दिनरात्र्योः, त्रिभागकल्पना कृता ।



तथा च—

स्वातौ निशांशे प्रथमेऽभिवृष्टे सस्यानि सर्वाण्यपि यान्ति वृद्धिम् ।
भागे द्वितीये तिलमुद्गमाषा ग्रीष्मतृतीयेंऽतिम शारदानि ॥
वृष्ट्यह्निभागे प्रथमे सुवृष्टि स्तद्वद् द्वितीये तु सकीटसर्पाः ।
वृष्टिस्तु मध्यापरभाग वृष्टेर्न छिद्रवृष्टे द्युनिशं प्रवृष्टे ॥ इति ॥

एतद्गर्गोऽवददुक्तवान् ।

तथा च भगवान् गर्गः—

उत्तरासु च रोहिण्यां तथा शक्राग्निदैवते ।
पूर्वाह्णे तरतो यात्रामधिराज्यार्थिनः शुभाम् ॥

एवं दिनस्य प्राक्त्रिभागं त्यक्त्वाऽन्येषु कालेषु गच्छेदित्यर्थः ।

तथा च समासयात्रायाम् ।

विशाखारोहिण्युत्तरासु यायाद्दिनस्य पूर्वाह्णे ॥ ७ ॥

## अथाधुनाऽन्येष्वपि यानमाह—

मूलेन्द्रोरगशाङ्करेष्वरिवधे यायाद्दिनार्द्धादृते
भूत्यर्थं पवनाश्विसूर्यगुरुभेष्वह्णोऽपरार्द्धाद्दिना ।
रात्र्यादौ तु नपौष्णमित्रशशिभत्वाष्ट्रेषु वाञ्छन् द्युतिं
रात्रेर्मध्यमपास्य पूर्वभरणी पित्र्येषु हन्तुं परान् ॥ ८ ॥

मूलं प्रसिद्धं ऐन्द्रं ज्येष्ठा औरगमश्लेषा शाङ्करमार्द्रा एतेषु नक्षत्रेषु अरिवधे शत्रुहनने दिनार्द्धात् ऋते दिवसस्य मध्यमं त्रिभागं त्यक्त्वा वर्जयित्वा अन्यत्र यायाद्गच्छेत् ।

उक्तञ्च—

ज्येष्ठामूलाश्लेषारौद्रेषु विवर्जयेच्च मध्याह्नम् ॥

भूत्यर्थमिति । पवनं स्वाति अश्विभमश्विनी सूर्यभं हस्तः गुरुभं पुष्यः एतेषु अह्णो दिनस्यापराह्णे अपराह्णं विना पश्चिम त्रिभागं वर्जयित्वा अन्यत्रकाले भूत्यर्थं संपत्संपादनार्थं यायात् ।

उक्तञ्च—

स्वात्यश्वि - हस्त - पुष्येष्वपराह्णं वर्जयेद्याता ।
रात्र्यादा विति······ ··· ·········· ॥

पौष्णं रेवती, मित्रभं, अनुराधा, शशि मृगशीर्षः, त्वाष्ट्रं चित्रा एतेषु द्युतिं वाञ्छन्, अभिलषन् याता रात्रे प्रथमे त्रिभागे नयायात् ।

उक्तञ्च—

मैत्रेन्दवचित्रारेवतीषु यायात्प्रदोषमुत्सृज्य ।
रात्रेर्मध्यममिति ··· ·· ··· ··· ··· ··· ··· ॥

पूर्वेत्यनेन पूर्वात्रयं गृह्यते भरणी, पित्र्यं मघा एतेषु रात्रे निशाया मध्यभागं मध्यत्रिभागमपास्य त्यक्त्वा, अन्यत्रकाले परान् शत्रून् हन्तुं मारयितुं यायात् ।

उक्तञ्च—

पूर्वासु तिसृषु याम्ये पित्र्ये च विहाय मध्यनिशाम् ॥ इति ॥
दिनरात्र्यो र्भागत्रयकल्पना पूर्वमेव व्याख्याता ॥ ८ ॥

## अथवान्येष्वप्याह—

**निशान्तभागे त्रिषुवैष्णवाद्येष्वीयाद्धनार्थी न पुनर्वसौ च ।**
**निषेधयत्यम्बुपसंज्ञकस्य मध्याह्नमेके सनिशान्तभागम् ॥ ९ ॥**

वैष्णवं श्रवणं तदाद्येषु त्रिषु श्रवणधनिष्ठाशतभिषक्षु तथा पुनर्वसौ निशान्तभागे रात्रेः पश्चिमत्रिभागे धनार्थी वित्ताभिलाषी न इयान्न गच्छेत् ।



उक्तञ्च—

न निशा पश्चिमभागे पुनर्वसौ त्रिषु च वैष्णवाद्येषु ॥ इति ॥

निषेधयन्तीति । एके मुनयो वसिष्ठादयः अम्बुपसंज्ञकस्य शतभिषजो मध्याह्णकालं दिनस्य मध्यभागं तथा निशाया रात्रेरन्त्यभागं पश्चिम त्रिभागं एवं मध्याह्णं निशान्तभागेन सहगमने निषेधयन्ति ।

तथा च वसिष्ठः—

निशान्ते दिनमध्ये च न यायात् वारुणे नृपः ।
न यात्यवश्यं स्वगृहं वित्तनाशमवाप्नुयात् ॥ ९ ॥

## अथाधुना सार्वकालिकानि नक्षत्राणि यात्रायां नियमयन्नाह ।

**यथेष्टवेलागमनं प्रशस्तं**
**हस्तेन्दवोपेन्द्रसुरेज्यभेषु ।**
**दत्वा प्रयाणं श्रवणे श्रियोऽर्थी**
**वशेन्न जातुः क्षितिपः स्वसीम्नि ॥ १० ॥**

हस्तः ऐन्दवो मृगशिरः उपेन्द्रभं श्रवणः सुरेज्यभं तिष्यः एतेषु नक्षत्रेषु यथेष्टवेलागमनं यथाभिमतकाले प्रयाणं शस्तं शुभम् ।

उक्तञ्च—

सर्वेऽपि शुभाः काला श्रवणेन्दवहस्तपुष्येषुः ॥

श्रवणे प्रयाणं यात्रां दत्वा क्षितिपो राजा श्रीयोऽर्थी श्रीकामो न जातु न कदाचिद्गमनं यथाभिमतकाले प्रयाणं शस्तं शुभम्, क्षितिपो राजा स्वसीमां आत्मीयमर्यादायां वसेत् , प्रयाणं कृत्वा प्रतिप्रयाणं चेद्देयमित्यर्थः केचित्त्रिरात्रं वशेदिति पठन्ति ॥ १० ॥

## अथान्येष्वपि नियमार्थमाह—

सौम्ये गत्वा पुष्यरौद्रेऽदितीशे संप्रस्थाता बाधते शत्रुसंघान् ।
मैत्रे गत्वा पौरुहूतं समुष्य मूले यायाच्छत्रुनाशाय भूपः ॥ ११ ॥

सौम्ये मृगशिरसि गत्वा स्वसीम्नि स्वभूमिमर्यादायां रौद्रे आर्द्रायां स्थित्वादितीशे पुनर्वसौ संप्रस्थाता पुनः प्रयाणं दत्वा शत्रुसंघान् रिपुसमूहान् बाधते जयति। मैत्रेऽनुराधायां गत्वा पौरुहूतं ज्येष्ठायां स्थित्वा भूपो राजा पुनर्मूले शत्रुनाशाय रिपुनाशार्थं गच्छेत् ॥ ११ ॥

## अथान्येष्वप्याह—

हस्ते गत्वा स्वातिचित्रे समुष्य—
शक्राग्न्यख्ये प्रस्थितो बाधतेऽरीन् ।
तिष्ये पौष्णे वासवे चैकरात्रं
सीम्नि स्थित्वा भूतिमाप्नोति याता ॥ १२ ॥

हस्ते गत्वा स्वातिचित्रे समुष्य स्वातौ चित्रायां प्रयाणं दत्वा स्वसीम्नि स्थित्वा शक्राग्न्याख्ये विशाखायां प्रस्थितः पुनर्गतोऽरीन् शत्रुन् बाधते जयति। तिष्ये तथा पौष्णे रेवत्यां वासवे धनिष्ठायां प्रयाणं दत्वा स्वसीम्नि स्थित्वा पुनः प्रयाता भूतिं समृद्धिमाप्नोति लभते ॥ १२ ॥

## अथाधुना सग्रहे नक्षत्रे गमनं दोषकृद्भवतीत्याह—
## अथान्यानप्यशुभानाह—

ऋक्षे द्व्याद्यैः संयुतेऽन्तः प्रकोपो
लक्ष्मी भ्रंशो राहुणार्केण रोगः ।
केतूल्काभ्यां पीड़िते देशनाशः
क्लेशः सारे सोष्णरश्म्यात्मजे च ॥ १३ ॥

ऋक्षे नक्षत्रे द्व्याद्यैः ग्रहैः द्वाभ्यां त्रिभिर्वा सौम्यैः पापैर्वा युते सति अन्तः अभ्यन्तरे



प्रकोपो भवति। कटकक्षोभ आत्मीयैः सहेत्यर्थः । राहुणा युक्ते नक्षत्रे लक्ष्मीभ्रंशः श्रीनाशः। अर्केण सूर्येण संयुक्ते रोगः। केतुना शिखिना उल्कया वा पीडिते हते नक्षत्रे देशनाशः स्वदेशक्षयः, सारे आरेण युक्ते क्लेशो निजशरीर कष्टं, उष्णरश्म्यात्मजः सौर स्तद्युक्ते च क्लेशो वातविकारजा वाधा अरिकृत क्लेशश्च ॥ १३ ॥

## अथान्यानप्यशुभानाह—

दिग्दाहधूमपरिवेषविकम्पपांशु
युक्तेष्वथाऽऽमयश्रमरोगपीडा ।
भिन्ने ग्रहेण वशतामुपयाति शत्रोः
संध्यागतेऽशनि हते च विघात उक्तः ॥ १४ ॥

दिग्दाहलक्षणानि संहितायामुक्तं, धूमस्तत्रैव स्वर्तुः स्वभावजं वर्जयित्वाऽन्यदुत्पातकृत् परिवेषः सूर्याचन्द्रमसोर्ग्रहाणां नक्षत्राणां वा, विकम्पो भूकम्पः, पांशुः पांशुवर्षणं एतैरुत्पातैर्युक्ते नक्षत्रे गतस्य यातुर्यथाक्रमं फलानि, तद्यथा— येन नक्षत्रेण दिग्दाहो दृश्यते तच्च नक्षत्रं यन्नक्षत्रं दिग्दाहमध्यवर्ति दृश्यते तेन गतस्याऽऽमयो रोगो भवति। यस्मिन्नक्षत्रे सूर्याचन्द्रमसो ग्रहाणां परिवेषो दृश्यते तेन गतस्य श्रमः खेदो भवति। तथा येन नक्षत्रेण विकम्पो भूकम्पो भवति, यस्य योगताराकम्पितावलोक्यते तेन गतस्य रोगो भवति। तथा येन नक्षत्रेण पांशुवर्षणं दृश्यते तेन गतस्य पीडा रुग्भवति। ग्रहेण पापेन सौम्येन वा भिन्ने नक्षत्रे, यस्य नक्षत्रस्य योगतारा तदाकारं शकटादिभिर्भिद्यते तन्नक्षत्रं भिन्नमुच्यते।

तथा च भगवान् गर्गः—

शकटं योगतारां वा भिद्यते यस्य येन हि ।
ग्रहभिन्नं च तद्दृक्षं यस्य वा मध्यमो ग्रहः ॥

एवं विधे भिन्नग्रहनक्षत्रे गतो राजा शत्रोरेव वशतां वश्यभावतां उपयाति प्राप्नोति। सन्ध्यागतेऽशनिहते सूर्यास्तमिते तत्सर (म) नन्तरं पश्चाद्यन्नक्षत्रमस्तमेति, तत्पश्चात्संध्यान्तर्गतं तथा नुदितेऽपि सूर्ये यत्पूर्वमुदेति तदपि प्राक् संध्यागतं तत्कालभम् । यन्नक्षत्रेऽशनिपातः तद्भं अशनिहतं, एवं संध्यागतेऽशनिहते च नक्षत्रे विघातो घातः उक्तः कथितः ।

उक्तञ्च—

नक्षत्रमपटुकिरणं परचात्संध्यागतं ग्रहैर्भिन्नम् ।
क्रूरनिपीडितमुत्पातदूषितं चाशुभं सर्वम् ॥ इति ॥

तथा च योगयात्रायाम् ।

उत्पातपापग्रहपीडिते भे ये यान्ति भूरिग्रह संयुते वा ।
ते पूर्ववित्तान्यपि नाशयन्ति यातुः प्रशक्ता इव वाति केन्द्र ॥ इति ॥ १४ ॥

## अथैकीयपरिशिष्टत्याज्यनक्षत्राण्याह—

**जन्माद्यं कर्मततो दशमं संघातिकश्च षोड़शभम् ।**
**समुदायमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥ १५ ॥**
**आद्यात्त पञ्चविंशं मानसमेव पड्नक्षत्रकः पुरुषः ।**
**नवनक्षत्रो नृपतिः स्वजातिदेशाभिषेकर्क्षैः ॥ १६ ॥**

येन नक्षत्रेण पुमान् जातस्तत्तस्य जन्मनक्षत्रं तदाद्यं प्रथमं उक्तं, ततः तस्माज्जन्मनक्षत्राद्दशमं नक्षत्रं कर्मसंज्ञं, ततो जन्मर्क्षात् षोडशं भं संघातिकं, ततो जन्मर्क्षादष्टादशभं समुदायसंज्ञं. जन्मनक्षत्रात्त्रयोविंशं विनाश संज्ञंवैनाशिकं । आद्यादिति, आद्याज्जन्मनक्षत्रात्पञ्चविंशं नक्षत्रं यत्तन्मानसम् । एवमनेनप्रकारेण, यः कश्चित्पुरुषो नरः स षड्नक्षत्रकः । नृपतिस्तु नव नक्षत्रः पूर्वोक्तानि षट् अन्यानि च त्रीणि, स्वजातिनक्षत्रं देशनक्षत्रं अभिषेकनक्षत्रं च एवं एतैः सह नृपो नवनक्षत्रः । जाति नक्षत्राणि संहितायामुक्तानि, देशनक्षत्राणि च तत्रैवोक्तानि, अभिषेकनक्षत्रं यन्नक्षत्रेण राजा राज्येऽभिषिक्तः ।

एतच्च स्पष्टतरं योगयात्रायामुक्तम्—

जन्मर्क्षमाद्यं दशमं च कर्म संघातिकं षोडशमृक्षमाद्यात् ।
अष्टादशः स्यात्समुदायसंज्ञं वैनाशिकं विंशतित स्तृतीयम् ॥
तत्पञ्चविंशं खलु मानसाख्यं षड्नक्षमेवं पुरुषस्तु सर्वः ।
राज्ञो नवर्क्षाणि वदन्ति जाति देशाभिषेकैः सहितानि भानि ॥



राज्ञोऽभिषेकर्क्ष मुशन्त्यमिश्रं साधारणे द्वे सहषड्भिराद्यैः ।
किन्त्वत्र दोषाश्च गुणाश्च सर्वे प्रधानमेकं पुरुषं भजन्ते ॥
कूर्मोपदिष्टानिहि देशभानि राज्याभिषेकेऽहनि चाभिषेकम् ।
यज्जातिजातस्य भवन्त्यतस्ता वक्ष्यामि दैवज्ञ निराकुलार्थम् ॥
पूर्वात्रयं सानलमग्रजानां राज्ञां च पुष्येण सहोत्तराणि ।
स पौष्ण मैत्रं पितृदैवतं च प्रजापते भं च कृषीबालानाम् ॥
आदित्यहस्ताभिजिदाश्विनानि वणिग्जनानां प्रवदन्ति भानि ।
मूल–त्रिनेत्रानिलवारुणानि भान्युग्रजातेः प्रभविष्णुताया (?) ॥
सौम्येन्दुचित्रावसुदैवतानि सेवाजनस्वाम्यमुपाश्रितानि ।
सार्पविशाखाश्रवणोभरण्यश्चाण्डालजातेरभिनिर्दिशन्ति ॥

तथा च देशनक्षत्राणि—

"मध्यप्रागादयो देशा स्त्रित्रिभैः कृत्तिकादितः ॥ इति ॥"

कृत्तिकारोहिणीमृगशिर इत्येतन्नक्षत्रत्रयं मध्यदेशे । आर्द्रापुनर्वसुतिष्या पूर्वस्यां दिशि, आश्लेषामघापूर्वफाल्गुन्यआग्नेयां, उत्तराफाल्गुनी हस्तचित्रा दक्षिणस्यां, स्वातिविशाखाऽनुराधा नैर्ऋत्यां, जेष्ठामूलपूर्वाषाढा पश्चिमस्यां, उत्तराषाढश्रवणधनिष्ठा वायव्यां, शतभिषक् पूर्वभाद्रोत्तरभाद्रपदा उत्तरस्यां, रेवत्यश्विनोभरण्य ऐशान्यामिति । अथ च त्रित्रिभैरेव कृत्तिकाद्यैर्निपीडितैर्भूपतयोऽभियोज्याः ।

ते च यथा—

पाञ्चालनाथो मगधाधिपश्च
कलिङ्गराडुज्जयिनी पतिश्च ।
आनन्तरान् सैन्धव–हार–होरा
मद्रेश्वरो ऽन्यश्च कुलिन्दनाथाः ॥
एते हि कुर्माङ्गसमाश्रितानां
विशेष पीडामुपयान्ति भूपा ॥ इति ॥ १५ ॥ १६ ॥

## अथैतेषां नामानुरूपं फलमाह—

**नामानुरूपमेषां सदसत्फलमिष्टपापगुणदोषैः ।**

जन्मर्क्षादि विशुद्धौ याता शत्रून् जयत्यचिरात् ॥ १७ ॥

एषां जन्मनक्षत्रादीनां षण्णां च नामानुरूपं सञ्ज्ञानुरूपं फलं सदसच्छुभमशुभम्। अथ उच्यते, इष्टपापगुणदोषैः, सौम्याः, बुधगुरुसिताः, एषां योगात् गुणाः ततः सत्फला। पापा रविभौमसौराः, एषां योगात् दोष स्ततोऽसत्फलता। तद्यथा— जन्मर्क्षे शुभग्रहसंयुक्त जन्म शुभं तेन यातुर्देहः शुभो भवति। पापग्रहयोगे तु शरीरकष्टं। एवं कर्मणि शुभग्रहे च मार्गस्थे कर्मणां सिद्धिः, पापयुक्ते कर्मणां हानिः। एवं सङ्घातिके सौम्यग्रहयुक्ते मूर्तिद्रविण बन्धूनां संघातः पापयुक्ते सङ्घात भेदः। सामुदायिके सौम्यग्रहसंयुक्ते द्रव्याणामुपचयः। पापयुक्ते द्रव्यादिनाशः। वैनाशिके सौम्यग्रहयुक्तेऽरोगता, पापयुक्ते शरीरक्षीणता। मानसे सौम्ययुक्ते चित्तहर्षः, तस्मिन् पापयुक्ते मनस्युद्विग्नता, एवं जाति नक्षत्रोपतापे तज्जातीयाः सर्वे एवं पीड्यन्ते, तस्मिन् सुस्थिते सर्वे सुस्थिता।

जातिनक्षत्रे बहूनि भानि परिगणितानि तेषु मुख्यत्वं यामले उक्तम्.।

विप्रस्य कृत्तिकामुख्या तिष्य मुख्यस्तु भूभृतः ।
वैश्यस्य रेवती मुख्या शूद्रस्य तु पुनवसुः ॥ इति ॥

अभिषेक नक्षत्रोपतापे राज्ञ एव पीडा, तस्मिन् सुस्थिते सुस्थितत्वात्। जन्मर्क्षादि विशुद्धाविति। एषां जन्मनक्षत्रादीनां षण्णां नवानां वा विशुद्धे निर्दोषे नृपो याता नचिराच्छीघ्रमेव शत्रून् रिपून् जयति।

तथा च योगयात्रायाम्—

रोगाभ्यागम-वित्तनाश-कलहाः सम्पीडिते जन्मभे
सिद्धिं कर्म नयाति कर्मणि हते भेदस्तु सङ्घातिके ।
द्रव्यस्योपचितस्य सामुदयिके सम्पीडिते संक्षयो
वैनाशे तु भवन्ति कायविपदश्चिन्ता सुखं मानसे ॥
निरुपद्रुतभे निरामयः सुखभाग्नष्ट रिपुर्धनान्वितः ।
तदुपद्रुतभे विनश्यति त्रिभिरन्यैश्च सहावनीश्वरः ॥ १७ ॥



## अधुना जन्मर्क्षात्तारासंज्ञा आह—

जन्मभकर्माधानान्वितात् संपद्विपत्करक्षेम्याः ।
प्रत्यरिसाधकवैनाशिकाश्च मित्रातिमित्राख्याः॥ १८ ॥

जन्मभं जन्मनक्षत्रं कर्मभं दशमं आधानभं एकोनत्रिंशं कथमेतदवगम्यते। आचार्य वाक्यादेव, यद्येवं नस्यात्तत्कथमनेनोक्तम् ।

तथा च तन्त्रान्तरे पठ्यते—

येन सञ्जायते जन्तु तज्जन्मर्क्षमिति स्मृतम् ।
तस्मादेकोनविंशर्क्ष तज्ज्ञेय गर्भदानभम् ॥
जन्मभाद्दशमं यद्भं कर्मभं तत्प्रकीर्तितम् ।

एवं जन्मभात्कर्मभादाधानभाच्च तदादितः तन्नक्षत्रत्रयमादौ कृत्वा यथासंख्यं जन्मसंपत्कराख्या नवतारा गणनीयाः। जन्मनक्षत्र कर्मनक्षत्राऽऽधाननक्षत्राणां जन्मतारेति संज्ञा, तद्द्वितीया सम्पत्करा, तृतीया विपत्करा, चतुर्थी क्षेम्या, पञ्चमी प्रत्ययाख्या, षष्ठी साधका, सप्तमी वैनाशिका, अष्टमी मित्रा, नवमी अतिमित्रा, एवमत्र सर्वासां ताराणां संज्ञासदृशं फलम् ।

तथा च—

तारासु जन्मसंपन् विपत्करक्षेम्यपापशुभकष्टाः ।
मैत्रातिमैत्रसंज्ञा श्चैताः संज्ञाऽनुरूप फलाः ॥ इति ॥ १८ ॥

## अथैतासु यातुः फलमाह—

मैत्रातिमैत्रसाधकः संपत्क्षेम्येषु सिद्धिफलम् ।
जन्मविपत्करप्रत्यरवैनाशिकेषु तथाभिषेकर्क्षे ॥ १९ ॥
पुरनक्षत्रेऽरिगतोनार्थान् प्राप्नोति न स्वपुरम् ।
नार्थान् प्राप्नोति याति शत्रुपराभूतो निवर्तयति ॥ २० ॥

मैत्रातिमैत्रसाधकसम्पत्क्षेम्यासु पञ्चसु याता सिद्धिफलं प्राप्नोति। जन्मविपत्करवैनाशि-

केषु चतुर्षु तारासु तथाऽभिषेकर्क्षे यन्नक्षत्रेऽभिषिक्तो गत्वा राजा तन्नक्षत्रे पुरनक्षत्रे यन्नक्षत्रेण नगरं निर्मितं तत्पुरर्क्षमिति।

तत्पुरर्क्षं द्विविधं "पुरनिर्माणकालिकचन्द्रर्क्षं पुरनक्षत्रमिति" यामलमतं। विस्तारा-ऽऽयामाभ्यामवगतं यत्क्षेत्रफलं तदष्टाहते भसंख्ययाहृते यदवशिष्टं तदेव पुरनक्षत्रमिति।

तयोरत्र समरविषयत्वाद्धोढाचक्रवशात्पुरनामाद्यक्षरं गृहीत्वा तस्मात् यन्नक्षत्रं तदित्यभियुक्ताः। तत्र वयं ब्रूमः, नगरे सदसत्फलविवेकार्थं होढाचक्रोदितनक्षत्रं ग्राह्यम्। नगर-नगरेशयोः सदसत्फलविवेकार्थं तद्विस्तारायामनिष्पन्नं नक्षत्रं ग्राह्यम्। यात्रा विषयत्वात् अत्र तु यन्नक्षत्रगतेन्दौ नगरं निर्मितं तदेव नगरनक्षत्रम्। अत एवोक्तं यात्राविवाहादिषु जन्मराशीत्युक्तत्वात् ॥ १९ ॥ २० ॥

## अधुना प्राच्यादिदिशि यात्रासिद्धये नक्षत्रस्नानान्याह-

सितसिद्धार्थकशालिप्रियङ्गुमदयन्तिकाम्बुभिः पुष्ये।
स्नात्वा यायात्प्राचीं सौम्येषु सह मणितोयैः ॥ २१ ॥

सितसिद्धार्थकाः गौरसर्षपाः शालय प्रसिद्धाः। प्रियङ्गुः मदयन्तिके सुगन्धिद्रव्ये, प्रियङ्गु फलिनी, मदयन्तिका मादकरी सुगन्धिविशेषाः, पीतपुष्पा भृङ्गीत्युच्यते, एताभिः सहितैरम्बुभिः जलैः पुष्यनक्षत्रे स्नात्वा ततोऽभीष्टे नक्षत्रे प्राचीं पूर्वां दिशा यायात् गच्छेत। सौम्ये मृगशिरसि हेम्ना सुवर्णेन मणिभिर्मुक्ता फलादिभिश्च सहितै स्तोयैर्जलैः स्नात्वा ततोऽभीष्टे नक्षत्रे प्राचीं यायात् ॥ २१ ॥

## अथ दक्षिणस्यामाह–

गोशृङ्गाग्रनदीगिरिवल्मीकतडाकमृत्समायुक्तैः।
तोयैः स्नात्वा नृपतिर्यायाद्याम्यां दिशं हस्ते ॥ २२ ॥

गोःशृङ्गाग्रेणोत्खातामृत्, तथा नदीकूला गिरेः पर्वतात् वल्मीकात् वल्मीककृतमृत्स्त-स्मात्, तडागाच यामृत् एताभिः पञ्चभिः मृद्भिः सह समायुक्तै स्तोयैर्जलैर्हस्ते नक्षत्रे स्नात्वा ततोऽभीष्टेनक्षत्रे याम्यां दक्षिणां दिशं यायात् गच्छेत् ॥ २२ ॥



## अथ पश्चिमायामाह–

सरिदुभयकूलमृद्भिः स्नात्वा मैत्रे परां दिशं यायात्।
श्रवणेन तु नदीसङ्गममृत्सलिलैः पश्चिमामेव ॥ २३ ॥

नदी सरित्तस्या उभयकूला कूलद्वयात्, या मृदस्ताभिः संयुक्तैर्जलैः मैत्रेऽनुराधायां स्नात्वा ततोऽभीष्टे नक्षत्रे पश्चिमां दिशी यायात्। तथा द्वयोर्नद्यो र्यत्र सङ्गमो मेलक स्ततो या मृत, तत एव यानि सलिलानि तोयानि तैः श्रवणे स्नात्वा ततोऽभीष्टे नक्षत्रे पश्चिमामेव यायात् ॥ २३ ॥

## अथोत्तरस्यामाह–

मधुभद्रपदारु–सहितैः स्नात्वा तोयै रुदग्धनिष्ठाभिः।
गोगजविषाणकोशैर्मधुघृतपूर्णैरुदक् पौष्णे ॥ २४ ॥

मधुमाक्षिक, भद्रपदारु, देवदारु, आभ्यां सहितैः संयुक्तैस्तोयैः श्रविष्ठाभि र्धनिष्ठाभिः स्नात्वा ततोऽभीष्टे नक्षत्रे उत्तरदिगुत्तरां दिशं यायात्। गोविषाणं गोशृङ्गं गजविषाणं हस्तिदन्तं स्वयमेव पतितं गोविषाण–हस्तिदन्तनिखातं अनयोः कोशौ अभ्यन्तरे ते मधुघृतपूर्णे कार्ये। गोशृङ्गकोशं मधुना पूर्णं गजविषाणं च घृतपूर्णं तै स्तथा भृतै बहुवचनात् बहुभिः पौष्णे रेवत्यां स्नात्वा ततोऽभीष्टे नक्षत्रे उदगेव गच्छेत् ॥ २४ ॥

## अथात्रैवान्यान्नक्षत्राण्याह–

उदगेवाश्विनदेवे स्नात्वा मधुयूथिकायुतैरद्भिः।
नक्षत्रदेवमन्त्रै श्चाग्निं हुत्वा जयं लभते ॥ २५ ॥

मधु माक्षिकं यूथिका हरिणिका जूहीति प्रसिद्धा जातिभेदा सूक्ष्मपुष्पा शुक्लवर्णा, मधु च यूथिका च ताभ्यां युक्तैरद्भिर्जलै अश्विनदेवेऽश्विनीनक्षत्रे स्नात्वोदगेवोत्तरां दिशां यायात्। एवं प्रतिदिक् पथि कथितनक्षत्रैः स्नात्वा पश्चादभीष्टनक्षत्रे यात्रिकेऽनुकूले यायात्। नक्षत्र-सामान्येनोक्तम्। नक्षत्रस्नानं दिगुद्देशेन तत्कथं ज्ञायते, यथान्यस्मिन्नक्षत्रे यायादुच्यते।

सर्वेषामग्रत उपहारान् वक्ष्यति । तथा च नृपतिर्यथादिशनक्षत्राभिहितं च सिद्धये इति वचनात्, अन्यस्मिन् पक्षे यायात्, नक्षत्रदेवमन्त्रैरिति । येन नक्षत्रेण राजा स्नातः येन च यात्रां करोति तस्य या देवता तन्मन्त्रैः तद्दैवत्याभि र्ऋग्भिर्वह्निं हुत्वा जयं लभते ।

तद्यथा नक्षत्रदेवता—

अश्वियमदहनकमलजशशिशूलभृददितिजीवाहि पितरः ।
योन्यर्यमदिनकृत्त्वष्ट्रपवनशक्राग्निमित्राश्च ॥
शक्रो निर्ऋतिस्तोयं विश्वे ब्रह्माहरिर्वसुर्वरुणः ।
अजपादोऽहिर्बुन्ध्यः पूषा चेतीश्वरा भानाम् ॥ २५ ॥

## अधुना नक्षत्रेषु प्राशनीयद्रव्याणि विवक्षु स्तत्रादावे-
## वाश्विन्यादीनां पञ्चानामाह—

**अक्षतमाषाः स्विन्ना स्तिलसहिता स्तण्डुला दधि च गव्यम् ।**
**पृषतपिसितमृगस्य च पञ्चानामश्विन्यादीनाम् ॥२६ ॥**

अक्षता श्च ते माषाः अक्षतामाषाः, अदलितामाषास्ते च स्विन्ना इतीच्छन्ति अश्विन्याम् । तिलैः कृष्णतिलैः सहितास्तण्डुला एकीकृता भरण्याम् । गव्यं दधि कृत्तिकायाम् । पृषत पिशितं पृषतो मृगजाति तस्य पिशितं मांसं पृषतश्च चित्रमृगः, रोहिण्याम् । केचिद्वृषभपिशितमिति पठन्ति तदसत् । मृगस्य च मांसं मृगशिरसि एवं यथा संख्यमश्विनपूर्वाणां पञ्चानामृक्षाणामिति ।

तथा च यात्राकारः—

माषाः श्विन्नाक्षताश्विन्यां भरण्यां तिलतण्डुलाः ।
दध्योदनं कृत्तिकायां सुगव्यंदधि केवलम् ॥
पृषन्मृगस्य पिशितं रोहिण्यामेव वार्षभम् ।
सौम्ये मार्गमसृङ्मांसमथवोप हरेद्बुध ॥ (?)

तथा च विष्णुगुप्तः—

अश्विनीयोगयुक्ते तु निर्गच्छेन्मेदिनीपतिः ।
राजमाषयुतं प्राश्य राजतुल्य फलं लभेत् ॥



एवं एतानि पञ्चानां प्राशनीयानि । नन्वत्र यदुक्तं वृषभपिसितमित्यादि, तत्कथं द्विजातीनां तद्भक्षयितुं युज्यते इत्यतोऽत्रोच्यते । यस्य न विरुद्धं तेन भक्षणीयं, यस्य विरुद्धं तेन दर्शनस्पर्शनानि यथायुक्तं कर्तव्यानि । अथवा आजं मार्गं वा मांसं चूर्णीकृत्य प्राणिसदृशं लोममयं कृत्वा द्विखण्डं यन्त्रं तन्मध्ये तच्चूर्णितंमांसं प्रक्षिप्य तप्तघृतमध्ये पाचये त्ततो यन्त्रद्वयकपाटमपास्य प्राणिसदृशमयो मांसमयः संपद्यते । अथवा तदप्ययोग्ये पिष्टमयं कार्यमित्यागमविदः । रोहिण्यां तु तदुभये मुनिवचनानि सन्त्येवातो वृषभपिशित पक्षत्यागे पृषन्मांसेनैव तत्फलसिद्धित्वात्तदसदित्युक्तं त्रैवर्णिक विपयं ज्ञेयम ॥ २६ ॥

## अधुनान्येषामार्द्रादीनामाह—

**रुधिरविलायनपायसभुजङ्गमांसानि शाङ्करादीनाम् ।**
**पित्र्ये तिलोदनं षाष्टिकान्नमृक्षद्वये परतः ॥ २७ ॥**

शाङ्करमार्द्रा तदादीनां क्रमेण प्राशनीय द्रव्याणि । रुधिरमार्द्रायां, विलायनं घृतापः कल्क उच्यते तत्पुनर्वसौ पायसं परमान्नं दुग्धेस्विन्नं 'जवागु' तच्च पुष्ये, भुजङ्गमांसं सर्पामिषं तदश्लेषायां. पित्र्ये मघायां तिलोदनं तिलमिश्रोदनं 'तिलखिचडीका' परतोऽनन्तरमृक्षद्वये पूर्वफल्गुन्युत्तरफल्गुन्योः षाष्टिकान्नं 'षाष्टिकशालि भक्तम्' षाष्टिकाः षष्टिरात्रेण पच्यन्ते । भुजङ्गमांसमित्यत्र भुजं जिह्मं गच्छतीति व्युत्पत्या, मुनिवाक्येऽपि विकल्पवाक्यावलोकनात्, उड्डीयानाद्यनेकोड्डयन वित्पक्षिणो मांसं वेति ॥ २७ ॥

## अथान्येषामप्याह—

**प्राश्याः प्रियङ्गु चित्राण्डजममलफलं यावकं कुलत्थाश्च ॥**
**मधु सर्पिषी च हस्तान् मूलान्यप् सक्तवो मूलात् ॥ २८ ॥**

हस्तात्प्रभृति नक्षत्राणां यथा संख्यं प्राशनीयानि द्रव्याणि, प्रियङ्गवोऽण्वन्नानि हस्ते प्राश्या, चित्राण्डजं चित्रं च तदण्डजमित्यनेन चित्रपक्षिणं प्राश्येत्यर्थः । चित्रं च तदण्डं तस्माज्जातः चित्राण्डज इत्यनेन येषां पक्षिणां अण्डाश्चित्रानानाकारा ते पक्षिण श्चित्रायां, फलानि प्रसिद्धानि तान्यप्यमलानि निर्मलानि जातीफलादीनि स्वात्याम् । यावकं यवप्रकारो विशाखायां, कुलत्था, अनुराधायां, मधु माक्षिकं सर्पिघृतं तद्वयं ज्येष्ठायां । एवं हस्ता प्रभृति ज्येष्ठान्तम् । इदानीं

मूल प्रभृति यथा संख्यं, मूलानि प्रसिद्धानि मूले, आपो जलानि पूर्वाषाढायां, सक्तव उत्तराषाढायां ॥ २८ ॥

## अथान्येषामप्याह–

श्रवणादीनामद्याच्छालीशाकं बिडाल मांसं च ।
आजंयथेष्टमांसं मुद्गान्नं दोहदं प्रोक्तम् ॥ २९ ॥

श्रवणादीनां षण्णां यथा क्रमेण अद्यात् भक्ष्ययेत् । श्रवणे शाल्यन्नं, शाकं वृन्ताकादि दशविधं धनिष्ठायां, बिडालमांसं शतभिषजि, बिडालं शशकेऽपि चेति । आजं अजस्य गन्धवद्वस्तमांसं पूर्वभाद्रपदायां, बस्तः साण्डोऽजः । यथाभिमतं मांसं उत्तरभाद्रपदायां गन्तु रुचिकरं मांसमित्यर्थः । मुद्गान्नं रेवत्याम् । एवं नक्षत्राणां प्राशनीय द्रव्याणि उक्त्वा ॥२९॥

## अधुनादिग्दोहदान्याह–

प्राच्यादि घृतं तिलोदनं मत्स्याः क्षीरम् ॥
प्रदक्षिणतो याता सिध्यर्थ माप्नोति ॥ ३० ॥

प्राच्यादिषु चतसृषुदिक्षु क्रमेणाऽद्यात् भक्षयेत् । पूर्वस्यां घृतं दक्षिणस्यां तिलोदनं, मत्स्याः उत्तरस्यां क्षीरम् । इत्यनेन प्रकारेण प्राश्य भक्षयित्वा सिद्धये यात्रा फल सिद्धये गच्छेत् ॥ ३० ॥

## अथ पथिकस्य यात्रायां भोजनाऽननुकूलाऽनुकूलवशात्स–दसत्फलमाह–

स्नातो भुक्तोऽनुलिप्तश्च मार्गगो विजयं लभेत् ॥ इति ॥ ३०१ ॥
उक्तत्वात्, गन्तुमिच्छो भोजनलक्षणमुच्यते ।
अस्वादु च्युतकच मक्षिकाऽनुविद्धं
दुर्गन्धि क्षयकृदभूरि यच्च दग्धम् ।
सुस्विन्नं मृदुरुचिरं मनोऽनुकूलं
स्वाद्वन्नं बहु विजयाय यानकाले ॥ ३१ ॥



यदस्वादु स्वादुविहीनं अमिष्टं स्वरूपतो नष्टं हस्तच्युतं हस्ते गृहीतं हस्तात्पतितं तथा कचैः केशैर्मक्षिकाभिर्वाऽनुविद्धं संयुक्तं तथा दुर्गन्धि दुष्टसुरभि यच्च दग्धं, तदप्यभूरि, अत्यल्पं भक्षितं चेत् क्षयकृत् गमने सत्फलक्षयं करोति । सुस्विन्नमिति । यत् पुनः सुस्विन्नं सुपक्वं मृदु कोमलं रुचिरं दीप्तिमत्, मनोऽनुकूलं चित्ताह्लादकृत्, बहु च प्रभूतं भुक्तं एतस्य यान काले यात्रा समये जयाय भवति ॥ ३१ ॥

## अधुना तिथिनक्षत्रविरोधे सति गमनस्य विशेषमाह–

गुणवति तिथावृक्षे नेष्टे दिवागमनं हितम् ।
निशि च भगुणैः शस्तं यानं तिथौ गुणवर्जिते ॥ ३२ ॥

तिथौ गुणवति तथा ऋक्षे नेष्टे नक्षत्रेऽनिष्टेऽशुभे सति दिवा दिवसे गमनं हितं शोभनम् । तिथौ गुणवर्जितेऽनिष्टे रिक्तादौ नक्षत्रे च गुणवति यात्रिकानुकूले सति निशि रात्रौ यानं प्रशस्तं भवति ॥ ३२ ॥

## अन्यथा चेद्दोषमाह–

भतिथिकथितान् दोषान् प्राप्नोत्यतः प्रतिलोमगोः ।
विपरीतयोः सम्यग्यातु जगाद भृगुमुनिः ॥ ३३ ॥

अतोऽस्मात् प्रकारादुक्तात्प्रकारात्प्रतिलोमगो विपरीतगो गुणवति तिथावृक्षेऽनिष्टे निशि गच्छति, तथा रिक्ते ऽगुणवति तिथावनिष्टे दिवागच्छति स तत्तत्तिथि कथितान्, नक्षत्रोक्तान्, तदुभयजान् दोषान् उपद्रवान् प्राप्नोति लभते । यात्रायामनिष्टेषु नक्षत्रेषु यानि अनिष्ट–फलानि उक्तानि ।

" दिग्दाहधूमपरिवेषविकम्पनासु युक्तेषु " इत्यादीनि तथा रिक्तादिके यान्युक्तानि ।
तथा–

तिथिं चतुर्थीं नवमीं चतुर्दशीं विहाय विष्टिं करणञ्च गच्छतः ।
भवन्ति चामीकर वाजि वारणाश्चतुर्थिं पूर्वाश्च तदाति वारणा ॥

इत्यादि तत्सम लभते । गुणमपीति, तयोस्तिथि नक्षत्रयो भृगुमुनिर्यातुर्गच्छतः सम्यक्

गुणं शोभनं गुणं जगाद उक्तवान्, अपि ग्रहणात् अगुणञ्च जगाद। एतदुक्तं भवति यदा उभौ अपि तिथिनक्षत्रे शुभे भवतः, तदा यातुः शुभं भवति, अथ द्वे अप्यशुभे तदाऽशुभं भवति।

तथा च भृगुः-

नक्षत्रे यात्रिके शुद्धे तिथौ च गुणसंयुते ।
गतो धनानि लभते विपरीतगतो भयम् ॥ ३३ ॥

इति भट्टोत्पलविरचितायां यक्ष्येऽश्वमेधीययात्राविवृतौ नक्षत्रविजयाऽध्यायश्चतुर्थः ॥ ४ ॥





# अथ ग्रहदिवसफलाऽध्यायो व्याख्यायते

## तत्रादावर्कचन्द्रयोः फलमाह-

१उदरनयनरोगश्वापदारण्यबाधा
सवितृदिवसयातो व्यश्नुतेऽर्थं क्षयश्च ।
अनिलकफजदोषान् शक्तिपानान्नहानिं
सलिलजनितपीड़ा श्चाह्नियातो हिमांशोः ॥ १ ॥

उदररोगो जठररोगः, नयनरोगो नेत्रपीडा श्वापदा नखिनः प्राणिनः आरण्याः व्याघ्रादयः एभ्यो बाधा तथाऽर्थक्षयं धननाशं च सवितृदिवसे सूर्यवासरे यातो गतो व्यश्नुते प्राप्नोति याता लभते इत्यर्थः।

तथा च यवनेश्वरः—

क्षुत् तृट् परिक्लेशनसाधुवैरं भयं पृथिव्यां तु चतुष्पदेभ्यः ।
मार्गप्रणाशं हृदुपद्रवं च प्राप्नोति सूर्यस्य दिने प्रयाता ॥

अनिलकफजदोषानिति। अनिलो वातः कफश्लेष्मा आभ्यां जाता उत्पन्नान् दोषान् उपद्रवान् तथा शक्तिपानान्नहानिं शक्तिः सामर्थ्यः पानं मद्यादि अन्नं भोजनं एषां हानिं विन्द्यात्। तथा सलिलेन जलेन जनिता पीडा अनिल जलपानात्, जलाभावाद्वा रोगः हिमांशोश्चन्द्रस्य दिने यातो गतः, एताव्यश्नुते। अत्राचार्येण बादरायणमतमङ्गीकृतं, यवनेश्वरेण सह मतभेदः।

यदाह नारदः

१ "नचन्देन्दुदिने प्राचीं नगच्छे दक्षिणां गुरौ ।
सितार्कयो न प्रतीचीं नोदीचीं ज्ञारयो रपि ॥"

नारदसंहिता अ. ३३ श्लो- ५

तथा च वादरायण:-

अनिलकफोत्थान् दोषानन्नविघातं बलक्षयं लभते ।
इन्दोर्दिने प्रयातो नरपो जलसम्भवां पीडाम् ॥

यवनेश्वरस्तु:-

साध्वङ्गनापुष्पफलान्नपानै र्द्रव्यै र्मनोज्ञै र्जलसंभवैश्च ।
संयुज्यते चन्द्रदिने प्रयातो न तु क्रियार्थै रिति वाञ्छितैः स्वैः ॥

---

वसिष्ठोऽपि

"तुहिनकरमन्दवारे शक्रदिशं व्रजेद् गुरौ च याम्यायाम् ।
रविसित दिने प्रतीच्यां सौम्यदिशं ज्ञारयो श्च वारशूल स्यात् ॥"

## वारयोगिनीचक्रम्

| | | |
|---|---|---|
| ई.<br>रा. | पू.<br>सू. | आ.<br>मं. |
| चं.<br>उ. | | द.<br>गु. |
| श.<br>वा. | शु.<br>प. | बु.<br>नै. |

" इन्द्रचन्द्राग्निनैर्ऋत्ये याम्ये तोयानिले हरौ ।
सूर्यादिषु च वारेषु वर्जये द्वारयोगिनीम् ॥
दिक्स्थानां संमुखे दृष्टि र्विदिक्स्था वारुणे मता ।
कोणस्थानां च कोणे च तिथि दिश्युदयः क्रमात् ॥"

इति स्वरोदये ।



एवं यत्र यत्राचार्यस्य यवनेश्वरेण सह मतभेद स्तत्र तत्र बादरायणमतमङ्गीकृतं, तदुभयोर्मुनिवचनत्वात्प्रामाण्यं, तत्र क्षीणवर्द्धमानेन्दुभेदात्फलद्वयमेव सम्मतमिति मन्मनसि भातीति ॥ १ ॥

## अथ भौमसौरयोःफलमाह–

ज्वलनवधविषासृक्पित्तरुग्रास्त्रपीडा–
वनिजदिनगतो वै वाध्यते शत्रुसङ्घैः ।
अहनि सवितृसूनोर्दैन्यमाप्नोति गच्छन्
स्वजन–धन–वियोगं मृत्यु-बन्धामयांश्च ॥ २ ॥

ज्वलनोऽग्निः वध स्ताडनं विषं प्रसिद्धं असृक् रक्तं पित्तं धातुः उग्रमुग्रं च तच्छस्त्रं आयुधादि, एतै पीडामाप्नोति । तथारिसङ्घैः शत्रु पूगैश्च बाध्यते पीड्यते को सावित्याह अवनिजदिनयातः भौमवासरगतः ।

तथा च यवनेश्वरः–

विषाग्नि–शस्त्रक्षत–शत्रुवैर–चौरक्षयोपद्रव–भङ्गभेदाः ।

---

वसिष्ठः

"सुरेज्यदैत्यज्यशशीन्दुजानां वाराश्च वर्गाःशुभदाः प्रयाणे ।
आदित्यभुसूनुशनैश्चराणां वाराश्च वर्गा न शुभप्रदाः स्युः ॥"

राजमार्तण्डेऽपि

"सूर्यदिने ऽध्वनिनाश श्चन्द्रे शक्तिक्षयो ऽर्थनाशश्च
ज्वलनारुक्पित्तरुजः कौजे बौधे सुहृत्प्राप्तिः ।
जैत्रे जयधनलब्धिः शुक्रे स्त्रीवस्त्रगन्धधनलाभः
दैन्य–वध–रोगा प्राप्नोति दिनेऽर्क पुत्रस्य ॥ "

तोयेशवन्हिधनदान्तकराक्षसानां
यातोऽर्थवाऽनिलसतक्रतुशङ्कराणाम् ।
दिग्भागमुष्णा, किरणादिदिनेषु देवैः
संरक्षितोऽपि निधनं न चिरादुपैति ॥

प्राप्नोति भौमस्य दिने प्रयातो मोहक्रमद्दिक्कृतां श्च दोषान् ॥

सवितृसूनोः सौरस्याह्नि दिने गच्छन् व्रजन् दैन्यं दिनतां आप्नोति लभते । तथा स्वजनैर्बन्धुभिः धनैर्वित्तैश्च वियोगं लभते मृत्युं मरणं बन्धो बन्धनं आमयान् रोगांश्च प्राप्नोति – इति ।

तथा च यवनेश्वरः–

व्याधिं वियोगं स्वजनापवादं कान्तारचौरादिभयं च तीव्रम् ।
लभेत सौरस्य दिने प्रयाता बन्धं वधं वा विकलाङ्गतां वा ॥ २ ॥

## अथ बुधजीवयोःफलमाह–

बुधदिवसगतोऽरिन् बाधते मन्त्रशक्त्या
श्रवणसुखकथाप्तिं शिल्पिमित्रागमञ्च ।
क्षिति-धन-जयरत्न-श्रीप्रभाव-प्रमोदा–
नखिलमचिरांश्च स्वीकरोत्यह्नि सूरेः ॥ ३ ॥

बुधदिवसे बुधवासरे गतो यात्राऽ रीन् मन्त्रशक्त्या मन्त्रसामर्थ्येन बाधते । मन्त्रशक्ति द्विधा नीतिशास्त्रोक्ता अथवा तन्त्रोक्ता वेदोक्ता च । तथा श्रवणसुखा कर्णसुखोत्पादिका आख्या-यिका तासां आप्तिं करोति शृणोतीत्यर्थः । लेपकार-वर्धकि-चित्रकार-चर्मकार-शरकार-यन्त्राश्मकाराणां सुहृदां चाऽ गमलाभो भवति ।

तथा च यवनेश्वरः-

विद्वत्सुहृत्सज्जनसम्मतत्वं बुद्धिप्रसादं पटुवाक्यताञ्च ।
प्राप्नोति याता दिवसे बुधस्य शत्रुक्षयप्रीतिसुखांश्च भोगान् ॥

सूरेर्जीवस्याह्नि दिने गतः क्षितिर्भूः धनं वित्तं जयो विजयः रत्नानि मणयः श्रीलक्ष्मी प्रभावो मानगुणानां समुदयः प्रमोदा हर्षः एतान् प्राप्नोति तथा अखिलं शत्रुसैन्यं अचिरात् शीघ्रमेव स्वीकरोति आत्मसात्करोति ।

तथा च यवनेश्वरः—

सौख्यं समाज्ञासहितार्थलाभ मूर्जं गुणख्यातिमुदारताञ्च ।
वाग्बुद्धिकर्मप्रभवाञ्च सिद्धिं गुरोरवाप्नोति दिने प्रयाता ॥ ३ ॥



## अथ शुक्रदिने गतस्याह–

प्रवरयुवति–शय्या–वस्त्रगन्धान्नपानं
स्मरसुख–धनरत्नान्यह्नि भुङ्क्ते सितस्य ॥ ३½ ॥

सितस्य शुक्रस्य अह्नि दिने यातु गतस्य प्रवराः प्रधाना युवतयः स्त्रियः शय्या खट्वादि स्तरणानि वस्त्राणि परिधानीयानि गन्धाः सुरभिद्रव्याणि अन्नं भोजनं यानं वाहनं वा पानमिति पाठे पानं पेयद्रव्यम् भुङ्क्ते लभते इत्यर्थः ।

तथा च यवनेश्वरः–

इष्टाङ्गनाभोजनपानमानस्त्रगम्बरस्त्रानसुखोपभोगान् ।
प्राप्नोति शुक्रस्य दिने प्रयाता रतिप्रमोदप्रभवाँश्च लाभान् ॥

तथा च सूक्ष्मयात्राम् -

सूर्यदिने ऽ ध्वविनाश श्चन्द्रे शक्तिक्षयोऽन्नहानिश्च ।
ज्वलनासृक् पित्तरुजः कौजे बौधे सुहृत्प्राप्तिः ॥
जैवे जयधनलब्धिः शौक्रे स्त्री–वस्त्र–गन्धाप्तिम् ।
दैन्यबधबन्धरोगान् प्राप्तोति दिने व्रजन्नार्के ॥
एवं सामान्येनाभिधायाधुना विशेषमाह

अनुपचयगताह्–

शस्तमप्यशस्तं शुभमुपचयसंस्थः पापसंज्ञोऽपि धत्ते ॥

यातु गोचरेणाष्टकवर्गेण योऽनुकूलो ग्रहः स उपचय – गत इत्युच्यते । विपरीतो-ऽनुपचयगतः, नन्वत्रोपचयस्थानानि जातकोक्तानि ।" त्रिषडेकादश दशभान्युपचयानिति" तानि कथं न गृह्यन्ते, कुतो लब्धं यथा गोचरानुकूलो ग्रहोऽष्टवर्ग शुद्धो वेति । उच्यते–गुरोस्तृतीयषष्ठदशमगतस्य गोचरफलमशोभनम् । शुक्रस्य षष्ठदशमगतस्याप्यशोभनम् । तस्मा-न्नोपचयस्थो ग्रह उपचयकरशब्देनोच्यते । यो गोचराष्टकवर्गानुकूलः स उपचयकरो विपरीतोऽ-नुपचयकर इति । जन्मलग्नादुपचयस्थो यो ग्रहस्तस्यैवोपचयकरत्वं स्यादिति चेदस्तु तदपि यत्र

गन्तुमिच्छा तत्काले गोचराष्टकवर्गाभ्यां सत्फलदो भवति तथैवोपचयकरः स्यादित्यनेन ज्ञातजातकस्याष्टवर्ग शुद्धोऽज्ञातजातकस्य जन्मर्क्षाद्गोचरेण शुद्धस्तदप्यज्ञाते नामराशेर्गोचर-शुद्धो गोचरानुकूलः ।

तथा च ग्रहगोचरे—

सूर्यः षट्त्रिदशस्थित स्त्रिदशषट्सप्ताद्यगश्चन्द्रमा
जीवः स्वप्तनवद्विपञ्चमगतो वक्रार्कजौ षट्त्रिगौ ।
सौम्यः षट्द्विचतुर्दशाष्टमगतः सर्वेप्युपान्ते शुभाः
शुक्रः सप्तमषट्दशर्क्षरहित, शार्दूल वत्त्रासकृत् ॥

अनुपचयगतो यो ग्रहो गोचरेणाष्टकवर्गेण वाऽनिष्टस्थानस्थः स च यदि शस्तः शुभो भवति तदापि तदह स्तद्दिनं शस्तं शोभनमप्यशस्तं भवति। अथ पापसंज्ञः क्रूरग्रहोऽपि यद्युप-चयस्थो गोचरेणाष्टकवर्गेणानुकूलो भवति सोऽपि शुभं फलं दत्ते ददाति। तदहनि गतस्य शुभं भवति अपि शब्दः संभावनायाम् । शुभग्रहो यदि गोचराऽनुकूलोऽष्टकवर्ग शुद्धश्च भवति तदा तद्दिने यात्राऽतीव शुभफलदा भवति। अथ यदि पापग्रहो गोचराष्टकवर्गाभ्यामुभयतः शुद्धस्तद्दिने यातु शोभनं फलं भवति।

उक्तम्—

उपचयकरग्रहदिने सिद्धिं करोति यायिनाम् ।
सौम्येप्यनुपचयस्थे न भवति यात्रा शुभा यातुः ॥ ४ ॥ इति ॥

इति भट्टोत्पलविरचितायां यन्त्येऽश्वमेधीययात्राविवृत्तौ ग्रहदिवसफलाऽध्यायः पञ्चमः ॥ ५ ॥



# अथ मुहूर्ताध्यायो व्याख्यायते

## तत्रादावेव करणानां शुभाशुभफलमाह—

गरवणिजविष्टिपरिवर्जितानि करणानि यातु रिष्टानि ।
गरमपिकैश्चिदिष्टं वणिजं च वणिक्क्रियास्वेव ॥ १ ॥

अत्र तावत् करणान्येकादशस्तेषां चत्वारि स्थिरकरणानि तानि च मासे सकृद्भवन्ति। तानि च कृष्णचतुर्दश्यपरार्द्धात्प्रभृति प्रतिपदाद्यर्धं यावत् भवन्ति। यतः तिथौ करणद्वयम् ।

उक्तञ्च—

कृष्णचतुर्दश्यन्ते शकुनिः पर्वणि चतुष्पदं प्रथमे ।
तिथ्यर्द्धेऽन्त्ये नागं किंस्तुघ्नं प्रतिपदाद्यर्धे ॥

तथा चलकरणानि—

बवबालव-कौलव-तैतिलाख्य-गर—वणिक्-विष्टि-संज्ञानि सप्त। तानि च शुक्लप्रतिपदु-त्तरार्द्धात्प्रत्येकस्यां तिथौ करणद्वयं यावत् कृष्णचतुर्दश्यर्द्धमाद्यमिति करणानि। अनया रीत्या करणानि ज्ञात्वा, तत्र गर-वणिज-विष्टि-वर्जितान्यन्यानि करणानि यातुर्गमनेच्छो रिष्टानि शुभानि तानि च बव-बालव-कौलव-तैतिलानिगरवणिज-विष्टयः त्रीणि अशुभानि, तथा च गरमपि कैश्चिन्मुनिभिर्वसिष्ठादिभिः शस्त्रं शोभनमुक्तं तैरेव वणिजमपि वणिक्क्रियासु क्रय-विक्रय-विधौ शस्तमुक्तम् ।

तथा च वसिष्ठः—

गराख्यं शुभदं याने वाणिज्ये वणिजं तथा ।
विष्टिश्च सर्वदा वर्ज्या यातुः प्राणार्थनाशिनी ॥ १ ॥

एवं दिनतिथिनक्षत्रादिकमभिधायेदानीं यात्रायां मुहूर्त्तोपदेशं कुर्वन्

## प्रथमं तेषां दिनरात्र्यवस्थानविभागं दर्शयितुमाह–

शिवभुजगमित्रपितृवसु जलविश्वविरञ्चःपङ्कजप्रभवाः ।
इन्द्राग्नी इन्द्रनिशाचरवरुणार्यमयोनयश्चाह्निः ॥ २ ॥
रुद्राजाहिर्बुध्न्याःपूषादस्त्रान्तकाग्नि धातारः ।
इन्द्रादितिगुरुहरिरवित्वष्ट्रानीलाख्याःक्षणरात्रौ ॥ ३ ॥

क्षणशब्दो मुहूर्त्त पर्य्यायः । यस्य मुहूर्त्तस्य या देवता स तदीयैव संज्ञया इह उपदिष्ट । शिवादियोन्यन्ताः पञ्चदश मुहूर्त्ताः पाठक्रमेणोदिता दिवसे स्थिताः । तथा रुद्राद्यनिलान्ताः पञ्चदश मुहूर्त्ता रात्रौ स्थिताः । तत्र दिनस्यादौ प्रथमः शिवः, तदनन्तरं द्वितीयो भुजगः, तृतीयो मित्र श्चतुर्थः पिता, पञ्चमो वसुः, षष्ठो जलसंज्ञः, सप्तमो विश्वः, अष्टमो विरञ्चः, नवमः पङ्कज प्रभवो ब्रह्मा, दशम इन्द्राग्नी, एकादश इन्द्रः, द्वादशो निशाचरः, त्रयोदशो वरुणः, चतुर्दशो यमः पञ्चदशो योनि भगाख्यो दिनान्ते ।

तथा रात्र्यादौ प्रथमो रुद्रः तदनन्तरं द्वितीयोऽजः श्चरणः तृतीयोऽहिर्बुध्न्यः चतुर्थः पूषा पञ्चमो दस्रः षष्ठोऽन्तकः सप्तमोऽग्निरष्टमो धाता नवम इन्दुः दशमोऽदितिरेकादशो गुरुः द्वादशो हरिः त्रयोदशो रविः चतुर्दश स्त्वष्ट्रा पञ्चदशोऽनिलो रात्र्यन्ते । एषां शिवादीनामनिलपर्य्यन्तानामहोरात्रावस्थितानां त्रिंशत्संख्यानां पर्यायान्नक्षत्रवत् क्षणानामिति ।

तदुक्तम्—

यन्नक्षत्रे यदुद्दिष्टं तत्कार्यं तत्क्षणेष्वपि ॥ इति ॥

अथ मुहूर्त्तपरिज्ञानोपायमाह —

अन्हः पञ्चदशांशो रात्रेश्चैवं मुहूर्त इति ।
संज्ञा सर्वा ज्ञेया स्तच्छङ्कोश्छाया यन्त्राम्बुभिर्युक्त्या ॥ -

यस्मिन् यस्मिन् काले स्फुटार्कवशात् सायनात् यद्देशे यद्दिनप्रमाणमुत्पद्यते तत्पञ्चदशभागस्य मुहूर्त्त इति संज्ञा नाम तथा रात्रेः पञ्चदशभागस्यापि ज्ञेयम् । एवं योऽह्नो दिनस्य पञ्चदशांशः पञ्चदशो भागः यश्च रात्रे पञ्चदश भाग स्तस्य मुहूर्त्तसंज्ञाः बोद्धव्याः । स च मुहूर्त्त स्तज्ज्ञै मुहूर्त्तज्ञैः गणितविद्भिर्दैवज्ञैः छायया शङ्कोः सम्बन्धिन्याः यन्त्रः चक्रधनुस्तुर्यफलक गोलकप्रभृतिभिर्यन्त्रै स्तथा घटदलरूपाम्बु घटीयन्त्रेणेति । एतैर्युक्त्या गणितस्कन्धे कालानयन



प्रकाराण्युक्तानि तैः सम्यक्कालमुपलभ्य मुहूर्त्तो वाच्यः ।

घटी यन्त्रलक्षणमाचार्येणैवोक्तं,

तद्यथा—

मेघाद्याच्छादिते घटीयन्त्रं विना कालज्ञानं दुर्घटमिति, तं कालं घटयत्यत इयं घटिकेति । घटार्द्धरुपा घटिका ताम्रविनिर्मिता तले छिद्रा इति छायया यन्त्रैर्वाम्बुयुक्त्या वा दिनस्य रात्रेर्वाभीष्टकाले गत कालं ज्ञात्वा वर्तमान मुहूर्त्त उपदेश्य इति । अत्र केचिन्नित्यमेव द्विघटिकं मुहूर्त्त मिच्छन्ति, तत्र विषुवद्दिने पञ्चदशमुहूर्तात्मकं दिनं, पञ्चदशमुहूर्त्ता रात्रि । यथा यथोत्तर–गोलस्थे ऽर्केऽह्नो बृद्धि स्तथा तथा दिनाश्रितमुहूर्त बृद्धिः । यथा यथा रात्रिहानिः तथा तथा रात्र्याश्रितमुहूर्त्तानां हानिः । एवं दक्षिणगोलस्थेऽर्के यथा यथा तथा दिनमानस्य हानि तथा तथा दिनाश्रितमुहूर्त्तस्य हानिः, यथा यथा रात्रिबृद्धि स्तथा रात्र्याश्रितमुहूर्त्तानां बृद्धिः परं मानन्तु द्विघटिकमेव, अतोऽहोरात्रमानं सदैव षष्टिघटीमितम् मुहूर्त्तास्त्रिंशत्, एवं चेत् मिथुनान्तगतेऽर्केऽष्टादश मुहूर्ता दिने, द्वादश मुहूर्त्ता रात्रौ धन्वन्तगतेऽर्के दिवा द्वादश मुहूर्त्ता रात्रावष्टादश मुहूर्त्ता इति ।

तत्र प्रमाणं पुराणेः–

दशपञ्चमुहूर्त्तोऽह मुहूर्त्ता स्त्रय एव च ।
दशपञ्चमुहूर्तो वै दिनं वैषुवतं स्मृतम् ॥
बर्द्धतेऽन्हि स्वमन्ते च परे ये दक्षिणोत्तरे ।
अहश्च ग्रसते रात्रिं रात्रिश्च ग्रसते त्वहः ॥
शरद्वसन्तयोर्मध्ये विषुवत्तु विभाव्यते ॥ इति ॥

तथा च गर्गः–

सर्वा श्रेण्यापि विख्याता मुहूर्ता स्त्रिंशदेव तु ।
दिवा पञ्चदशोच्यन्ते रात्रौ पञ्चदशैव च ॥
अहोरात्रसमत्वेन भेदः पञ्चदशात्मकः ।
उत्तरोत्तरबृद्ध्या तु मुहूर्त्ताः सञ्चरन्ति षट् ॥
सञ्चारिषु मुहूर्तेषु षट्सु पर्यायगामिषु ।
दिनरात्र्यो रथ प्रोक्ता ह्रासो बृद्धि मुहूर्तगः ॥

अहर्द्वादशसु क्षीणं मुहूर्तेष्वैव तिष्ठति ।
द्वयोर्गत्यो रथार्कस्य द्वादशस्यैव च क्षपा ॥
ऐन्द्रवारुणवायव्यां रौद्रगान्धर्वदानवाः ।
षडेते सञ्चरन्त्यत्र चतुर्विंशतिरन्यथा ॥

तथा च चाणक्यः–

द्विनाडिको मुहूर्तः पञ्चदश दिवसो रात्रिश्च । चैत्रे वाऽश्वयुजे मासि भवतः । तत स्त्रिमुहूर्त्तोऽन्यतरपण्मासान्वर्द्धते ह्रसते चेति ।

तस्मान् सुष्ठूच्यते—

द्विवानिशं मुहूर्ता वर्द्धन्ते ह्रसन्ते च मुहूर्ते सर्वप्रमाणमनियतं सर्वम् । द्विनाडिको मुहूर्त्त इति ।

तथा च गर्गः–

क्षणो द्विनाडिको ज्ञेयो मुहूर्त्तस्तु द्विनाडिकः ।

तथा च पराशरः–

नाड़िकाद्वय मुहूर्त्त स्तेषां तु यथा दैवतनाम धर्मिणोर्दिनरात्र्योः स विज्ञेयः त्रिंशांशो मुख्य सञ्ज्ञितः ।

तथा च ऋषिपुत्रः–

त्रिंशद्भागो मुहूर्तो वै तद्भत्स्यात् नाडिका द्वयम् ।
अपांसक्तत्व च प्रस्थो दशमं च स नाडिका ॥
अहोरात्रे मुहूर्त्ताश्च नानाकर्म गुणाश्रयः ।
एते नियत नक्षत्राः साधनं मानसाधिता ॥

यदि दिवानिशमुहूर्त्ता न नियता मुहूर्त प्रमाणं तत् किम् । नियतं दिवा निर्देशेन संख्या नियमेन च किञ्चित् प्रयोजकमित्युच्यते । सूर्योदयादेवैषां प्रवृत्तिः न त्वर्द्धरात्रादस्तमया द्वेति । दिनचार स्तत्राचार्यैं भिन्नकालः उक्तः ॥ ३ ॥

तथा चाचार्याह—

**दिनवारप्रवृत्तिर्यः समासो यत्र कारणं कथितः ।**



**नेहापि भवति यस्माद्धि प्रवदन्तेऽत्र दैवज्ञाः ॥ ४ ॥**
**द्युगणाद्दिनवाराप्ति द्युगणोऽपि हि देशकालसंबन्धः ॥ ४½ ॥**

लाटाचार्येणोक्तम्—

रोमकपुरेऽस्तमयेऽर्के रव्युदयो भवति लङ्कायाम् ।
यवनानां निशि दशभिर्गतैर्मुहूर्तैश्च तद्गुणोऽभिहितः ॥
लङ्कार्द्धरात्रसमये दिनप्रवृत्तिं जगाद चार्यभटः ।
भूयः स एव सूर्योदयात्प्रवृत्तिं राहलङ्कायाम् ॥

दिनवारप्रवृत्तिकालाद्यथा दिनमासाब्दयुगकालाः प्रवृत्ता स्तथा मुहूर्तानामपि प्रवृत्तिर्माभूत् । तस्माद्दिवारात्रि ग्रहणमिति । मुहूर्तास्तु सर्वत्र सर्वदा सूर्योदयात्प्रवृत्ताः ।

तथा च पराशरः—

अथ मुहूर्ता स्त्रिशत्सूर्योदयादि तुल्यक्रमाच्चक्रारवत् । अजस्रमहोरात्रं परिवर्तमानः साय– नमानमभिवर्तयन्ति ॥ ४½ ॥

अत्राऽऽचार्येण प्रदर्शितम्—

**अष्टमेऽर्द्ध दिवसे समे शुभो यो विरिञ्च विभुसंज्ञकोऽन्यथा ॥ ५ ॥**

हि समग्रहणेन संख्या नियमेन न किञ्चित्प्रयोजनं, इत्यनेनैतत् ज्ञापयति । विषुवति नं सर्वकालमिति । एवमेते पञ्चदशदिवा समा एव तेनाष्टमोऽभिजिद्भवत्येव, अर्थादेव सूर्योदया- देव मुहूर्त्ताः प्रवृत्तिरिति । एतदस्माकं न प्रतिभाति, परं विचारदृष्ट्या द्वियटिको मुहूर्तो विषु- वति भवति, यत स्तत्र त्रिंशत् घटीमितं दिनं तावत्येव रात्रिः ।

तथा च पौलिशादः—

प्राणायाम·त्रिशती षष्ट्युिता द्विगुणिता विषुवति मुहूर्त्तः । इति ।
स्वस्थेन्द्रियस्य पुंसः प्रस्वपतो जाग्रतो वापि ॥

तेनोत्तरगोलाश्रितेऽर्के यथा यथा दिवसवृद्धिः तथा तथा दिवाश्रितमुहूर्त वृद्धिः । यथा यथा रात्रिहानिस्तथा तथा रात्र्याश्रितमुहूर्त हानिः । दक्षिणगोलाश्रितेऽर्के यथा दिनहानिस्तथा

तथा दिवाश्रित मुहूर्त्त हानिः, यथा यथा रात्रिवृद्धि स्तथा तथा रात्र्याश्रितमुहूर्त वृद्धिः इति।

अत एवाचार्येण, पञ्चदशांशो रात्रेरित्युक्तं, "यै रुक्तो द्विघटिकः सर्वदैवमुहूर्त त एव चाहुः षण्मुहूर्ताश्चराचरा इति।" एतद्गोलवासनाविरुद्धम् । यतः सर्वत्रैव तल्लक्षणं न भवति। यस्माद्यत्र देशे त्रिंशत् घटिको दिवस स्तत्र न कश्चिन्मुहूर्त्तश्चराचर इति। यत्र द्वात्रिंशत् घटिका परा दिनवृद्धि स्तत्र द्वौ मुहूर्तौ चराचर इति पाठः। चतुस्त्रिंशत् घटिका परा दिन वृद्धि स्तत्र चत्वारो मुहूर्ताः चराचराः तेषां प्रतिदेशं अन्यथा लक्षणकर्तुमापद्यते । यत्र षट्त्रिंशद्दिनमानं तत्र षण्मुहूर्ताः चराचराः। यत्राष्टत्रिंशन्मानं तत्राष्टौ मुहूर्ताश्चराचराः । यत्र चत्वारिंशत्परा दिनवृद्धि स्तत्र दशमुहूर्ता श्चराचरा इति। तेषां प्रतिदेशमन्यथा कर्तुमुपयुज्यते। अतोऽत्र विचार दृष्ट्या अव्याप्ति रतः सुतरां तद्विरुध्यते। यदाहुः पञ्चदशो भागो मुहूर्त इति, तत्रार्द्ध दिवसेऽभिजित् ।

अत एवाऽचार्यो वक्ष्यति, 'अष्टमोऽर्द्ध दिवसे समो शुभ इति। समग्रहणं मध्यान्होपलक्षणार्थं न तु पुनः समदिवसस्य। अतो मध्यान्हं विनाऽन्यत्र कालेऽभिजिद्भवति। तत्कथं ज्ञातमिति चेत्। भगवान् व्यासो युधिष्ठिरजन्मनि—

ऐन्द्रे चन्द्रे समायुक्तेऽभिजित्संज्ञे क्षणेऽष्टमे ।
दिवामध्यगते सूर्ये सा सुषाव तदा सुतम् ॥ इति ॥

अत्र ये सदैव मध्यान्हे कालेऽभिजिदिच्छन्ति तेषां मध्ये घटते । अन्ये वदन्ति, यथा विषुवद्दिनेऽष्टमेऽभिजित्संज्ञके मुहूर्ते युधिष्ठिरजन्मनि चैवं, ज्येष्ठपौर्णमास्यां ज्येष्ठानक्षत्रे मध्यान्हे युधिष्ठिरजन्मः।

तथा च मार्कण्डेयसंहितायां पठ्यते —

ऐन्द्रे चन्द्र समायुक्ते शशाङ्के पूर्णमण्डले ।
मध्यान्हकालेऽभिजिति सा सुषाव युधिष्ठिरम् ॥

ज्येष्ठानक्षत्रयुक्ता पूर्णा ज्येष्ठशुक्लपूर्णा ज्येष्ठायुक्ता भवति। चन्द्रोप्यखण्डमण्डलो भवत्येव न च तत्र काले विषुवत्सम्भवः, यथाऽर्द्ध कालेऽभिजिद्भवति। तेन मुहूर्तानां पञ्चदशानां कदाचिच्चतुर्दशादि न च षोडशादि संख्यावृद्धि हानि, किन्तु तन्मानस्यैव हानि वृद्धीति, नोचे ज्ज्येष्ठशुक्लराकायां मध्यान्हे भवन्मते कथं तत्र प्रायो दिनमानं त्रयस्त्रिंशत् घटीमितम्। तत्र रौद्रादि



क्रमतो ऽष्टमोऽभिजित्तु षोडशघट्यवधि-न च तत्पर तन्मध्यं गते रवौ तु सूर्योदयाद्दिनगत-घटिका १६।३० तथा च नात्र विषुवती।

कृष्णजन्मन्यपि भगवान् व्यासः—

अभिजिद्योगसंप्राप्ते निशाया यौवने गते।
अर्द्ध रात्रे करिष्यामि गर्भमोक्षं यथा सुखम् ॥ इति ॥

अत्राऽर्द्ध रात्रेऽभिजित्कथमिति नाशङ्कनीयं । मध्यान्हे मध्यरात्रे च ब्रह्मदैवतमुहूर्तो भवत्येवातो ब्रह्मदैवत्यप्रायेणार्द्ध रात्रेप्यभिजित्त्वम् ।

अतः कृष्णस्यापि न च विषुवति जन्मः श्रावण्यामतीतायां कृष्णाष्टम्यामर्द्ध रात्रे जन्मेति, सकलशास्त्रसंमतमतस्तत्रापि रोहिणी मुहूर्तसंभवो भवन्मते गगनकुसुमायमानमत स्तादृगाग्रहोऽनुचितः।

भगवता गर्गेणापि—

दिनमध्यगते सूर्ये नष्टछाये चराचरे ।
मध्यकालस्त्वभिजितः सर्वकर्मसु पूजितः ॥ इत्युक्तम् ॥
निरक्षदेशे नष्टछायाकालो मध्यान्हं विना न भवति।

वसिष्ठेनाप्युक्तम्—

अभिजिद्योगसंप्राप्ते मध्यं दिनगते रवौ ।
चक्रमादाय भगवान् सर्वान्दोषान्निकृन्तति ॥ इति ॥

एवं पुराणागम-मुनिवचनात्सर्वदैव मध्यान्हेऽभिजित्सिद्धिः । तस्याष्टमत्वान्मध्याह्न-भावित्वान्मुहूर्त्तानां क्षयवृद्धिः सिद्धेति। अत्र केचिद्गोलज्ञा एवमिच्छन्ति, यथा सूर्योदयास्त-मयावधिकृत्य मुहूर्तानां दिनावस्थितानां प्रवृत्तिनिवृत्ती मध्याह्ने सदैवाऽभिजिद्भवतु न कश्चिद्दोषः किन्त्वष्टमः स च चरार्द्ध वशाद्यथा दिनस्य क्षय वृद्धिर्गोलादुपपद्यते, तथा मुहूर्त्तानामप्यतो दिनमानं पञ्चदशधा विभज्य प्रत्येकं रात्रि मुहूर्त्त मानं दिवसे रात्रौ रात्रिमानं पञ्चदशधा विभज्य प्रत्येकं रात्रिमुहूर्तमानम् ॥ ४ ॥

## अथ यस्मिन् मुहूर्त्ते यां दिशं यायाद्यातस्य यथा विधंफलं भवति तद्दर्शयितुमाह—

नक्षत्रवत् क्षणानां परिघादि तदीश्वरै श्चिन्त्यम् ।
फलमपि तदेव सिद्धं गर्गाद्यै स्तत्र च श्लोकः ॥ ५ ॥

क्षणानां मुहूर्त्तानां नक्षत्रवत्, परिघादि परिघं दिकूशूलं सार्वद्वारिकत्वं च चिन्त्यं निरूप्यम् कथमित्युच्यते, तदीश्वरैःसममिति, तदिति नक्षत्राणामेव परामर्षं करोति ईश्वरः स्वामी। एतदुक्तं भवति यस्य नक्षत्रस्य यः स्वामी देवः स एव यस्य मुहूर्त्तस्य स्वामी तयोः समं फलं चिन्त्यम् । नक्षत्रेश्वरनामधेयमुहूर्त्तस्य नक्षत्र परिघादि समं ज्ञेयमित्यर्थः, फलमपि तदेव दृष्टं गर्गाद्यै रिति। यस्य नक्षत्रस्य यत्फलं तादृगेव तदीश्वरमुहूर्त्तस्यापि फलमुपलब्धं गर्गवसिष्ठपराशरादिभिः क्षणेषु नक्षत्रसंज्ञितेषु। ननु यदि नक्षत्रस्य यत्फलं तादृगेव नक्षत्रेश्वरसंज्ञक मुहूर्त्तस्यापि तदेव फलं तदा नक्षत्रस्यावसर एव नास्ति। अहोरात्रं सर्वं मुहूर्त्तै र्व्याप्तं सर्वेषां च नक्षत्राणामीश्वरसंज्ञका नक्षत्रादप्यधिका विद्यन्ते। अतो नक्षत्राणां कथं तत्र स्वफलदातृत्वस्यापरः। अथ चन्द्रनक्षत्रस्याभ्यन्तरे तदीश्वरसंज्ञका मुहूर्त्ताश्च द्रयुक्तनक्षत्रतुल्या भवन्ति। तदा फलतुल्यत्वान्मुहूर्त्तफलानां फलनिर्देशेन न किञ्चित्प्रयोजनमित्युच्यते। अहोरात्रं च संपूर्णमित्यादिकं तत्र च प्रमाणीकरणं पठन्ति मुनयः।

अहोरात्रञ्च सम्पूर्णं चद्रन्नक्षत्रयोजितम् ।
तन्नक्षत्रमुहूर्ताश्च सर्वकर्मगुणाः स्मृता ॥

अहश्च रात्रिश्च तदहोरात्रं सम्पूर्णग्रहणं त्रिंशतामपि मुहूर्त्तानां ग्रहणं करोति तदेवाहोरात्रं नक्षत्रयोजितम्। तन्नक्षत्रमुहूर्त्ताश्च तदित्यनेन तत्कालयुक्ते चन्द्रे परामृशति। चन्द्रयुक्तनक्षत्रदेवता यस्य नक्षत्रस्य स तन्नक्षत्रमुहूर्त्तः। तद्वत्स्वसंज्ञा नामधेयेश्वर नक्षत्रमध्ये स्ववेलायां तुल्यकर्म गुणत्वं प्रतिपद्यते। तच्चाविकलं भवति। यथा मकरलग्ने तद्द्रेष्काणे तदंशके स्थितः स स्वदिवसे च फलप्रद स्तदन्यग्रहराशिभागे द्रेष्काणादिगतः, न च राश्यंगादीनां स्वफलनाशो भवति। राश्याद्याः सर्वे एव स्वफलप्रदाः। एवं सत्यपि कालाङ्गविभागे द्वाभ्यां द्वाभ्यां राशिभ्यामेकर्तु रेवं वृषमिथुनगतेऽर्के ग्रीष्मर्तुस्तत्र सर्वदैव ग्रीष्माधिक्यम् नानुभूयते, किन्तु सर्वकालापेक्षयाऽधिकघर्मो मध्याह्ने एवानुभूयते। तत्र अहोरात्रात्मककालं षडधा विभज्य



वसंतादीनामन्तरा यथाऽनुभवसिद्धास्तद्वदत्रापि मुहूर्त्तजन्यं फलमिति।

तद्यथा—

सूर्योदयात्सामान्यतो दशदण्डावधि वसन्तर्त्तुस्ततो विंशति घटिकावधि ग्रीष्मर्त्तुस्तत स्त्रिंशत् घटिकावध्यर्थात्सूर्यास्तं यावद्वर्षर्त्तुः। ततो रात्रिप्रथमभागे शरदृतुः, मध्यमभागे हेमन्तर्त्तुः, रात्रिशेषे शिशिरर्त्तुरिति। यत्र यत्र बृहत्सूक्ष्मयोः संयोगादेव तत्फलमधिकमनुभूयते।तद्वदत्रापि लापनीयम्, अस्तु तत्, यत्र कुत्राप्यन्तरा समानस्यैवात्र कथं चन्द्रनक्षत्रेऽर्कोदयात्प्रवृत्तानां दिवामुहूर्त्तानां सूर्यास्तात्' प्रवृत्तानां रात्रिमुहूर्त्तानामन्तरा भवितु'मर्हतीति चेत्,सूर्योदयात्सूर्यास्तात्प्रवत्ता एते सौरसावनात्मककालस्याऽवयवास्ते च त्रिंशदंशात्मकास्तेषां भुजगादीनि नामानि भगवता स्वयमेव कल्पितानि। अतो भगवता ब्रह्मणा कल्पित कालावयवात्मक मुहूर्त्तानां ये भुजगादयोऽधिपा तत्समानाऽधिपानि नक्षत्राणि चाऽनयोः समानाधिपत्यत्वादन्तरा भवितुमर्हत्येव। यत्राऽश्लेषानक्षत्रं तत्रैव भुजगमुहूर्त्तजन्यं फलं प्रचुरम्। तदन्यत्रापि किञ्चित्तज्जन्यं फलं भवत्येव। ऋतुफलवत्, ग्रीष्मर्त्तावप्यर्द्धरात्रेऽपररात्रे च यथा किञ्चिद्धिमत्वं शिशिरत्वं च यथाऽनुभवरसिका अनुभवं कुर्वन्ति तद्वदत्रापि। भवत्वेवं प्रतिक्षणविलक्षणं नक्षत्राणि तु यस्मिन् काले यस्य यस्योदयं भवति नक्षत्रस्य तस्यैव फलोत्कर्षत्वे वक्तव्ये। कथमीदृगुक्तमिति चेत्तदपि सत्यम्। तत्कालोदितनक्षत्रमेवोदितनक्षत्रं भवितुमर्हति। परमेषां मुहूर्त्तानां नक्षत्रसंज्ञा न कृता भगवता। मुहूर्त्तसंज्ञा एव कृता। मुहूर्त्तेशनक्षत्रेशयोरैक्यत्वात्स्वामिवशादेव स्वाम्यधीनं फलमुपवर्णितं तदप्यस्तु। नक्षत्रोदयादेव सूक्ष्मं फलम्। अत एवोक्तम्, आवश्यके क्षुरकर्मणि।

क्षौरे तु कर्मणि हितान्युदये क्षणे च
युक्तानि चोडुपतिना यदि शस्त ताराः ॥

क्षौरनक्षत्राभावे, क्षौरनक्षत्रोदयकाले, क्षौरनक्षत्रेश्वराख्ये मुहूर्त्ते च यद्युदये मुहूर्त्ते च शस्ता तारा स्यात्तदा कर्तव्यमिति।

अत्राऽऽचार्योऽप्याह—

राज्ञः कार्यं पञ्चमे पञ्चमेऽह्नि क्षौरर्क्षे वा श्मश्रु तस्योदये वा ।
तद्दैवत्ये तन्मुहूर्त्तेऽपि तारा निंद्या नोचेत्तन्मुहूर्त्तोदयाभ्याम् ॥ इति ॥

तथा च चाणक्यः—

नक्षत्रासम्पत्तौ तत्फलमप्युदये मुहूर्त्तेऽपि ।

अन्यदपि—

तन्नक्षत्रमुहूर्त्ताश्च समकर्म गुणाःस्मृताः ॥ इति ॥

## अथ दिनावस्थितमुहूर्त्तानां मध्ये निर्दिष्टस्य विरञ्चिनाम्नो मुहूर्त्तस्यान्यमुहूर्त्ताद्विशिष्टं दिग्भागेऽनिष्टञ्च निरूपयितुमाह—

अष्टमोऽर्द्धदिवसे समे शुभो यो विरञ्चि विभुसंज्ञित क्षणः ।
तेन यानमपहाय दक्षिणां सर्वदिक्ष्वभिजिता प्रशस्यते ॥ ६ ॥

दिनावस्थित मुहूर्त्ताः समे तुल्ये मध्यान्हे विरञ्चि विभुसंज्ञितः विरंचि ब्रह्मा स यस्य विभुः स्वामी तत्संज्ञितः क्षणो मुहूर्त्तोऽभिजिन्नामा स च सर्वकार्येषु शोभनः तेनाऽभिजिता दक्षिणां दिशं याम्याशायां गमनं विहाय वर्जयित्वा अन्यासु सर्वासु तिसृषु दिक्षु गमनं प्रशस्यते स्तूयते दक्षिणदिग्गमनेऽर्कः संमुखो भवत्यतस्तत्प्रतिषेधः ।

यतो वक्ष्यति—

यश्चाष्टमो मुहूर्त्तो विरञ्चिनामाभिजित्स निर्दिष्टः ।
तस्मिन् त्यक्त्वा याम्यामन्यत्र गतस्य जयलब्धिः ॥

अथ येन न्यायेनाभिजिद्यामाशायां गमने हितो न भवति, तेनैव न्यायेनार्द्ध रात्रे पतितो विरञ्चिदेवताकमुहूर्त्तोप्युदारस्यांगमने हितकृन्न भवति। अनयैव तिशाऽर्कोदयकाले प्राच्यां गमने हितो न, सूर्यास्ते प्रत्यग्गमनं च हित न भवत्यतस्तद्विलोम दिग्गमनं हितकरमित्यर्थात्समायात्यतौ मध्याह्नकालो उत्तरस्यां, अर्द्धरात्रकालो दक्षिणस्यां गोधूलं पूर्वस्यां प्रातः सूर्योदयकालः पश्चिमस्यां गमने हितकरं भवतीति ।

उक्तञ्च—

व्रजेदर्कोदयेऽस्ते वा मध्याह्ने वा निशीथतः ।
प्रत्यक्प्रागुत्तरस्यां वा ह्यर्द्धरात्रेप्यशङ्कितः ॥ ६ ॥

इति भट्टोत्पलविरचितायां यक्षेऽश्वमेधीययात्राविवृतौ मुहूर्ताऽध्यायः षष्ठः ॥ ६ ॥



# अथ चन्द्रबलाध्यायो व्याख्यायते

## तत्रादावेव सत्याचार्यमतं प्रदर्शयति—

[1]सत्य आह मतिकर्मकल्पहा जन्मग स्तुहिनगु र्यियासत : ।
तत्र देहनवतेव जायते तेन कर्मसु न साधक : स्मृत : ॥ १ ॥

सत्यः सत्याचार्यः एवं आह कथयति । तथा तुहिनगुः शीतरश्मिः चन्द्रः, यियासतो गच्छतो जन्मगो जन्मराशिस्थो यदा यात्राकाले भवति तदा मतिकर्मकल्पहा मति बुद्धिः कर्म यत् क्रियते कल्पमारोग्यं एतान् हन्ति नाशयति, केन हेतुना अत्र देह नवतेव जायत इति । यत स्तत्र जन्मराशिगे चन्द्रे देहनवता शरीराभिनवत्त्वम् जायते उत्पद्यते पुनरुत्पद्यत इवेत्यर्थः, केन कारणेन कर्मसु सर्वक्रियासु साधक सम्पादको न भवतीति स्मृत उक्तः । तत्रस्थे चन्द्रमसि स पुमान् जातः, यदा तत्र चन्द्रो भवति तदा तदा तस्य देहो नवता इव जायते, तेन असक्तत्वात्कर्मसु न साधक इति ।

तथा च सत्य—

जन्मर्क्षगतश्चन्द्रो यातुर्नेष्टो ह्यसक्तफलदत्वात् ।
तस्माद्यात्रा समये जन्मनि चन्द्रस्त्यजेन्मतिमान् ॥ इति ॥

---

१ "भूपञ्चनन्दायमषड्दिशश्चवह्न्याद्रिवेदावसुरुद्रसूर्याः ।
मेषादिकानां क्रमशो भवन्ति यात्रासु युद्धेषु च घातचन्द्राः ॥
युद्धे चैव विवादे च कुमारीपूजने तथा ।
राजसेवावाहनादौ घातचन्द्रं विवर्जयेत् ॥
तीर्थयात्राविवाहान्नप्राशनोपयमादिषु ।
माङ्गल्य सर्वकार्येषु घातचन्द्रं न चिन्तयेत् ॥
मेषकन्याघटहरिनक्रयुग्मधनुर्वृषाः ।
मीनसिंहधनुःकुम्भा घातचन्द्रा अजादितः ॥"

अत्र परमुखेन दूषणमाह —

तच्च तस्य बहुभिर्विरोधितं लग्नमेव सुतरां तनुर्यतः ।
तुल्यदेह नवतां प्रपद्य किं स्वोदयोदयमुवाच शोभनम् ॥

तच्च यत्प्रागुक्त सत्यमतं तत्र ' देहनवतेव जायते इति' । तद्बहुभिः प्रभूतैराचार्यैः, विरोधिमत्तैः सह विरोधतां प्राप्तःकुतो हेतोः "लग्नमेव सुतरां तनुर्यतो" यस्माल्लग्नं जन्मलग्नं सुतरामतिशयेन प्राधान्येन तत्र प्रोक्तम् ।

तथा च यवनः—

"मूर्त्तिं च होरामिति" येन लग्नेन पुमान् जातः स च अहोरात्रमध्ये यदा उदेति तदा तस्य देहो नवतेव जायते,एवं तुल्यत्वेन समत्वेन देहनवतां प्रपद्याङ्गीकृत्य किं स्वोदयं स्वजन्मलग्नोदयं तत्काललग्नगतं शोभनं तथा चोक्तवानिति ।अत उक्तम्, "इष्टं स्वजन्मलग्नमिति" ॥१॥

## अथ स्वमतेन सिद्धान्तीकर्तुमाह–

अष्टवर्ग परिशोधितः शशी श्रेष्ठतां समनुवर्त्तते यदा ।
जन्मगोऽपि हि तदा प्रशस्यते योऽष्टवर्ग शुभदः स शोभनः ॥२॥

जातकोक्ताऽष्टकवर्गेण शशी चन्द्रः परिशोधित शुभत्वेन निर्मलीकृतो यदा यस्मिन् काले तदा श्रेष्ठतां शुभत्वं च स अनुवर्तते सम्यगनुयाति । तदा जन्मगो हि प्रशस्यते स्तूयते, अपि शब्दादन्यस्थानगतो हि यस्मादर्थे, तस्माद्योऽष्टकवर्ग शुभदः स एव शोभनः श्रेष्ठफलः, तत्रैव, अष्टवर्ग शुद्धश्चन्द्रो यदि जन्मराशावशोभनस्तदैव यात्रायां निषिध्यते । अन्यथा देय इति ॥२॥

## अथाऽष्टकवर्गादधिकोवेधोऽतश्चन्द्रवेधलक्षणमाह–

सप्तमाऽऽयदपमत्रिजन्मगो नेष्टदो द्विनिधनोपगैर्ग्रहैः ।
बन्धुरिःफनवपञ्चमस्थितैः श्रेष्ठदो यदि विलोमवेधगः ॥ ३ ॥

चन्द्रो गोचरेण सदा सप्तमायदशषट्त्रिजन्मगः शुभः, यातुर्जन्मराशेः सप्तमे आये एकादशे दशमे षष्ठे तृतीये जन्मराशौ वा स्थितः शोभनः ।



उक्तञ्च—

उपचयगृहसप्तमगः शुभः शशी जन्मभेऽपि यात्रायाम् ॥ इति ॥

एवं विधः श्रेष्ठफलदोऽपि अन्यैर्ग्रहैः बन्धु-रिःफ-नवमस्थितैर्द्वितीयाष्टमनवम-चतुर्थ-द्वादशपञ्चमषष्ठस्थानस्थैर्विद्धो भवति तदा विद्धत्वान्नेष्टदः अशुभं फलं ददाति ।

तद्यथा—

जन्मराशितः सप्तमस्थ श्चन्द्रः तत एवात्मराशेर्द्वितीयस्थानस्थो यः कश्चिद्ग्रहो भवति, तदा तेन ग्रहेण चन्द्रो विद्ध्यते विद्धञ्चानिष्टदः । एवमेकादशस्थो जन्मराशितोऽष्टमस्थेन ग्रहेण विद्ध्यते, एवं दशमस्थ श्चतुर्थस्थेन, तृतीयस्थो नवमगेन जन्मगः पञ्चमगेन विद्धो भवति, विद्धश्चन्द्रः सप्तमादिशुभस्थानगोप्यशुभफलदः ।

अथ यदि द्वितीयाष्टम-चतुर्थद्वादशनवमपञ्चमगश्चन्द्रो गोचरेणाशुभफलदस्तदपि सप्तमैकादशदशमषट्त्रिप्रथमगैरपरग्रहैर्विपरीत विद्धश्चेच्चन्द्रस्तदा सामान्येन गोचरादनिष्टफलदोऽपि शुभफलदो भवतीति ।

तथा च भगवान् वसिष्ठः—

शुभो जन्मगतश्चन्द्रो जन्मतः पञ्चमो ग्रहः ।
स्थितो यदा तदा वेन्दुर्वेधगो विघ्नदः स्मृतः ॥
पञ्चमस्थानगश्चन्द्रो जन्मतो जन्मगो ग्रहः ।
यदा तदा विपर्यस्त वेधगः शुभदः स्मृतः ॥
एवं तृतीयषट्सप्तदशमैकादशोपगः ।
शशीनवमरिष्फद्विवन्ध्वष्टमगतैर्ग्रहैः ॥
विद्धोऽनिष्टफलो ज्ञेयो विपरीत गतः शुभः ।

तथा च स्वल्पयात्रायाम—

जन्मे त्रिषडेकादशदशमसप्तमगोऽपि नेष्यते चन्द्रः ।
पञ्चमनवान्त्याष्टम चतुर्द्विवेधगो वाम इष्टफलः ॥ इति ॥ ३ ॥

## इदानीं गोचरफलं दूषयन्नाह–

यस्य गोचरफलप्रमाणता तस्य वेधफलमिष्यते नवा ।
प्रायसो न बहु सम्मबं त्विदं स्थूलमार्गफलदो हि गोचरः ॥ ४ ॥

गोचरफलं संहितायामुक्तं "जन्मन्यायासदोऽर्क इत्यादि" गोचरफले प्रमाणता निश्चयः तस्य वेधफलं प्रागुक्तं इष्यते, नवा शब्दोऽत्र वार्थेन विकल्पते न नश्यते, हि यतो गोचर स्थूलेन मार्गेण फलदः काकतालीयफलन्यायेन फलं ददाति, न सूक्ष्मनैपुण्येनेत्यर्थः । तस्मात् प्रायशो बाहुल्येन न संमतं बहूनामाचार्याणां च तन्नाभिमतमिति ।

तथा च भगवान् वसिष्ठः—

शुद्धाष्टवर्गशशिनः प्रवदेद्वेधजं फलम् ।
गोचराऽभिहिते यातु न वेध फलमिष्यते ॥ इति ॥ ५ ॥

## अधुना चन्द्रनक्षत्रवशेन शुभाशुभम् । तथा चन्द्रमसो यायि-नागर-ग्रहावस्थितशुक्लकृष्णपक्षादौ शुभाशुभमाह—

यस्योत्सृजत्युडुपतिः परुषोऽपसव्यो
जन्मर्क्षमापदमुपैति स भूमिपालः ।
यायीतरग्रहगृहोपगते सितादौ
यायीतरेश्वरजयो बहुले क्षयश्च ॥ ५ ॥

उडुपतिश्चन्द्रः परुषो रुक्षः, अपसव्यं कृत्वा दक्षिण दिक्को जन्मर्क्षं जन्मनक्षत्रं यस्य भूमिपालस्य राज्ञः उत्सृजति परित्यजति । एतदुक्तं भवति नभसि यदा योगतारा दक्षिणेन यातीत्यर्थः ।

तथा चोक्तम्—

स्वे तारागणमध्ये तु या दृश्या दीप्ततारका ।
योगतारेति सा प्रोक्ता नक्षत्राणां पुरातनैः ॥ इति ॥

यस्य जन्मर्क्षं दक्षिणदिक्स्थं स भूमिपालः आपदं प्राणसंशयं उपैति प्राप्नोतीत्यर्थः । भूमिपालग्रहणमत्रोपलक्षणार्थं अन्यस्याप्येवम् । यायीतरग्रहगृहोपगत इति, यायिनः प्रथमत एव यस्योपरि ये यान्ति ते यायिनः इतरा नागराः ।

ते च पुरस्ताद्वक्ष्यति—

आक्रन्दसारी दिनमध्यगोऽर्क पौरः पुरस्तादपरत्र यायी ।
आक्रन्द इन्दुर्गुरुमन्दसौम्याः पौराः स्मृता यायिन इत्यतोऽन्यः ॥ इति ॥



एवं यायि ग्रहाणां राशौ मेषवृषतुलवृश्चिकानामन्यतमे सितादौ शुक्लपक्षे प्रतिपत्प्रारम्भे उभयगतः प्राप्तो भवति, तदा यायीश्वराणां यायी चासावीश्वरो राजा यायीश्वरः तेषां यायीनां राज्ञां तस्मिन पक्षे जयो भवति । एवमितरो नागरस्तस्येश्वरः इतरेश्वरः । अथेतराणां नागरग्रहाणां गृहाः मिथुनकन्याधन्विमकरकुम्भमीनानामन्यतमराशौ सितादौ चन्द्रमा उदयगतो भवति तदा तस्मिन् पक्षे इतरेश्वराणां राज्ञां जयः, अत्र राहुकेतू पापिनौ तयो दर्शनवशेन राशिसंस्थानमूह्यम् । एतत् पुरस्ताद्वक्ष्यामः ।

अत्र कौशिक आह—

पक्षबलं शुक्लादौ चन्द्रे यायीतरर्क्ष सम्पन्ने ।
कारकनानोपचयै विपरीतं कृष्णपक्षादौ ॥

बहूले कृष्णपक्षे क्षयः, कृष्णपक्षादौ कृष्णप्रतिपत्प्रारम्भे यायी ग्रहे राशौ यदा चन्द्रमा भवति तदा तस्मिन् पक्षे यायीश्वराणां क्षयो भवति । अथ कृष्णपक्षादौ नागरग्रहाणां गृहे यदा चन्द्रमा भवति तदा नागरेश्वराणां क्षयः, ग्रहाणां गृहाणि "क्षितिजसितज्ञेत्यादि" जातके उक्तान्येव ॥ ५ ॥

## अथ प्रकारान्तरेण शुभाशुभज्ञानमाह—

होराराशावुपचयगृहे जन्मभे वा यियासो-
र्हानिर्होरा उडुगणपतौ वृद्धिरापूर्यमाणे ।
पक्षस्यादावुपचयगृहे हानिरापूर्यमाणे
वृद्धिस्तूक्ता ह्रसति हिमगौ कृष्णपक्षादिसंस्थे ॥ ६ ॥

होराराशाविति । होरेति लग्नं होराराशौ यातु र्जन्मलग्ने उपचयगृहे वा तस्मादेव जमलग्नादुपचयगृहाणि त्रिषट्दशमैकादशभवनानि तस्मिन् उपचयगृहे जन्मभेऽपि वा यियासोर्यातुमिच्छो जन्मभं जन्मराशि स्तस्मिन् जन्मभे जन्मभादुपचयगृहे एषामुद्दिष्टस्थानानामन्यतमस्थाने उडुगणपतौ चद्रे होरायां सत्याम्, कृष्णपक्षप्रतिपत्प्रारम्भे स्थिते यातुर्हानिः क्षयो भवति ।

तथा च सिद्धार्थयात्राकारः—

पक्षाद्येऽह्नि क्षपानाथो यत्र पक्षेऽपचीयते ।
शुभक्षेत्राश्रितो यातुर्याने पक्षः स नेष्यते ॥ इति ॥

वृद्धिरापूर्यमाणः आपूर्यमाणे चन्द्रे शुक्लपक्षप्रतिपदारम्भे होराराशौ उपचयगृहे जन्मभे वा तदुपचयगृहे वा स्थिते यियासोर्वृद्धिर्वा भवति उपचये इत्यर्थः ।

तथा च सिद्धार्थयात्राकारः—

यत्र पक्षे क्षपानाथः पक्षाद्येऽह्नि प्रवर्द्धते ।
शुभक्षेत्राश्रितो यातुः स पक्षो गमने हित ॥ इति ॥

किं सर्वस्मिन्नेव शुक्लपक्षे कृष्णपक्षे वाऽयं नियम इत्याह । पक्षस्यादाविति । पक्षस्य आदिः पक्षादिः, यियासोर्जन्मराशेर्जन्मलग्नाद्वा यान्यपचयस्थानानि द्वितीयचतुर्थपञ्चमसप्तमाष्टमनवमद्वादशस्थानानि, एषामन्यतमस्थिते अपचयगृहगे चन्द्रे, आपूर्यमाणे शुक्ले पक्षादौ प्रतिपदिस्थिते क्षयो भवति । हिमगौ चन्द्रे कृष्णपक्षादिसंस्थे कृष्णपक्ष प्रतिपदि अपचयगृहस्थिते क्षीयमाणे यातुर्वृद्धिरुक्ता कथिता तु शब्दोऽत्र निश्चयार्थे ।

अमुमेवार्थं स्पष्टमुक्तं स्वल्पयात्रायाम्—

सितपक्षादौ चन्द्रे शुभे शुभमशुभे च शुभं कृष्णे ।
तद्विपरीते त्वशुभं विज्ञेयं दैववेदिभिस्तथ्यम् ॥

किमतोऽधिकजल्पनेन, जन्मलग्नाज्जन्मराशेरुपचयगः शुक्लादौ चन्द्रस्तत्पक्षे जयदः, अनुपचयगो हानिकृत् । अनुपचयगोऽपचयगः कृष्णादौ चन्द्रस्तत्पक्षे जयदः उपचयगो हानिकृदित्येवार्थः ॥ ६ ॥

## अथान्यच्छुभाशुभं चन्द्रविशेषेणत्राह—

उपचयकरयुक्तो मध्यगः शुक्लपक्षे
शुभमभिलषमानः सौम्यमध्यस्थितो वा ।
सखिवशिगृहयुक्तः कारकर्क्षेऽपि चेन्दु–
र्जयसुखधनदाता तत्प्रहर्ताऽन्यथातः ॥ ७ ॥



उपचाय इति, इन्दुश्चन्द्रः उपचयकरेण गोचराष्टकाभ्यामनुकूलेन वा ग्रहेण युक्तः सहितस्तथा सव्यग उत्तरेण मार्गेण ग्रहाणां नक्षत्राणां वा गतः, यदा उत्तरेण मार्गेण चन्द्रमायाति तथा सव्यग इत्युच्यते ।

यत उक्तम्—

भानां यथा संभवमुत्तरेण यातो ग्रहाणां यदि वा शशाङ्कः ।
प्रदक्षिणं तच्छुभदं नृपाणां याम्येन यातो नशुभःशशाङ्कः ॥

एवं मध्यमः, कदाचित्शुक्लपक्षे वर्द्धमाने इत्यर्थः । एवं विधश्चन्द्रोऽनिष्टस्थानस्थोऽपि जयसुखधनदाता भवति, जयं सुखं धनानि च ददाति । शुभमभिलषमाणः शुभग्रहस्य बुधजीवशुक्राणामन्यतमस्याभिलषमाणः सौम्यग्रहेण सह संयोगं कर्तुमिच्छोः, केचिच्छुभमभिलषमाण इति पठन्ति । शुभग्रहं लभमानः प्राप्तुमिच्छुः, राशेर्विरामनवांशकस्थो द्वितीयराशौ सौम्यग्रहेण सह अभिलाषं करोति सौम्यमध्यस्थितो वा शुभग्रहयोर्मध्यस्थितः चन्द्रादेको द्वादशेऽपरो द्वितीये तदा मध्यगो भवति । अथवा एकराशावपि चन्द्रादंशाद्यल्पएकः, पश्चात् चन्द्रांशादधिकोऽन्योऽग्रे तथापि सौम्यमध्यस्थः, एवं विधोऽपि चन्द्रो जयसुखधनदातेति । सखिवशियुक्त इति । सखि मित्रं तच्च "तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषा समा शीतगोरिति !" वशिग्रहलक्षणमग्रे वक्ष्यति, यो यस्य दशमगृहगः स तस्य वश्योपगस्तु नियमेनेति । यातुर्जन्मकाले चन्द्राद्दशमस्थानगो ग्रहश्चन्द्रस्य वशी तस्य क्षेत्रं वशिगृहम् । कारकर्क्षाणि जातकोक्तानि । स्वर्क्षतुङ्गमूलत्रिकोणगाः खेटकेषु यावन्त आस्थिताः । सर्व एव तेऽन्योऽन्यकारकाः कर्मगस्तु तेषां विशेषत इति । एवं यातुजन्मकाले ये ग्रहाः कारकाख्या स्तेषां यानि गृहाणि, एवं चन्द्रमा सखिगृहे सखिराशौ वशिराशौ कारकराशौ वा युक्तः समवस्थितो भवति । तथापि जयसुखधनदाता भवति तत्प्रहर्ता ऽन्यथात इति । अतोऽस्मा दुक्तात्प्रकारादन्यथा विपरीतगतस्थितः, अनुपचयकरेण ग्रहेण युक्तः तस्य दक्षिणमार्गेणगतः कृष्णपक्षे पापग्रहस्याऽभिलषमाणः पापयोर्मध्ये वा स्थितः सखि वशिकारकर्क्षाणि वर्जयित्वाऽन्यत्रस्थितः । एवं विध इन्दुस्तत्प्रहर्त्ता भवति । जयसुखधनानि हन्तीत्यर्थः ॥ ७ ॥

## अधुना सखिवशिकारकर्क्षाणां विशेषेण प्रशंसार्थमाह—

प्रक्षीणेप्यनुपचयस्थितेऽपि यायात्

विश्रब्धं यदि सखिवश्यकारकर्क्षे ।
नैवं चेदुदयगृहात्स्वजन्मभाद्वा
संपूर्णोऽप्युपचयगेऽपि नप्रयायात् ॥ ८ ॥

चन्द्रमसि प्रक्षीणे अतीव क्षीणे चतुर्दश्याममावास्यां प्रतिपदि तथा च यातुरनुपचयस्थे अनुपचयस्थानस्थेऽपि विश्वस्तं कृत्वा शनैर्यायाद्गच्छेत् । यदि सखिवश्यकारयर्क्षा पूर्वकथिते चन्द्रमास्थितो भवति। नैवं चेदित्यादि, एवं यदि चन्द्रमा न भवति सखिवश्यकारकर्क्षाणा-मन्यतमे राशौ स्थितो भवति तथा यद्यपि यातुरुदयगृहाज्जन्मलग्नात्जन्मलग्नभात् वा जन्मराशि-गतो भवति तथा स्थितेऽपि सम्पूर्णे वर्द्धमानेऽपि नप्रयायान्नगच्छेत् ॥ ८ ॥

## तथाऽन्यच्चन्द्रस्य भेदवशेन वर्जनीयत्वमाह—

भृगुसुतबुधभिन्ने रुक् सुरेज्येन मृत्यु-
र्भयमसितकुजाभ्यां केतुना स्त्रीप्रणाशः ।
अपटुकिरणकान्तो गच्छतः शत्रुवृद्धिः
सविकृतपरिवेषे नेत्रनाशः शशाङ्के ॥ ६ ॥

भृगुसुतेन बुधेन वा भिन्ने विदारितबिम्बे शशाङ्के चन्द्रे उर्ध्वाधोभावेन तयोर्नित्यं चन्द्रः छादयति तदा छादनाद्भिन्न इत्युच्यते। चन्द्रमण्डले प्रविष्टः पश्चान्निस्सृत इवावलोक्यते तथा भूते चन्द्रमसि यियासु रुग्णो भवति। एवं सुरेज्येन गुरुणाभिन्ने मृत्युर्मरणं। कुजो भौमः असितः सौरः आभ्यां भिन्ने यातुर्भयं भवति। केतुना भिन्ने स्त्रीप्रणाशो भार्या बधः। अपटुकिरणकान्तोऽस्फुटमयूखप्रभो रुक्षप्रभः तेन गच्छतः शत्रुवृद्धिर्रिपूणामाधिक्यं भवति। परिवेष-लक्षणं संहितायामुक्तम्, सविकृतपरिवेषे तत्कालं सविकार परिवेषयुक्ते शशाङ्के यातुर्नेत्रनाशः चक्षुषो विघातो भवतीति ॥ ७ ॥

इति भट्टोत्पलविरचितायां यज्ञ्येऽश्वमेधीययात्राविवृतौ चन्द्रबलाऽध्यायः सप्तमः ॥७॥





# अधुना लग्नशुद्धिर्व्याख्यायते

## तत्रादौ राशीनां वश्यलक्षणमाह—

द्विपदवशगाः सर्वे सिंहं विहाय चतुष्पदाः ।
सलिलनिलया भक्ष्या वश्याः सरिसृपजातयः ॥ १ ॥
मृगपतिवशे तिष्ठन्त्येते विहाय सरिसृपाः ।
अकथित गृहेष्वेवं वश्यं जनव्यवहारतः ॥ २ ॥

उक्तञ्च विवाहपटले—

अवलोक्त च वश्यराशिं कार्यो विवाह समयः॥इति।

तत्र कः कस्य वस्य स्तदर्थमाह। द्विपदवशगाः सर्वे इति। अत एवोक्तम् "द्विपदा मिथुन-कन्यातुला-धन्वि-पूर्वार्द्ध कुम्भाः' एषां द्विपदराशीनां सर्वे चतुष्पदराशयः "मेषवृषसिंह धन्व-परार्द्ध मकरपूर्वार्द्धाः" वश्याः किन्तु चतुष्पत्सु सिंहं विहाय वर्जयित्वा तथा सलिलनिलयाः जलवासिनः "कर्कितीनमकरपरार्द्धाः" तेषां द्विपदानां भक्ष्याः तथा सरीसृपाः कर्कटवृश्चिकौ प्रायो द्विपदानां वश्याः सर्वे ते द्विपदचतुष्पदाः मृगपतिवशे तिष्ठन्ति, किन्तु सरीसृपाः कीटरासयः प्रायः सिंहस्यापि वशे नभवन्तीति। अकथितगृहेष्विति। अकथितेषु अनुक्तेषु गृहेषु राशिषु जनव्य-वहारतः लोकव्यवहारात् ऊह्यं कल्पनीयम्।

अत्र कीटसरीसृपाणां भेदमाह शिवगुरुः
मेषवृष-धन्विसिंहा श्चतुष्पदा मकरपूर्व भागश्च ।
कीटः कर्कटराशिः सरीसृपो वृश्चिकः कथितः ॥
कर्कि मृगपश्चिमार्द्धं कुम्भो मीनश्च जलचराः ख्याताः ।
मिथुनतुलाधरकन्या द्विपदाः कुम्भराशिश्च ॥

इत्यनेन कुम्भस्य जलचरत्वं नरत्वं च "जलार्थि जलेप्रविष्टः कुम्भवान् पुरुषः कुम्भः" इत्यु-क्तम्, अन्यत्र रिक्तकुम्भी तटस्थ इत्युक्तम्, अत एवोक्तम् जलयाने कुम्भलग्नं सदिति।

वशिभावत्वं कौशिकोप्याह—

सिंहं विहाय वश्याश्चतुष्पदा द्विपदराशीनाम् ।
जलचारिणोऽपि भक्ष्या भवन्ति कीटो निरुपयोग्यः ॥
पशवो द्विपदैः सार्द्धं भक्ष्याः सिंहस्य गोचरं प्राप्ताः ।
सिंहो वापमानान्मकरस्य च वध्यतामेति ॥

अन्यदपि—

द्विपदो द्विपदैः सार्द्धं सन्धिं कुर्वन्ति सौम्य संपृक्ताः ।
पापेक्षितास्त एव प्रविजृंभन्ते विनाशाय ॥
अन्योऽन्यमभिनिविष्टाः सर्वेषु चरा विनाशमायान्ति ।
पूर्वे नरभागवशादन्योऽन्यं वीर्यमप्येषाम् ॥
सान्यमभिनिविष्टाः सर्वेषु चरा विनाशमायान्ति ।
पूर्वे नरभागवशादन्योऽन्यं वीर्यमप्येषाम् ॥
साध्याः सलिलचराणां द्विपदाश्चतुष्पदश्च गोचरप्राप्ताः ।
कीटानामपि तद्वत् कीटाश्च नृणामनूढानाम् ॥
मकरार्द्धजोऽपि वश्यः कीटमुत्सृज्य सर्वगृहजातान् ।
मकरार्द्धजस्य सर्वे वश्या मृगमकरभूमिस्थाः ॥
एवं ग्रहराशिबलं जन्मन्यधिकृत्य निर्दिशेद्विमलम् ।
चारक्रमेण भगणाः सर्वेष्वेतेषु संहिताः ॥
खचराः विजिगीषतां नराणां सर्वं विबलं जयन्तीह ।
सखिता वशिता निर्देशस्य प्रयोजनमभिधेयं यद्भवनम् ॥इति॥

अत्रकौशिकोप्याह—

अन्योऽन्याभिभवनोयवश्याश्चान्योऽन्यमेव ये येषाम् ।
अत्र तैरपि तज्ज्ञा बलहीना बलिभिरभियोज्याः ॥२॥

## अत्रैव विशेषमाह—

**स्थलजलजसरीसृपाः स्वकानां**
**बलमभिवीक्ष्य विधीयतां भजन्ते ।**



**विषमगृहवशे समा द्युसंस्था**
**निशिविषमा नसमंति नः समानाम् ॥ ३ ॥**

स्थलजा राशयः मेषवृषमिथुनसिंहकन्यातुलधन्विकुम्भाः, जलजाः कर्कमकरमीनाः सरीसृपो वृश्चिकः कर्क एते स्थलजल सरीसृपा राशयः स्वकानामात्मीयानामेव बलं वीर्यं वश्यभावं विधीयतां भजन्ते सेवन्ते । तद्यथा–मेषो वृषस्य, वृषो धन्विनः, कन्या कन्यामिथुनकुम्भानाम् मिथुनस्तुलकुम्भयोः, तुलः कुम्भस्य, । वृश्चिकः सर्वेषां कर्कमीनौ मकरस्य एवमन्येषामपि परिकल्पनीयम् । विषमगृहवश इति । विषमराशयो मेषमिथुनसिंहतुलधन्विकुम्भाः समराशयो वृषकर्कटकन्यावृश्चिकमकरमीनाः समराशयो द्युसंस्थाःदिवसे स्थिताः विषमगृहाणां विषमराशीनां । समराशयद्युसंस्थाः दिवसे स्थिताः, विषमगृहाणां विषमराशीनां वशगाः, विधीयत्वेन भवन्ति । तथा समानां रात्रौ विषमराशयो वशवर्तिनो विधेया भवन्ति ॥ ३ ॥

## अधुना राशीनां शीर्षोदय–पृष्ठोदयानां यात्राकाले लग्नगतानां फलमाह—

**शीर्षोदये समभिवाञ्छित कार्यसिद्धिः**
**पृष्ठोदये विफलता बलविद्रवश्च ।**
**यातव्य दिङ्मुखगतस्य सुखेन सिद्धि–**
**र्व्यर्थं श्रमो भवति दिक्प्रतिलोमलग्ने ॥ ४ ॥**

पृष्ठोदयशीर्षोदयत्वं राशीनां जातके उक्तम् । "तत्र मेषवृषकर्किधन्विमकराः पृष्ठोदयाः"। "मिथुनसिंहकन्यातुलावृश्चिककुम्भमीनाः शीर्षोदयाः", अथवा मीन उभयोदयाः । शीर्षोदय-लग्नयातस्य सम्यक् वाञ्छित कार्यसिद्धिः प्राप्तिर्भवति । पृष्ठोदयकाले विफलता नैष्फल्यं बलस्य विद्रवो भङ्गश्च भवति । यातस्य दिङ्मुखगतस्येति । प्रागादीशाः क्रियवृषनृयुक्कर्कटाः सत्रि-कोणाः" इति दिङ्मुखगतराशय उक्ता । यातव्या गन्तव्या या दिक् तद्दिङ्मुखाः तद्दिक्स्था ये राशयस्तैर्गतस्य सुखेन अक्लेशेन सिद्धिर्भवति । दिक्प्रतिलोमलग्ने यस्यां दिशि यत्प्रतिलोमं लग्नं, यथा मिथुनतुलाकुम्भाः पूर्वस्यां, मेषसिंहधनुषः पश्चिमायां, वृषकन्यामकरा उत्तरस्यां, कर्कटवृश्चिकमीनाः दक्षिणस्यां, तस्मिन् गतस्य व्यर्थश्रमो निरर्थकक्लेशो भवति ।

उक्तञ्च –

शीर्षोदयेषु विजयो भङ्गः पृष्ठोदयेषु लग्नेषु ।
दिगनुद्वारेषु जयो विद्वारेष्वाहवे भङ्गः ॥ इति ॥ ४ ॥

### अत्रैव राशीनां गमने विशेषमाह–

शस्तं दिवा दिनबले निशि नक्तवीर्ये
राशौ विपर्ययबले गमनं नशस्तम् ।
इन्द्वर्कलग्नसहितेषु गमश्चराद्ये–
ष्वन्यस्यकोभयमहीं प्रति वृद्धिदाता ॥ ५ ॥

"गोऽजाश्विकर्किमिथुनाः समृगा निशाख्या" इत्यादि ग्रन्थेन राशीनां दिनबलसंज्ञाः पूर्वमेव कृताः । दिनबले दिनबलसंज्ञिते राशौ दिवा दिवसे यानं शस्तं शोभनं निशि रात्रौ न कुर्वीत, रात्रिबलसंज्ञिते च रात्रावेव गमनम् । विपर्ययबले विपरीतवीर्ये गमनं न शस्तं न शोभनम् । रात्रिसंज्ञिते रात्रौ द्युसंज्ञिते दिवा गमनं शस्तं, रात्रिसंज्ञिते दिवा द्युसंज्ञिते रात्रौ गमनं न शस्तम् ।

तथा च विष्णुगुप्तः—

मेषवृषमिथुनकर्कटमृगचापधरा निशाबला ज्ञेयाः ।
शेषाश्च दिनबलाः याने सर्वेषु कालहिताः ॥

इन्द्वर्क-लग्न-सहितेष्विति । इन्दुश्चन्द्रः, अर्कः सूर्यः लग्नं यात्रालग्नं एषु त्रिषु चराचराद्येषु, चरस्थिरद्विस्वभावराशिसहितेषु सत्सु गमः यात्रा यथासंख्यं अन्य स्वकोभयमहीं प्रतिवृद्धिदाता भवति । एतदुक्तं भवति इन्द्वर्क लग्नेषु चरराशिषु स्थितेषु गमो यातुः अन्यमहीं परकीयमहीं भूमिं प्रति वृद्धिदो भवति । स्थिरराशिषु स्थितेषु यातुः स्वकीयमहीं आत्मीयभूमिं प्रति वृद्धिदाता भवति । द्विस्वभावराशिषु गमः उभयमहीं स्वकीय-परकीय-भूमिं प्रति वृद्धिदाता भवति । एवं चरराशिगे चन्द्रे शत्रुभूमिं प्रति, स्थिरराशिगे चन्द्रे स्वभूमिंप्रति, द्विस्वभावस्थिते चन्द्रे स्वकीय-परकीय-भूमिंप्रति वृद्धिदो भवति, अर्कस्यापीत्थं, त्रिषु तादृशेषूत्कर्षेण तत्फलमूह्यम् ।

अत्र सिद्धार्थ यात्राकारः—

चरलग्ने चरस्थेषु लग्ननाथेन्दुभानुषु ।



परदेशाभिगमनं यशस्यं कार्यसिद्धिदम् ॥
स्थिरलग्ने स्थिरस्थेषु स्वदेशगमनं शुभम् ।
चरस्थिरं गतेष्वेषु लग्ने द्वयात्माख्यके गते ॥ ५ ॥

### अथ मीनलग्ने विशिष्टदोषमाह–

मीनोदये प्रवसतः कुटिलः सदोषो
मार्गो भवत्यकृतकार्यनिवर्तनं च ।
अन्यांशकेष्वपि दृशे फलमेतदेव
मीनांशकेषु च परर्क्षसमन्वितेषु ॥ ६ ॥

मीनोदये मीनलग्ने प्रवसतो गच्छतो मार्गः पन्था कुटिलः सदोषो दोषयुक्तश्च भवति । तथा अकृतकार्य निवर्तनं च, असमाप्तस्य कार्यस्य निवर्तनं प्रतीपागमनं भवति । न केवले दृशे मीने किन्तु मीने मीनांशके एतत् फलं यावदन्यांशकस्थेषु लग्नगतेषु मीनांशके एतदेव प्रागुक्तं फलम् ।

उक्तञ्च—

मीने कुटिलो मार्गो भवति तदंशेऽन्यराशिलग्नेऽपि ॥ ६ ॥

### अथ लग्नानुकूल्यमाह–

रिपुनिधने [1] रिपुनिधं प्राग्लग्ने शत्रुभे वधो यातुः ।
सत्यानुशासनमिदं वसिष्ठो नायमेकान्तः ॥ ७ ॥

रिपोः शत्रोर्जन्मलग्नात् जन्मराशेर्वा यन्निधनं स्थानमष्टमं तस्मिन् रिपुनिधने लग्ने प्राग्लग्ने गच्छतो रिपोः शत्रोर्जन्मलग्नात् निधनं भवति, एतत्सत्यानुशासनं सत्याचार्यमतम् ।

---

वशिष्ठः–

१ "शत्रोरष्टमलग्ने वा राशौ वापि विलग्नगे ।
तदीशस्थितलग्ने वा यातुः शत्रुक्षयः सदा ॥"

तथा च सत्यः—

रिपुषष्ठे लग्नगते यातु र्मरणं तदष्टमे शत्रोः ॥ इति ॥

उक्तञ्च—

रिपुनैधने रिपुबधो रिपुषष्ठे लग्नगे बधो यातुः ॥ इति ॥

वसिष्ठे नाऽयमेकान्तो वसिष्ठेन मुनिना विरचिते यात्राविधाने नाऽयमेकान्तो नाऽयमर्थो निश्चयीकृत इति ॥ ७ ॥

## अथ तन्निर्णयार्थमाह—

शत्रोः प्रसूतिसमये यदि निधनं संयुतं ग्रहैः पापैः ।
सौम्ययुतं वा षष्ठं सदसत्फलभात्ततस्ताभ्याम् ॥ ८ ॥

शत्रोः रिपोः प्रसूतिसमये जन्मकाले जन्मलग्नात् जन्मराशेर्वा यन्निधनमष्टमं स्थानं तद्यदि पापग्रहैः, आदित्यभौमसौराणामन्यतमेन संयुक्तमासीत्तदा गच्छतोः शत्रोः प्रतिपक्षीभूतस्य मरणम् । अथ शत्रोर्जन्मलग्नाज्जन्मराशेर्यत् षष्ठस्थानं तद्यदि जन्मनि सौम्यग्रहयुतं बुधजीवशुक्राणामन्यतमेन संयुक्तमासीत्तदा यातुर्मरणं भवति, वा शब्दः स्वार्थे ततस्तस्माद्धेतोः ताभ्यां स्थानाभ्यामष्टमषष्ठाभ्यां सदसत्फलता शुभाशुभफलत्वं नान्यथेति ।

तथा च वसिष्ठः—

शत्रोर्यदष्टमं स्थानं तच्चेज्जन्मन्यसद्ग्रहैः ।
संयुक्तमासीत्तल्लग्ने यातुः शत्रुक्षयो भवेत् ॥
तत्षष्ठे सौम्यसंयुक्ते यातुर्मरणमादिशेत् ॥

तथा च केचिज्जगुः—

"तयोस्तद्यदिते क्रूरेष्टयोः स्थाने" ॥ ८ ॥

## अथ जन्मलग्नात्प्रभृतिद्वादशस्थानेषु लग्नोपगतेषु गमने फलमाह—

क्लेशाद्विनाफलमरिक्षयमर्थसिद्धिं
प्राप्नोति लग्नसहिते प्रवसत्स्वकाले ।



अर्थक्षयं श्रममनर्थमतो द्वितीये
कल्याणसौख्यविभवागममाहुरेके ॥ ९ ॥

याता स्वलग्ने आत्मीयजन्मलग्ने लग्नसहिते तत्काल लग्नप्राप्ते प्रवसद्गच्छन्, क्लेशाद्विना अक्लेशेन फलं यात्राफलं अरिक्षयं शत्रुनाशं, अर्थसिद्धिं धनागमञ्च प्राप्नोति । अतोऽस्माज्जन्मराशेर्द्वितीयस्थाने लग्ने गच्छन्, अर्थक्षयं अर्थनाशः श्रमः खेदोऽनर्थं दरिद्रता एतदाप्नोति, स्वमते तत् मतान्तरन्तु "कल्याणसौख्यविभवागममाहुरेके इति" एके मुनयो वसिष्ठादयः कल्याणं श्रेयः सौख्यं सुखभावः विभवं ऐश्वर्यं एषामागमं लाभं आहुः कथयंति ।

तथा च भगवान् वसिष्ठः—

जन्मलग्नगतो याता सर्वार्थान् लभतेऽचिरात् ।
तद्द्वितीये गतं सिद्धिं वाञ्छितं प्राप्नुयात्सुखी ॥ ९ ॥

## अथ तृतीयादिष्वाह—

भृत्यार्थवाहनसहायजयाँ स्तृतीये
बन्ध्वार्थनाशभयसैन्यबधा श्चतुर्थे ।
मन्त्रोपतापविपदात्मजमेऽरिवृद्धि
षष्ठेऽरि–वित्तबलदीप्ति-जयागमश्च ॥ १० ॥

जन्मलग्नात्तृतीय गतेलग्ने गच्छतो भृत्याः कर्मकराः, अर्थो धनं वाहनं अश्वादिसहायाः सार्थिनो जयः शत्रु विजय, एते सर्वे एव यातु र्भवन्ति । चतुर्थे राशौ बन्धो र्बन्धनं अर्थनाशो धनहानि र्भयं भीतिः सैन्यबधश्चमूनाशः, एते भवन्ति । आत्मजे पञ्चमे मन्त्रे उपतापो मन्त्रभेदः विपत आपत् अरीणां शत्रूणां वृद्धि र्बाहुल्यं भवति । षष्ठस्थानेऽरिवित्तं शत्रुधनं बलं वीर्यं दीप्तिः कान्तिजयो विजयः एतेषां आगमा लाभा भवन्ति ॥ १० ॥

## अथ सप्तमादीनां फलमाह—

द्यूनेऽध्ववाहनविपत्क्षुदतिश्रमार्ति
बन्धो र्बधः परिभवो निधने रुजश्च ।

धर्मेऽर्थनाशगदकार्यविपद्भयार्तिं
कार्याद्विनाबलभयं दशमे त्तयश्च ॥ ११ ॥

जन्मलग्नात्सप्तमे लग्ने गच्छतोऽध्वनः पथः वाहनामश्वादीनां विपत् आपत् भवति, अतिक्लेशो भवतीर्थत्यः। क्षुत् बुभुक्षा अतिश्रमात् अतिखेदात् आर्तिः पीडा च भवति। निधनेऽष्टमे स्थाने बन्धो बंन्धनं बधस्ताडनं परिभवः पराजयः रुजं पीडा च भवति। धर्मे नवमे अर्थनाशः वित्तत्तयः गदो रोगः कार्याणां कर्मणां विपत् नाशः कार्याद्विना यदर्थं यात्रा तेन विनैव बलस्य सेनायाः भयं भीतिः त्तयश्च अर्थादीनाम् ॥ ११ ॥

## अत्रैव परिशिष्टेषु च फलान्याह–

केचिद्वदन्त्युपचयोपगृहीतमेत–
त्तस्माच्छुभं दशममे भवनं विलग्ने।
अर्थाप्तिदीप्तिशुभसिद्धिजयश्च लाभे
रिष्फेफलव्ययजयौ विजितेऽपि भेदः ॥ १२ ॥

केचिन्मुनयो वसिष्ठादयः एवं वदन्ति कथयन्ति। यथैतद्दशमं स्थानं उपचयोपगृहीतं उपचयस्थानानां मध्ये पठितं "त्रिषडेकादशदशमान्युपचयभवनानि" तस्मादुपचयत्वात् दशमराशौ शुभं गमनम्।

तथा च वसिष्ठः—

लग्नभाद्दशमे यातुः कर्मणां फलमश्नुते।
यस्मादुपचयाख्यस्तु दशमः परिकीर्तितः ॥

लाभे एकादशे गतः अर्थाप्तिर्धनागमः दीप्तिः कान्तिः शुभकर्मणां धर्मादीनां सिद्धिः साधनं जयो विजयः एते भवन्ति। रिष्फे द्वादशे गतस्त्र फलव्ययजयौ फलव्ययोऽर्थानां व्ययः विजितेऽपि शत्रौ पुनर्भेदो भवतीति ॥ १२ ॥

## अथ जन्मराशितो द्वादशानां स्थानानां फलमाह–

रोगो जन्मगृहोदये सुतबधो सिद्धिश्च तत्पञ्चमे
दीने क्लेशमवाप्य जन्मभवनात्प्राप्नोति पश्चात्सुखम्।



मार्गादेव निवर्तनं नवमभे मेषूरणेऽर्थागमः
शेषर्त्तेषु यथैव लग्नभवनात्प्राप्नोति पश्चात्सुखम् ॥ १३ ॥

जन्मगृहोदये जन्मराशौ लग्नगते रोगो भवति। तत्पञ्चमे तस्माज्जन्मराशेः पञ्चमे सुतबधः पुत्रमरणं असिद्धिश्च कार्याणां, जन्मभवनात् द्यूने सप्तमराशौ गतः क्लेशं कृच्छ्रं अवाप्य लब्ध्वा पश्चादनन्तरं सुखं प्राप्नोति। तस्मान्नवमराशौ गच्छतो मार्गात् पथः, एव निवर्तनं प्रतीपागमनं। मेषूरणे दशमस्थाने गच्छतोऽर्थागमो धनलाभः। शेषर्त्तेषु अनुक्तेषु राशिषु द्वितीयतृतीयचतुर्थषष्ठाष्टमैकादशद्वादशेषु यथैव येनैव प्रकारेण लग्नभवनात् लग्नराशेः फलमुक्तम्।

तद्यथा—

अर्थत्तयं श्रममनर्थमतो द्वितीये
भृत्यार्थ-वाहनसहाय-जयस्तृतीये।
बन्ध्वार्थनाशभयसैन्यबधाश्चतुर्थे
षष्ठेऽरिवित्त-बलदीप्ति-जयागमाश्च ॥
बन्धो बधः परिभवो निधने रुजश्च
अर्थाप्तिदीप्तिशुभसिद्धिः जयश्च लाभे।
रिष्फे फलव्ययजयौ विजितेऽपि भेदः ॥ इति ॥ १३ ॥

## अधुना ग्रहराशिषु फलमाह–

क्षुद्तृष्णाप्तिर्मार्गनाशोऽक्षिरोगः
क्लेशस्याप्ति स्तिग्मगोः प्राग्विलग्ने।
शस्ता चान्द्रे देवतार्थां स्वदेशे
कौजे पित्तव्यालशस्त्राग्निपीड़ा ॥ १४ ॥
बौधे तुष्टिर्वाञ्छिताप्तिर्यशश्च
जैवेऽर्थाप्ति–स्थान–मानारिनाशाः।

स्त्रीरत्नाप्तिः कार्यसिद्धिश्च शौक्रे

मान्दे बन्धःव्याधिनी चावमानः ॥ १५ ॥

तिग्मगोः सूर्यस्य प्राग्विलग्ने सिंहलग्ने यातुः क्षुद् बुभुक्षा तृष्णा पिपासा ताभ्यां आर्तिः पीडा मार्गनाशः पथबन्धः वक्रगामित्वं, अक्षिरोगः चक्षुपीडाः क्लेशं कृच्छ्रं तस्य च आप्तिः प्राप्तिरेते भवन्ति । चान्द्रे कर्कटे लग्ने स्वदेशे आत्मीयविषये देवता दर्शनार्थं यात्रा शस्ता शोभना । कौजे कुजसम्बन्धिनि राशौ मेषवृश्चिकयोरन्यतमे पित्तकृता पीडा व्यालः सर्पः अस्त्रं आयुधं अग्निर्हुतवहः एतैरपि पीडा बाधा भवन्ति । बौधे बुधराशौ मिथुनकन्ययोरन्यतमे लग्नगते गतस्य तुष्टिश्चित्तसन्तोषो बाञ्छितस्याऽभिलषितस्य आप्तिर्यशः कीर्तिश्च भवति । जैवे जीवराशौ धनुर्मीनयोरन्यतमेऽर्थाप्तिर्धनागमः स्थानलाभो मानं पूजा अरिनाशः शत्रुक्षय एवं भवन्ति । शौक्रे शुक्रराशौ वृषतुलयोरन्यतमे स्त्रीप्राप्तिर्योषिल्लाभः रत्नानां हीरकादीनां प्राप्तिः कार्याणां कर्मणां च सिद्धिर्भवति । मान्दे शनैश्चरराशौ मकरकुम्भयोरन्यतमे बन्धो बन्धनं व्याधय. पीडा नीचेभ्योऽवमानं पराभवश्च यातुरेव भवतीति ॥ १४ ॥ १५ ॥

## अधुना फलदातुर्ग्रहस्य लग्नेऽतिशयप्रशंसार्थमाह–

सौम्योऽपि जन्मनि नयःशुभपुष्टिदाता

स्थानत्रयस्य शुभदं व्रजतोऽपि लग्ने ।

पापोऽपि : शुभफलं प्रचिनोति पुष्टिं

स्थानं लग्नगतमिष्टमुशन्ति तस्य ॥ १६ ॥

यातुर्जन्मलग्ने यो ग्रहः शुभफलं राज्ययोगचन्द्रयोगादीनां शुभानां मध्यादन्यतमं शुभफलं न ददाति नोत्पादयति न च पुष्टिदा कारकत्वेनावस्थितोऽन्यग्रदत्तं सत्फलं न पुष्णाति तस्य तादृग् लक्षणस्य सौम्यस्य शुभग्रहस्यापि स्थानं राशिं व्रजतो गच्छतो विलग्ने यात्रालग्ने सति तल्लग्नं शुभं न ददाति यश्च ग्रहः शुभफलं राजयोगादिकं प्रचिनोति वृद्धिं नयति, अपि शब्दात् किं पुनः सौम्यस्येति ॥ १६ ॥

## अथान्यल्लग्नशुद्धिमाह–

अविधेयं यद्भवनं स्वजन्मलग्नर्क्षयोः प्रयातॄणाम् ।



अप्यनुकूलं लग्नं धनक्षयाऽऽयासदं भवति ॥ १७ ॥

प्रयातॄणां गच्छतां स्वजन्मलग्नर्क्षयोः स्वजन्मराशे जन्मलग्नाच्च यद्भवनं राशिं अविधेयं अनुक्तमपि अवश्यं तदनुकूलं शोभनमपि लग्ने स्थितं धनक्षयाऽऽयासदं धनक्षयं अर्थविनाशं आयासं प्रयासं ददाति, धन क्षयं प्रयासदं भवति । अपि शब्दः समुच्चये ॥ १७ ॥

## विधेयराशीनां गच्छतः फलमाह–

सखिवश्यतामुपेते स्वजन्मलग्नर्क्षयो विलग्नस्थे ।

अपचयकरोऽपि यातु जयधनमानागमाः क्षिप्रम् ॥ १८ ॥

यातुजन्मर्क्षस्य स्वजन्मराशेः सखिभावे मित्रत्वेन वश्यतामुपेते विधेयत्वं प्राप्ते स्थलजलजसरीसृपः स्वकानां बलमभिवीक्ष्य विधेयतां भजन्ते । विषमगृहवशे समान्यसंस्था–निशिविषमावशवर्तिनः समानामित्यनेन प्रकारेण सखिवश्यतामुपेते स्वजन्मलग्नर्क्षयोः तस्मिन् राशौ लग्नस्थे प्राग्लग्नगते अपचयकरेप्यनुकूलेऽपि यातुर्गच्छतः क्षिप्रं आश्वेव जयधनमानागमाः एषामाप्तयो भवन्ति ॥ १८ ॥

## अथ मतान्तरेण लग्नस्य दूषणमाह–

केचिद्वदन्ति[1] यस्मिन् ग्रहो निरंशं करोति तल्लग्नम् ॥

गमने यातु रनिष्टं भयशोकोद्वेगदं यस्मात् ॥ १९ ॥

---

यदाह. श्रीपतिः

१ ''जननसमयलग्नान्नैधने जन्मभाद्वा

निजरिपुभवनाद्वा शत्रुभे लग्नयाते ।

पतिभिरुत तदीयै लग्नगैः पार्थिवानां

गमनमथ विषं वा भक्षितं तुल्यमेव ॥''

वसिष्ठोऽपि

''स्वाष्टलग्ने लग्नगते राशौ वा लग्नगे सति ।

यातु र्भङ्गो भवेत् तत्र द्वादशे वाथ लग्नगे ॥''

केचिन्मुनयः कश्यपादयः एवं वदन्ति, यस्मिन् राशौ ग्रहो निरंशं करोति भागशून्यतां प्रान्त्यं-शके वर्गते तल्लग्नं राशिं गमने यात्रायां गन्तुं गच्छतोऽनिष्टं अशुभं, यस्माद्भयदं शोकोद्वेगदं भयं भीतिं शोको दुःखमुद्वेगं अनिवृत्तिं च ददाति। सौम्योऽपि यद्यन्तनवांशके वर्त्तते तथाऽपि तल्लग्नं गमनेऽनिष्टम् ।

तथा च कश्यपः—

यस्मिन् राशावन्त्यभागे ग्रहः सौम्योऽपि संस्थितः ।
गमनं वर्जयेत्तस्मिन् भयः शोकप्रदं यतः ॥ १६ ॥

## अधुना अन्यल्लग्नदूषणमाह—

झषवृश्चिककर्कटैर्नृणामनुकूलैरपि लग्नमाश्रितैः ।
गमनं प्रवदन्त्यशोभनं मुनयोऽन्त्यर्क्षसमाश्रितैरपि ॥ २० ॥

झषो मीनः कर्कवृश्चिकौ प्रसिद्धौ मीनवृश्चिकौनुकूलैः शुभप्रदैरपि लग्नमाश्रितैः प्राग्लग्नस्थितैः मुनयो वसिष्ठादयो नृणां पुरुषाणां गमनं अशोभनं अश्रेयस्करं प्रवदन्ति कथयन्ति । नकेवलमेतै-लग्नगतैः यावदन्यर्क्षं समाश्रितैरन्यराश्यावप्याद्यनवांशकस्थैस्तैरप्यशोभनं अनिष्टं गमनं प्रवदन्ति। तदुक्तं यस्मादाचार्येण प्रदेशान्तरे चोक्तम्—

यात्राऽजसिंहवृषभोपगते वरिष्ठा ।
मध्या शनैश्चरबुधोशनसो गृहेषु ॥
भानौ कुलीरझषवृश्चिकगेति दीर्घा ॥ इति ॥

तथा च तन्त्रान्तरे पठ्यते—

पौष्णेन्द्राश्लेषान्तं मूलाश्विमघादि कीर्तितं मुनिभिः ।
गण्डान्तमनिष्टफलं पाणिग्रहजन्मयात्रासु ॥

तथा च सत्यः—

ऋक्षैरभिन्नपादैराशय इह सन्निनाः समस्ताः ।
एतेष्विहानिष्टं यानपाणिग्रहजन्मकृत्यम् ॥

१ अत्रान्ये पाठ विप्रतिपत्या झषवृश्चिककर्कटैर्नृणामिति कथयन्ति ।



तथा च भगवान् वसिष्ठः—

मीने कर्कटके लग्ने वृश्चिके च तदंशकैः ॥
अन्यराश्युदयैर्यात्रां न कुर्याद्विजयं नृपैः ॥ २० ॥ इति ॥

## अथ वेशिराशिप्रशंसा नौयानं च विधातुमाह—

वेशिर्विलग्नोपगतो यियासो—
विनापि यत्नात्कुरुते फलाप्तिम् ।
नौयानमिष्टं जलराशिलग्ने
तदंशके चान्यगृहोदयेऽपि ॥ २१ ॥

वेशिलक्षणं जातके उक्तम् । "दिवाकरयुताद्भाद्द्वितीयं च वेशिरिति" । वेशिसंज्ञितो राशिर्वि-यासोर्गच्छतो विलग्नोपगतः प्राग्लग्नं प्राप्तो विनापि यत्नात् अक्लेशात्फलप्राप्तिं कुरुते । अथ जलराशिलग्ने कर्कटमकरमीनानामन्यतमे उदये नौयानं प्लवगमनमिष्टं शोभनम् । तथान्य-गृहोदये अन्यराशौ लग्नगते तदंशके तेषां जलराशीनां नवांशके नौयानं शस्तमिति ।

उक्तञ्च—

नौयानं माप्यलग्ने कार्यं तेषां नवांशके वापि ॥ २१ ॥ इति ॥

इति भट्टोत्पलविरचितायां यद्येऽश्वमेधीययात्राविवृतौ लग्ननिश्चयो नामाष्टमोऽध्यायः ॥ ८ ॥



# अथ लग्नभेदाऽध्यायो व्याख्यायते

## तत्रादावेव होरालक्षणं जीवशर्मब्रह्मशण्डयो र्मतेनाह–

उदूर्ध्वा तीर्यक् चानतास्या च होरा–
मुक्ताऽऽक्रान्तानागतार्के क्रमेण ।
इत्येताः स्यु र्जीवशर्मोपदेशो
ज्ञेयो राशोर्ब्रह्मशण्डस्य पक्षे ॥ १ ॥

तत्र होराशब्देन राश्यर्द्धमुच्यते, "होरेति लग्नं भवनस्य चार्द्धं" इति वचनात् । तत्र उदूर्ध्वा तिर्यक् नतास्या चेति क्रमेण परिपाट्या, मुक्ताऽऽक्रान्ताऽनागतार्का होरा भवति । तत्र यस्मिन् राश्यर्द्धेऽर्को व्यवस्थितः साऽऽक्रान्ताऽर्कहोरा । यदर्केण भुक्त्वा परित्यक्तं सा मुक्तार्का । यस्मिन् त्वर्द्धे पुरो यास्यत्यर्कः सा होरा अनागतार्का । एवं या मुक्तार्का होरा सा उदूर्ध्वास्या । या चाऽऽक्रान्ता सा तिर्यगास्या या च अनागतार्का साऽनताख्या । इत्येवं प्रकारा एता होरा स्त्रिविधा जीवशर्मोपदेशे जीवशर्मकथिते शास्त्रे स्यु र्भवेयुः ।

तथा च जीवशर्मा—

भुक्ता सूर्येण या होरा सा चोर्ध्ववदना स्मृता ।
आक्रान्तार्का तिर्यगास्याऽधोमुखी या प्रयास्यति ॥ इति ॥

"ज्ञेयो राशि र्ब्रह्मशण्डस्य पक्षे" तन्मते सकलो राशिर्होरेति ज्ञेयः होरेति लग्नमिति-वचनात्, तेन यो राशिः सूर्येण भुक्तः स एव राशिर्होरा उध्वास्या । यस्मिन् सूर्यस्थितः सा तिर्यक् होरा यत्र राशौ यास्यति पश्चादूगमिष्यति सा चाऽनतास्या होरेति । अथ उदाहरणम् मेषेऽर्के सति मेषलग्नं तिर्यक्, वृषादयो नतास्याः, मीनादयो विलोमत उर्द्धास्या, अतो वृषादि षट् नतास्या मीनादि विपरीता षट् उदूर्ध्वास्या इति ।

तथा च ब्रह्मशण्डः—

उदूर्ध्वास्या मुक्तसूर्यं भं प्राप्तं तिर्यङ्मुखीष्यते ।



आगामिनं चानतास्या होरार्कक्रमयोगतः ॥ इति ॥ १ ॥

## अत्रैवान्यमतप्रदर्शनार्थमाह–

उदूर्ध्वास्याद्याः षट् चराद्येषु होरा
भूयो भूयो [1]मण्डले कैश्चिदुक्ताः ।
राशौ राशौ प्राग् विलग्नोपयातैः
द्रेष्काणैः स्युः प्राह होरा वसिष्ठः ॥ २ ॥

उदूर्ध्वास्या आद्या या सान्ताः उदूर्ध्वास्याः यथा क्रमं षट् भवन्ति, कैश्चिदाचार्यैः सिद्धार्थप्रभृतिभिः चराद्येषु चरस्थिरद्विस्वभावेषु राशिषु षट्होराः, उदूर्ध्वास्याऽऽद्याः उक्ताः, भूयो भूयः पुनः पुनः, मण्डले द्वादशराशिके चक्रे । तद्यथा– मेषस्य प्रथमा होरा उदूर्ध्वास्या, द्वितीया तिर्यगास्या । वृषस्य प्रथमा आनतास्या, द्वितीया उदूर्ध्वास्या । मिथुनस्य प्रथमा तिर्यगास्या, द्वितीया आनतास्या एवं षट् । एवमेव भूयो भूयः पुनः पुनः, यथा मेषादीनां त्रयाणां षट् होरा भवन्ति, तथा तद्वत् कर्कटादीनां त्रयाणां उदूर्ध्वास्याद्याः षट् होरा भवन्ति । तुलादीनां मकरादीनामप्येवमेव । एवं मेषकर्कतुलामकराणां प्रथमा होरा उदूर्ध्वास्या द्वितीया तीर्यगास्याः । वृषसिंहवृश्चिककुम्भानां प्रथमा होराऽऽनतास्या द्वितीया उदूर्ध्वास्या । मिथुनकन्याधनुर्मीनानां प्रथमा होरा तीर्यगास्या द्वितीयाऽऽनतास्या ।

तथा च सिद्धार्थद्वाक्यम्—

होरोदूर्ध्वास्या चरेष्वाद्या द्वितीया तिर्यगानना ।
स्थिरेष्वधोमुखी पूर्वा द्वितीयोदूर्ध्वानना स्मृता ॥
चेत्रेषु द्विशरीरेषु होराद्या तिर्यगानना ।
आनतास्या द्वितीयास्या त्वर्वदैवं प्रचक्षते ॥

तथा च नन्दी—

चराचरविमिश्राणां राशीनां षट् क्रमागता ।
होरा उदूर्ध्वामुखी तिर्यगानतास्याः पुनः पुनः ॥

---

१ मण्डलै रिति पाठान्तरम्, मण्डलैः पुनः पुनरावर्तनैर्बोद्धव्या इति ।

द्वे द्वे राशिगते होरे विज्ञातव्ये मनीषिभिः ।

राशौ राशाविति वसिष्ठमुनिः प्रत्येकस्मिन् राशौ मेषादिके प्राग्विलग्नोपयातैः पूर्वविलग्नप्राप्तैः त्रिभिर्द्रेष्काणैर्होरा त्रयं प्रोक्तवान् । तद्यथाः— यस्मिन् यस्मिन् राशौ प्रथम द्रेष्काणे लग्नगते उद्ध्र्वमुखी होरा, द्वितीये द्रेष्काणे तिर्यङ्मुखी, तृतीये द्रेष्काणे आनतास्या, इत्यनेन स्वभावतो होरा उद्ध्र्व- तिर्यक- नतास्या न भवति द्रेष्काणभेदादेव होरा त्रिविधा भवति। पञ्चदशांशावधि प्राग् होरा सापि दशांशावधि उद्ध्र्वानना, ततः प्रथम होरायाः पञ्चांशा अवशानकालिकास्ततो द्वितीय–होरारम्भ-कालिका पञ्चांशा मध्यद्रेष्काणगा, अतः सा तिर्यङ्मुखी द्वितीयहोरारम्भकालिका पञ्चांशान्विहाय विशांशोद्ध्र्वं यावत् यावत्समाप्तिस्तावत्तृतीयो द्रेष्काणः तद्गता द्वितीया होरा नतास्येति ।

तथा च भगवान् वसिष्ठः—

राशौ राशौ लग्नगते द्रेष्काण त्रितये क्रमात् ।
होरा उद्ध्र्वमुखी तिर्यगानतास्याः प्रकीर्तिता ॥ २ ॥

## अधुना परभङ्ग्या दूषयन् स्वसिद्धान्तमाह–

सर्वाः प्रमाणं मुनिचोदितत्वा–
स्त्किन्त्वत्र योग्यं दलमेव होरा ।
यस्मिन् सहस्रांशुरवस्थितो वै
तिर्यङ्मुखी सा गणयेत्ततोऽन्यः ॥ ३ ॥

एताः प्रागुक्ताः सर्वा एव होरा प्रमाणं सत्यं मुनिचोदितत्वाद्धेतोः, मुनयो हि सत्यं कथयन्ति, नजाने केनाभिप्रायेण तेषां मतभेदः । किन्तु अत्राऽस्मिन्मतचतुष्टये योग्यं न्याय्यं दलं दलमेव होरा राश्यर्द्धमेव होरा, एवं होरेत्यस्माकं मतं कथयन्ति आगणयन्त इत्याह । यस्मिन् सहस्रांशुरिति, सहस्रांशुरादित्यो यस्मिन् राश्यर्द्धे व्यवस्थितः सा तिर्यङ्मुखी । तत स्तस्या अनन्तरं अन्याः क्रमेण गणयेत् । ततो द्वितीयाऽधोमुखी, तृतीया उद्ध्र्वास्या, चतुर्थी तिर्यङ्मुखीत्येवंक्रमेण गणयेद्यावल्लग्नहोरा भवति। अनया रीत्या लग्नस्य वर्तमानकालिका होरा ज्ञेया, होरा तु चतुर्विंशतिरेव ।



तदुक्तम्—

राशेरर्द्धं भवेद्धोरा ताश्चतुर्विंशति स्मृता ।
सूर्यात्तिर्यगधस्तस्मादुद्ध्र्वास्येति क्रमेण ता ॥ ३ ॥

## अधुना तासां लग्नगतानां फलमाह–

धत्ते वाञ्छितकार्यमूद्ध्र्ववदना क्लेशाद्विना लग्नगा ।
क्लेशायास परिक्षय श्च कुरुते तिर्यङ्मुखी गच्छता ॥ ४ ॥
सैन्यभ्रंशमधोमुखी प्रकुरुते कृच्छ्राद्गृहे चागमम् ।
सर्वाः स्पष्टफलप्रदाः स्वपतिना दृष्टा न पापग्रहैः ॥ ५ ॥

उद्ध्र्ववदना उद्ध्र्वास्या होरा लग्नगा प्राग्लग्नस्थिताः गच्छतो यातुर्वाञ्छितस्याभिलषितस्य कार्यस्य सिद्धिं साधनं ददाति क्लेशाद्विना विना क्लेशेन सहजेनेत्यर्थः । तिर्यङ्मुखी होरा कृच्छ्र् आयासं उपद्रवः परिक्षयोऽर्थनाशः, एतान् गच्छतः कुरुते । अधोमुखी होरा सैन्यभ्रंशं सेनाक्षयं कृच्छ्रात्क्लेशागृहे स्ववेश्मनि आगमं प्रवेशं कुरुते । सर्वाः पुष्टफलप्रदाः, एतः सर्वा एव होराः निरवशेषाः स्वपतिना आत्मीयनाथेन सूर्येण चन्द्रेण वा अवलोकिताः पुष्टफलप्रदायिन्यो भवन्ति । न पापग्रहैः पापदृष्टा न फलप्रदा भवन्ति । राशिदर्शनाद्धोरादृष्टिः । आदित्यहोरायामर्कदृष्टिः शोभना , अर्थादेव शुभग्रहै दृष्टाः पुष्टफलप्रदा पापग्रहैदृष्टा, अल्पफला, मिश्रैदृष्टा मध्यमफल ज्ञेया ॥४ । ५ ॥

## अधुना गमनेषु कालहोराफलमाह–

ग्रहदिवसफलं यदैव यातु–
स्तदलिमेव करोति तस्य होरा ।
हिमसलिलसृजोविनाऽऽह कश्चि–
द्युवतिममाश्रयरत्नदेति चान्द्री ॥ ५ ॥

अत्र तात्कालहोरानयनमाचार्येण पञ्चसिद्धान्तिकायामुक्तम् ।

सप्तोधृते दिनेश स्त्रिगुणोप्येको युतश्चहोराभिः ।

पञ्चघ्नः सप्तहृतो विज्ञेयः कालहोरेशाः ॥

वारप्रवृत्तेरनन्तरं यासां दिनगतघटीकानां कालहोरां ज्ञातुमिच्छेत्ता द्विगुणीकृत्य पञ्चभिर्भजेत् लब्धं भुक्ता होरा तत्काले भवति शेषा वर्तमाना । अत्र रात्रौ गत घटिकानांकालहोरा यदा ज्ञातुमिच्छते तदा दिनप्रमाणघटिकाःसंयोज्य यद्भवति तद्द्विगुणं कृत्वा पञ्चभि विभज्य अवाप्तं तत्काले भुक्त होरा भवति, शेषा वर्तमाना तासां दिनाधिपाद्यागणना षष्ठ क्रमेण कार्या। रविसितबुधशशिसौरा गुरुभौमाविति यथाक्रमं गणयेत् ।

तथा चोक्तम्—

इष्टनाड्यो द्विगुणाः पञ्चविभक्ता दिनाधिपाद्याः स्युः ।
होरेशा भानुसितज्ञचन्द्रसौरायमाहेया ॥ इति ॥

यस्य ग्रहस्य यद्दिवसफलं प्रागुक्तम्—

उदरनयनरोगः श्वापदारण्यबाधा
सवितृदिवसयातो व्यश्नुतेऽर्थ क्षयश्च

इत्यादिक स्तदेव यातुर्गच्छतोऽखिलं निःशेषं तस्य ग्रहस्य कालहोरा करोति ।

उक्तञ्च—

यद्यस्य फलं दिवसे तदशेषं कालहोरायाम् ॥ इति ॥

अत्रैव मतान्तरमाह, "हिमसलिलसृजो विनाऽऽह कश्चिदिति"। कश्चिन्नन्दि प्रायः एवं आह उक्तवान्, यथा ग्रहस्य दिवसे यत्फलं मुक्तं तत्फलं तदीयाऽपि कालहोरा कथ्यते किन्तु हिमसलिलसृजः चन्द्रस्य होरा विना हिमसलिलं सृजतीति हिमसलिलसृक् तस्येयं चान्द्रीं होरां वर्जयित्वा यत श्चान्द्री होरा युवतिसमाश्रयरत्नः तदा युवति-समाश्रय स्त्रीसंश्रयं रत्नानि मणयश्च ददातीत्यर्थः। एवं चन्द्रवर्जितानामन्येषां स्वदिनफलसमं कालहोराफलम् ।

तथा च नन्दी—

चन्द्र वर्जं ग्रहेन्द्राणां होरायां दिनजं फलम् ।
स्त्रियो रत्नानि लभते चन्द्रहोरागतो नपः ॥ इति ॥ ५ ॥

## अधुना लग्नगतानां द्रेष्काणानां फलमाह—

द्रेष्काणाकारचेष्टां गुणसदृशफलां योजयेद्वृद्धिहेतो-
द्रेष्काणे सौम्यरूपे कुशुमफलयुते रत्नभाण्डान्विते च ।



सौम्यैर्दृष्टे जयःस्यात्प्रहरणसहिते पापदृष्टे च भङ्गः
साग्नौ दाहोऽथ बन्धः सभुजगनिगडे पाशयुक्ते च यातुः ॥६ ॥

द्रेष्काणस्याऽऽकारो द्रेष्काणाकारः, आकृतेर्द्रेष्काणस्य चेष्टां तां द्रेष्काणाऽऽकारचेष्टाम् एतज्जातके कस्यां सितवस्त्रवेष्टित इत्यादिना यादृगाकारो यादृशी चेष्टा क्रिया तां गुणसदृशफलां गुणेन सदृश समानं यस्मातत्तथा भूतं वृद्धिहेतोर्वृध्यर्थं योजयेत् यात्रा लग्नोदयात् । तदेव दर्शयति, द्रेष्काणे सौम्य रूपे, इत्यादि सौम्यरूपे सौम्याकारे द्रेष्काणे प्रहसितवदने कुसुमै पुष्पैः फलैश्च संयुक्ते रत्नानि मणयः भाण्डानि पूर्णानि तैर्युते युक्ते सौम्यग्रहैः शुभग्रहैर्दृष्टे यातुर्जयः स्यात् । अस्मिन्नेव दृष्काणे प्रहरणसहिते सायुधे तथा पापग्रहदृष्टे यातुर्भङ्गः पराभवो भवति । साग्नौ अग्निसहिते द्रेष्काणे दाहोऽग्निभयं भवति, अथ शब्दः पादपूरणे सभुजगे ससर्प द्रेष्काणे सनिगडे सृङ्खलायुक्ते रज्जुसहिते च यातुर्बन्धो बन्धनं भवति । अत्र सौम्यरूपा द्रेष्काणाः "मिथुन प्रथम कन्यातृतीयो मकर द्वितोयः मीन द्वितीयः" । कुसुमयुता द्रेष्काणाः 'सिंह द्वितीय कन्या प्रथम' । फलयुक्ता द्रेष्काणा कर्कप्रथम सिंह तृतीयः । रत्नभाण्डान्विताः द्रेष्काणा मिथुन तृतीयः, धन्वि द्वितीयः, मकर तृतीयः मीन प्रथमः । प्रहरण सहिता द्रेष्काणाः मेषाद्याः मेष तृतीय, मिथुन द्वितीयः, मिथुन तृतीय, सिंह द्वितीय सिंह तृतीय कन्या द्वितीय कन्या तृतीय, तुला तृतीय, धनुराद्य धन्वि तृतीयाः । साग्निकौ वृषप्रथमकुम्भ द्वितीयौ द्रेष्काणौ । क्षुत्परास्तु मेष द्वितीय तुला द्वितीय वृश्चिक तृतीय द्रेष्काणाः । रौद्ररूप चित्ताकुलास्तु वृष तृतीय कर्कटद्वितीय सिंहप्रथम कुम्भप्रथम द्रेष्काणाः । एते एव केचित्साग्निका इच्छन्ति । भुजगपाशभृतस्तु कर्कतृतीय वृश्चिकाद्य वृश्चिक- द्वितीय- द्रेष्काणाः । निगडभृद् द्रेष्काणो मकराद्यः । एवं द्रेष्काणाऽऽकार चेष्टां ज्ञात्वा तत्तद्गुणसदृशफलं योजयेदिति ॥ ६ ॥

## अथ लग्नद्रेष्काणात्प्रभृति षट्त्रिंशद्भिर्द्रेष्काणैर्भावानां संज्ञा आह—

नृपमूर्ती लग्नगते द्रेष्काणे मन्त्रिणौ द्वितोये च ।
वैद्य-पुरोहित-सांवत्सरास्तृतीये परे भृत्याः ॥ ७ ॥

यातुर्नृपस्य शरीरं लग्नगते द्रेष्काणे चिन्त्यं, तत्र शुभाशुभग्रहदृग्योगाभ्यां नृपस्य शुभाशुभं ज्ञेयं एवमेवान्येषामपि। द्वितीयद्रेष्काणे लग्नद्रेष्काणात्परतः स्थिते मन्त्रिणः सचिवाश्चिन्त्याः। वैद्यः कायचिकित्सकः, पुरोहित आचार्यः, सांवत्सरो दैवज्ञः एते तृतीय द्रेष्काणे चिन्त्या। अपरे चतुर्थे द्रेष्काणे भृत्याः, भरणीयाः विचार्याः ॥ ७॥

## अथान्येष्वाह—

स्थान-पराक्रम-चिन्ता व्यापार-पराक्रमौ चमूपबलं तस्मात्।
अभ्यवहार्यं शयनाशने च तत्पञ्चसु क्रमशः ॥ ८ ॥

तस्मात् चतुर्थद्रेष्काणात्परतः पञ्चसु द्रेष्काणेसु एतानि ज्ञेयानि, तद्यथा स्थानस्य आत्मीयस्य पराक्रमस्य चिन्ता पञ्चमे। व्यापार पराक्रमौ व्यापार उद्यमं पराक्रमः शौर्यं च षष्ठे, द्रेष्काणे चमूपः सेनापतिः बलं सैन्यं च सप्तमे द्रेष्काणे, अभ्यवहार्यं अन्न द्यं तदष्टमे, शयनं शय्या आशनं च नवमे द्रेष्काणे ॥ ८॥

## अथान्येष्वप्याह—

यानाशनशय्यावाहनानि दशमे परेऽन्नयानानि।
वाहन योधा परत स्त्रयोदशे भवति युवराजः॥ ९ ॥

यानं शिविकादि आसनम् पल्याणादि, शय्या आस्तरणं वाहनं अश्वादि, एतानि दशमे। अन्नं प्रसिद्धं पानं पेयं जलक्षीरासवादि एकादशि द्रेष्काणे। वाहनानि हस्त्यश्वादीनि योधाः शूरनराः एते परतो द्वादश द्रेष्काणे। युवराजोऽधिराज्यभाक् स च त्रयोदशे द्रेष्काणे॥ ९॥

## अथान्येष्वप्याह—

ज्ञेयं बलं प्रयातु र्मन्त्रस्य विनिश्चय श्चतत्परतः।
पञ्चदशाद्ये द्रेष्काणे चतुष्टये रिपवः ॥ १० ॥

प्रयातुर्जिगीषोर्बलं वीर्यं मंत्रस्य परिकल्पितस्य विनिश्चयः तत्परतो लग्न द्रेष्काणाच्चतुर्दशे द्रेष्काणे। परतोऽनन्तरं पञ्चदशाद्ये द्रेष्काणचतुष्टये पञ्चदशे षोडशे सप्तदशेऽष्टादशे च रिपवः शत्रवश्चिन्त्या॥ १०॥



## अथान्येष्वप्याह—

एकोनविंशके सैनिकाम्बुशयनेन्धनानि परतः।
अर्थः परतोऽस्य दण्डनेता सैन्यस्योपद्रवः परतः ॥ ११ ॥

सैनिकाः सेनास्थिता ये जनाः, अम्बु जलं, इन्धनं काष्ठादि एतानि लग्नद्रेष्काणादेकोनविंशे द्रेष्काणे। परतो विंशेऽर्थः धनम्। परतः एकविंशे दण्डनेता दण्डनायकः। परतो द्वाविंशे सैन्यस्य सेनाया उपद्रवः, उपतापश्चिन्त्यः॥ ११॥

## अथान्येष्वप्याह—

सेना छिद्रं तस्मात्सेना नेता भवेच्चतुर्विंशे।
सेनाऽऽरोग्यं सैन्यं चतुष्पदं च क्रमात्त्रितये ॥ १२ ॥

तस्मात् द्वाविंशात्परस्त्रयोविंशे द्रेष्काणे सेना छिद्रं सैन्यस्य रन्ध्रम्। चतुर्विंशे सेना नेता सेनापतिर्भवेत्स्यात्। तत्परतः क्रमात् परिपाट्याया द्रेष्काण त्रितये सेनारोग्यं सैन्यस्य निरुजत्वं पञ्चविंशे द्रेष्काणे, सैन्यं सेनां, षडविंशे, चतुष्पदं गवादिकं सप्तविंशे॥ १२॥

## अथान्येष्वाह—

कार्यं कोशं फलसिद्धयस्ततपक्षभूपास्त्रये परतः।
धर्मक्रियाऽथ योद्धाऽध्वनं च यात्रा समाप्तिश्च ॥ १३ ॥

अतः परं द्रेष्काणत्रये कार्यं कोशं फलसिद्धयश्चिन्त्याः। कार्यं यदर्थं यात्रा दीयते तदष्टाविंशे। कोशं गञ्जं एकोनत्रिंशे। फाजतामाभीष्टानां सिद्धिस्त्रिंशे। परतो द्रेष्काणत्रये एकत्रिंशे द्वात्रिंशे त्रयस्त्रिंशे तत्पक्षभूमिपाः तत्पक्षसमाश्रिता राजानः। धर्मक्रिया धर्माश्रिता क्रिया चतुस्त्रिंशे। अथानन्तरं योद्धाः शूरा स्तेषामध्वानं मार्गः पञ्चत्रिंशे। सफला विफला वा यात्रा तस्याः समाप्तिः पुनरावृत्य स्वगृहप्रवेशः षट्त्रिंशे द्रेष्काणे चिन्त्या॥ १३॥

## अधुनैतेषां फलसंज्ञां शुभाशुभञ्च ग्रहवशेनाह—

इत्युदयस्य भावाद्द्रेष्काणे येऽत्र निर्दिष्टाः।

सदसत्फलमादेश्यं सदसद्युतवीक्षणात्तेषाम् ॥ १४ ॥

एवं प्रकारारुदयाद्याः लग्नद्रेष्काणमादित कृत्वा ये भावाः भावसंज्ञया समुद्दिष्टाः कथिताः, तेषां शुभमशुभं वा सदसत्सौम्य—पाप—युतवीक्षणात् संस्थिनिदर्शनात् शुभं शुभहानिर्वा वक्तव्या। एतदुक्तं भवति यस्य यस्य भावस्य शुभग्रहाणां योगो निरीक्षणं वा तस्य तस्य शुभं वृद्धिर्वक्तव्या। यस्य यस्य च पापग्रहाणामन्यतमेन योगो निरीक्षणं वा तस्य अशुभं हानिर्वक्तव्या, अर्थान्मिश्रयुतदृष्टे दृष्टयुतयोर्न्यूनाधिक्यामिश्रं फलं वक्तव्यम्। अत्राऽऽगमविदाचार्या द्रेष्काणराशौ युते दृष्टे वा शुभत्वमाहुर्नवांशवत्। अन्ये एवमिच्छन्ति यथा राशेः प्रथमदशांशानां भागानां मध्ये यो ग्रहस्थितः स प्रथम द्रेष्काणे स्थितः, दशकादूर्ध्वं भागविंशतेर्यावत् यो ग्रहः स्थितः स द्वितीयद्रेष्काणस्थः, एवं भाग विंशतेरुद्र्ध्वं आसमाप्ते स्थितो ग्रहः स तृतीयद्रेष्काणे स्थितः इत्येतदपि शोभनं आचार्यैस्तु नवांशवत्फलमुक्तम् ॥ १४ ॥

## अधुना लग्नगतानां ग्रहनवांशानां फलमाह—

नवभागे तिग्मांशो र्वाहननाशो विलग्नसंप्राप्तः ।
कृच्छ्राद्गृहागमन–प्रतापमृदुभावं च चन्द्रांशे ॥ १५ ॥
कौजेऽग्निभयं बौधे मित्रप्राप्तिर्धनागमो जैवे ।
भोगविवृद्धिः शौक्रे भृत्यविनाशोऽर्के सूर्न्वंशे ॥ १६ ॥

यस्मिन् तस्मिन् लग्ने राशौ तत्र च तिग्मांशोरादित्यस्य नवभागे सिंहांशे विलग्नसंप्राप्ते वाहनानां गोहस्त्यश्वादीनां विनाशो यातुः। तथा चन्द्रांशे चन्द्रनवांशे कर्कटांशके लग्नगते कृच्छ्रात्क्लेशात्स्वगृहे आत्मीयवेश्मनि पुनरागमनं प्रतापमृदुता शौर्याल्पत्वं च भवति। कौजे भौमनवांशके मेषवृश्चिकयोरन्यतमे यातुरग्निभयं भवति। बौधे मिथुनकन्ययोरन्यतमे लग्नस्थे मित्रप्राप्तिः। जैवे धन्विमीनयोरन्यतमे नवांशके वित्तलाभः। शौक्रे वृषतुलयोरन्यतमांशे भोगविवृद्धिः। अर्कसून्वंशे सौरनवांशे मकरकुम्भयोरन्यतमे विलग्नस्थे भृत्यविनाशः।

उक्तञ्च—

सन्तप्यते नवांशेः क्रूराणां विनिर्गतो विलग्नस्थैः।
यौवनदुर्ललितैरिव विचक्षणोऽल्पेषु ॥
तुष्टिर्भवति प्रियासोः शुभग्रहाणां नवांशलग्नेऽपि ॥ १५ ॥ १६ ॥



## अथान्यदपि नवांशफलमाह—

यदुदयति फलं ग्रहे प्रदिष्टं
जनयति तस्य नवांशकेऽपि लग्ने ।
शुभभवन–नवांशके सहायो
रिपुबलभागमुपैति यातुरब्दात् ॥ १७ ॥

प्राग्लग्नस्थे ग्रहे प्रदिष्टं उक्तं, यथा "सन्तापशोक गद कृदित्यादि" तदेव तस्य ग्रहस्य नवांशकेऽपि लग्ने फलं जनयति करोति। तद्यथा सन्तापशोकगदविघ्नकृदिति सिंहांशगतलग्नफलम्। लग्ने शशी कलहशोककरो न पूर्ण इति कर्कांशफलम्। अग्निरुधिरागम इति मेषवृश्चिकांशफलम्। कीर्त्ति-सुख-वृद्धि-विजयफलं, मिथुनकन्यांशकयोरनयैव दिशा नवांशके फलं ज्ञेयम्। "शुभभवन-नवांशक" इति। शुभानां गुरुबुधशुक्राणां भवने राशौ लग्नगते तत्र च शुभग्रहांशकोदयो भवति, तस्मिन् शुभभवन-नवांशके यातु रिपुबल भागं शत्रुसैन्यैकदेशं सहायं उपैति यातारं सहायत्वेनोपगच्छति। अथवा सत्यमेव निश्चयं वा यातुरित्यत्र कर्मणि षष्ठिः। नन्वत्र शुभभवन-नवांशक इति, शुभग्रहभवन—नवांशके शुभग्रहराश्यंशकोदये यस्मान्न व्याख्यातम् उच्यते शुभभवननवांशक इति वक्तव्ये भवनग्रहणं अत्रातिरिच्यते। तस्मात् शुभराशौ शुभनवांशके इति व्याख्या साध्वी ।

तथा च भगवान् वसिष्ठः—

शुभर्क्षे तन्नवांशे वा यो याता मनुजेश्वरः।
तस्य शत्रु बलाद्भागः सहायमुपगच्छति ॥

तथा च—

भृगुगुरुसौम्यांशेषु प्रसिद्धिसुखसम्पदो ज्ञेयाः ।
शत्रोर्बलस्य चांशे सहाय्यकरो भवति यातुः ।
सौम्यनवांशकलग्ने रिपुबलभाक् करोति साहाय्यम् ॥ १७॥

## अथ द्वादशांशत्रिंशांशकयो रतिदेशेन फलमाह—

यत्प्रोक्तं राश्युदये द्वादशभागे च तत्फलं वाच्यम् ।

यश्च नवांशकविहितं त्रिंशांशस्योदये तत्स्यात् ॥ १८ ॥

राश्युदये मेषादौ लग्नगते यत्फलं प्रोक्तम् कथितम् "क्षुदतृष्णार्तिमार्गनाशोऽक्षिरोग" इत्यादिकं तदेव द्वादशभागे द्वादशांशके वाच्यम् । मेषराशौ लग्नगते यत्फलमुक्तं तदेव फलं मेषद्वादशांशके वाच्यम्, एवं सर्वेषाम् । नवांशके यत्फलं विहितं "तिग्माशोर्वाहननाशो विलग्नसंस्थे" तथैव तत्तद्ग्रहत्रिंशांशफलं वाच्यम्, नवांशे सप्तानामंशाधिपत्यमस्त्यतः सप्तानां पृथक फलत्वमुक्तं त्रिंशांशे पुष्पवंतोस्तदभावात्, भौमादीनां नवमांशफलवत्त्रिंशांशफलं वाच्यम् ।

तथा च—

उदयति फलं ग्रहे प्रदिष्टं जनयति तस्य नवांशको विलग्ने ।

त्रिंशांशेऽपि कौजेऽग्निभयमित्युक्तं नवांशके तद्वत भौमत्रिंशांशके लग्नगते ज्ञेयमिति ॥१८॥

इति भट्टोत्पलविरचितायां यच्येऽश्वमेधीययात्राविवृतौ लग्नभेदाऽध्यायो नवमः ॥९॥





# अथ ग्रहशुद्धि र्व्याख्यायते–

## तत्र लग्नादिषु द्वादशभावेषु स्थितानां विवस्वदादावेवादित्यस्याह–

सन्तापशोकगदविघ्नकृदुद्गमेऽर्कः
कल्पार्थमानबलहानिकरो द्वितीये ।
हेमान्नविद्रुममणिक्षितिद स्तृतीये
वैराग्यबन्धुररतिश्च चतुर्थसंस्थः ॥ १ ॥

सन्तापः परितापः शोकं अन्तर्दुःखं गदो रोगः विघ्नं कर्मण्यसिद्धिः, एतान् करोति तनुस्थः । द्वितीयस्तु कल्पः शरीरारोग्यं अर्थो धनं मानं पूजा बलं वीर्यं हानिकरः, एतान्नाशयति । हेम सुवर्णं अन्नं भोजनं विद्रुमः प्रवालः मणयो रत्नानि क्षितिः परकीयभूः, एतानि तृतीये ददाति । वैराग्यं विरागत्वं बन्धुभिः सह अरतिः कुटुम्बभेदश्चैतान्, चतुर्थो ददाति ॥ १ ॥

## अन्येष्वप्याह–

पुत्रापदं सुतगृहेऽध्वनि चार्थसिद्धिं
षष्ठेऽभिवाञ्छितफलाप्तिमरिक्षयञ्च ।
द्यूने कलत्रकलहं धनसंक्षयञ्च
मृत्युं करोति निधने सविता रुजश्च २ ॥

सुतगृहे पञ्चमेऽर्कः पुत्रापदं पुत्रशोकं तथाऽध्वनि पथिगच्छतोऽर्थसिद्धिं अर्थलाभं करोति । षष्ठे षष्ठस्थाने अभिवाञ्छितस्याऽभिलषितस्य फलाप्तिं सिद्धिं करोति, शत्रुक्षयञ्च करोति । सप्तमे कलत्रकलहं भार्ययासाकं कलहं धनक्षयं च करोति । अष्टमे सविता सूर्यः, मृत्युं करोति तदभावेऽपि रुजं करोत्येवेत्यर्थः ॥ २ ॥

## अथान्येष्वप्याह–

धर्मं हिनस्ति नवमे सवितार्थदश्च
मध्याद्वियत्यविदितश्रमकर्मदाता ।
रत्नागमं च बहुलाभगतः करोति
कृत्वा व्ययं व्ययगतं कुरुतेऽर्थमन्यत् ॥ ३ ॥

सविता सूर्यो नवमस्थः धर्मं हिनस्ति निवारयति । वियति दशमे मध्यात्प्रमोददः किं भूत अविदितः श्रमकर्मदाता अविदितं श्रमं येषां एवं विधानि यानि कर्माणि तानि ददातीत्यर्थः । लाभगत एकादशस्थः, बहु लाभं रत्नागमं च करोति । व्ययगतः सविता व्ययं कृत्वाऽन्यदर्थं करोति यदर्थं गत स्तस्मादन्यत्तद्विपरीतमर्थं कुरुते ॥ ३ ॥

## अथतन्वादिभावेषु चन्द्रस्य फलमाह–

लग्ने शशी कलहशोककरो न पूर्ण–
स्त्रीरत्नवाजिसुहृदात्मजदः कुटुम्बे ।
दुश्चिक्यगोयुवतिरत्नधनप्रदाता
बंध्वाप्तिदः सुहृदि तत्क्षयदश्च कृष्णे ॥ ४ ॥
अर्थप्रद स्तनयगः सुतशोककृच्च
मित्रारितां प्रकुरुते न सुखं च षष्ठे ।
अस्तेऽर्थभूयुवतिदोऽर्थविनाशदाता
चन्द्रोऽष्टमे निधनशोककरः प्रयातुः ॥ ५ ॥
प्रत्येति चाशुनवमे कुरुते च कार्यं
क्षीणे क्षयो भवति वृद्धिरतोऽन्यथा स्थे ।
ऐश्वर्यसौख्यधनलाभमुपैति लाभे
क्लेशक्षयव्ययभयानि च रिष्फयाते ॥ ६ ॥



... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ...दुश्चिक्यगस्तृतीयस्थानप्राप्तो युवतयः स्त्रियः रत्नानि मणयः धनं वित्तं एषां प्रदाता भवति, प्रकर्षेणात्यर्थं ददाति । सुहृदि चतुर्थे बंध्वाप्तिदः बन्धुप्राप्तिं ददाति । एतच्छुक्लपक्षे, तत्क्षयदश्च कृष्णे कृष्णपक्षे तत्तस्य बन्धोः क्षयं ददाति, तदित्यनेन बन्धूनां परामर्षः । तनयगः पञ्चमस्थोऽर्थप्रदोऽर्थान्ददाति । तथा पुत्रशोककृत पुत्रशोकं करोति । षष्ठे स्थितः मित्रारितां मित्राणां अरितां शत्रुभावं करोति मित्रं शत्रुर्भवतीत्यर्थः । न सुखं सुखञ्च न करोति । अस्ते सप्तमे अर्थभूयुवतिदो अर्थो धनं भू भूमिः, युवतय स्त्रियः एतान् ददाति यदि परिपूर्णः । तद्भिन्नश्चार्थविनाशं वित्तक्षयं ददाति । अष्टमे चन्द्रे यातुर्गच्छतो निधनं मरणं शोकं च करोति । नवमे चन्द्रे आशु क्षिप्रमेव प्रत्येति परावृत्त्य शीघ्रं गृहमायाति कार्यञ्च कुरुते । वियति दशमे क्षीणे चन्द्रे यातुः क्षयोऽर्थविनाशः, अन्यस्थे पूर्णे चन्द्रे गन्तुर्वृद्धिर्भवति । लाभे एकादशे ऐश्वर्यं सौख्यं धनलाभं च उपैति प्राप्नोति याता । रिष्फगे द्वादशगे क्लेशं कृच्छ्रं क्षयं बन्धूनां व्ययं चार्थानां भयं भीतिं च एतानि प्राप्नोति ॥ ४ ॥ ५ ॥ ६ ॥

## अथ भौमस्य द्वादशस्थानेषु फलमाह–

लग्ने विषाग्नि रुधिरागमशस्त्रबाधा
भिन्द्याद्बलं धनगतोऽर्थकरश्च पश्चात् ।
दुश्चिक्यगो युवतिरत्नधनाम्बराप्तिः
बन्धुक्षयारिभयदो हिबुके महोजः ॥ ७ ॥
पुत्रापदं क्षितिसुतः कुरुते सुतस्थः
शत्रुप्रणाशमचिरादरिगः करोति ।
अर्थक्षयारतिगदाग्निनसोऽस्तसंस्थे
बन्ध्वर्थहानि गतमृत्युभयानि भृत्यौ ॥ ८ ॥

महीजोऽङ्गारको लग्ने स्थितो विषेण अग्निना रुधिरागमेन रक्तस्रावेण शस्त्रेण च बाधां पीडां करोति । धनगतो द्वितीयगतः यातुर्बलं भिन्द्यात्, सैन्यविनाशं करोति, पश्चादनन्तरं अर्थकरः अर्थान् करोति । दुश्चिक्यगस्तृतीयस्थानस्थ युवतयः स्त्रियः रत्नानि धनानि अम्बराणि

वस्त्राणि एषां प्राप्तिं करोति । हिबुके चतुर्थे बन्धुक्षयारिभयदः, बन्धुक्षयं कुटुम्बक्षयं अरिभयं शत्रुभयं च ददाति । सुतस्थः पञ्चमस्थानस्थः पुत्रापदं सुतविपत्तिं... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ॥ ७ ॥ ८ ॥

## अथ बृहस्पतेर्द्वादशभावफलमाह—

कीर्तिं लग्ने चार्थसिद्धिं द्वितीये
दुश्चिक्यस्थे क्षुच्छ्रमार्त्तिः सुरेज्ये ।
पातालस्थे धर्मतत्त्वाभिमानः
कार्यं सिध्यत्यात्मजस्थेऽप्यसाध्यम् ॥ ९ ॥
षष्ठे जीवे शत्रुरायाति वश्यं
केचित्प्राहुर्वश्यतां याति गन्ता ।
विन्दत्यस्तेऽरिस्वयोषा यशांसि
मृत्यौ प्राणान् हन्ति चान्ये जगुर्न ॥ १० ॥
पुत्रोत्पत्तिं धर्मसिद्धिश्च धर्मे
जीवे कर्मण्यर्थसिद्धिर्यशश्च ।
लाभे कार्यं वाञ्छितं याति सिद्धिं
रिष्फःप्राप्ते क्लिश्यतेऽनेकदुःखात् ॥ ११ ॥

सुरेज्ये बृहस्पतौ लग्नस्थे कीर्तिर्यशो भवेत्, द्वितीये अर्थसिद्धिर्भवेत्, दुश्चिक्ये तृतीयस्थे क्षुधया श्रमेण च आर्तिः पोडा । पातालस्थे चतुर्थस्थे धर्मविषये तत्वविषये योगविषयेन अभिमानोऽहङ्कारो भवति । आत्मजस्थे पञ्चमगतेऽसाध्यमपि कार्यं सिद्धयति । षष्ठे जीवे शत्रुः रिपुर्वश्यतां याति वशतां गच्छति, केचित् ब्रह्मशण्डादयः गन्ता शत्रोर्वश्यतां यातीति वदन्ति ।
तथा च ब्रह्मशण्डाख्यः—

रिपुस्थानगते जीवे यातो रिपुवशं व्रजेत् ।



एतदाचार्यस्य नाभिप्रेतं यतः ।
समासयात्रायामुक्तम्—

रिपुक्षयश्चेति ... ... ... ... ... ... ... ... ... ।
... ... ... ... ... ... ... ... ॥

अस्ते सप्तमे अरीणां शत्रूणां स्वं धनं या च योषाः स्त्रियः तासां हरणादिना यशांसि विन्दति । मृत्यावष्टमे प्राणान् असून् हन्ति शुभं करोति, प्राणान् रक्षति इति वदन्ति ।
तथा च वसिष्ठः—

लग्नादष्टमगे जीवे मृत्युभयमाप्नुयात् ।

एतदेवाचार्यस्याऽभिप्रेतम् ।
तथा च समासयात्रायाम्—

रक्षत्यायुर्नैधने चन्द्रवर्जमिति ... ... ... ... ... ।

धर्मे नवमगे पुत्रोत्पत्तिः सुतसम्भवो धर्मसिद्धिश्च भवति । जीवे गुरौ कर्मणि दशमेऽर्थानां सिद्धिर्यशः कीर्तिश्च भवति । लाभे एकादशे वाञ्छितमभिप्रेतं यत्कार्यं तस्य सिद्धिः । रिष्फः प्राप्ते द्वादशस्थेऽनेकैः प्रभूतैर्दुःखैः क्लिश्यते क्लेशमाप्नोति ॥ ९ ॥ १० ॥ ११ ॥

## अथ शुक्रद्वादशभावफलमाह—

वैरयार्थाम्बरमाल्यभोजनसुखप्राप्तिर्विलग्ने भृगौ ।
लाभोऽर्थे सहजे न सीदति गतः प्राप्नोति चेष्टां श्रुतिम् ॥ १२ ॥
पाताले सुहृदागमः सुतगृहे स्थानार्थमानाप्तयः ।
षष्ठे शत्रुपराभवादतिशुचस्त्वन्योऽयथातो भृगौ ॥ १३ ॥
दत्वा स्त्रीधनमस्तगः स्वविषयेच्छित्तिप्रदो भार्गवः ।
कार्यं साधयतेऽष्टमेऽथ नवमे क्षिप्रं करोतीप्सितम् ॥ १४ ॥
यातुः कर्मगतः प्रभूत धनदो लाभे जयार्थप्रदः ।
व्यर्थं द्वादशगो व्ययं प्रकुरुते शस्तो परैर्द्वादशः ॥ १५ ॥

भृगौ शुक्रे विलग्नस्थे वेश्या विलासिन्य अर्थो धनं अम्बराणि वस्त्राणि माल्यं स्रक् भोजनमन्नं सुखं निर्दुःखता एषां प्राप्तिर्लाभो भवति। अर्थे द्वितीये लाभो भवति धनानाम् । सहजे तृतीये गतो याता न सीदति नावसादं प्राप्नोति अपि तु सोत्साहो भवति, तथेष्टां अभिलषितां श्रुतिं प्राप्नोति। पातालस्थे चतुर्थस्थे सुहृदां मित्राणामागमः। सुतगृहे पञ्चमस्थे स्थानं स्थितिरर्थो धनं मानं पूजा एषामाप्तयो लाभा भवन्ति। षष्ठे शुक्रे शत्रोः रिपोः सकाशात् पराभवो भङ्गादत्यन्तशोको भवति। अन्ये परे मुनयो वसिष्ठादयोऽस्मादुक्तादन्यथा जगुः कथयन्ति, षष्ठे शुक्रे शत्रुनाशः।

तथा च वसिष्ठः--

रिपुनाशो धनप्राप्तिः षष्ठस्थान गते भृगौ ;

आचार्यस्यापि वासिष्ठमतमभिप्रेतं वेत्यनुमीयते यतः—
समासयात्रायाम्—
रिपुनाशं षष्ठस्थ, इत्युक्तम्।

भार्गवः शुक्रोऽस्तगः सप्तमगतः स्त्रीधनं स्त्रियः सकाशाद्धनं दत्वा पश्चात्स्वविषयकव्युच्छित्तिदः स्वस्यात्मीयस्य विषयस्य देशस्य व्युच्छित्तिं विनाशं ददाति, अथवा स्त्रिधनं स्त्रियोधनं वा स्त्री च धनं चेति समहार स्तेन तदुभयं दत्वापि स्वविषयसंरक्षणं न भवति इति। अष्टमस्थे शुक्रे गतो यातुः कृत्यं कार्यं साधयते। अथानन्तरं नवमे शुक्रे ईप्सितं यथाऽभिलषितकार्यं आश्वेव क्षिप्रमेव करोति सम्पादयति। कर्मगतो दशमस्थो यातुर्गच्छत प्रभूतं बहुद्रव्यं धनं ददाति। लाभे एकादशे जयः स्वविजयं अर्थाश्च प्रददाति। व्ययगो द्वादशगो व्यर्थं कार्योपयोगं विना व्ययं प्रकुरुनेऽत्रापरैर्वसिष्ठादिभि द्वादशः शुक्रः शोभनः, उक्तः कथितः।

तथा च वसिष्ठः-

शत्रु वित्तप्रदः प्रोक्तो भार्गवे व्ययसंस्थिते।
आचार्यस्याप्येतदेवाऽभिप्रेतम् ॥
समासयात्रायामुक्तं "बलसङ्घातकृदिति" ॥ १२। १३। १४। १५ ॥

## अथ सौरस्य द्वादशभावेषु फलमाह–

बन्धं बधं चार्कसुते विलग्ने



धनेऽर्थहानिं लभते शुचं च।
शत्रोर्बलं हन्ति गतस्तृतीये
चतुर्थगो बन्धुभयं परेभ्यः ॥ १७ ॥

नार्थप्रसिद्धिःसुतगेऽर्कपुत्रे
रिपुं रिपुस्थे सजयत्ययत्नात्।
उत्साहभङ्गोऽक्षीरुजश्च दारे
विषाग्निशस्त्रादि-वधोऽष्टमस्थे ॥ १८ ॥

धर्मे न धर्मं लभते सुखञ्च
न निर्वृतिं कर्म सुखं च खस्थे।
एकादशस्थे जयवित्तलाभान्
मन्देऽन्त्यगेऽनर्थमुपैति याता ॥ १९ ॥

अर्कसुते सौरे विलग्नगते बन्धं बन्धनं बधस्ताडनं मरणं वा लभते प्राप्नोति। धने द्वितीयस्थाने अर्थहानिं धननाशं शुचं शोकं च लभते। तृतीये शनैश्चरे गते शत्रोर्बलं सेनां हन्ति घातयति। चतुर्थगे बन्धनं भयं च परेभ्यः शत्रुभ्यो लभते। अर्कपुत्रे शनैश्चरे सुतगे पञ्चमस्थे नार्थप्रसिद्धिः अर्थानां प्रयोजननां सिद्धिर्नो भवति। रिपुस्थे षष्ठस्थे अयत्नादक्लेशाच्छत्रुं जयति। दारे सप्तमे सौरे उत्साहभङ्गः पुरुषार्थपराभवः तथा अक्षिरुजश्चक्षुरोगश्च भवन्ति। अष्टमस्थे विषेणाऽग्निना शस्त्रेण बधो भवति, आदिग्रहणाद् व्याधिनेति। धर्मे नवमे मन्दे सौरे धर्मं सुखञ्च न चाप्नोति। दशमस्थानस्थे निर्वृतिं सुखभावं कर्माणां सुखञ्च न लभते। मन्दे सौरे एकादशस्थे जयं शत्रु विनाशं वित्तं धनं अन्येषां वाहनादिनां लाभान् प्राप्नोति। अन्त्यगे द्वादशस्थे मन्दे यातोऽनर्थमुपैति अर्थहानिं प्राप्नोति ॥ १७। १८। १९ ॥

## एवं ग्रहाणां भावफलं विस्तरेणोक्त्वा एतदेव संक्षेपेणाह–

प्रायो जगुःसहजशत्रुदशाय संथाः
पापाः शुभाः सवितृजं परिहृत्य खस्थम्।

सर्वत्रगाः शुभफलं जनयन्ति सौम्या–

स्त्यक्त्वास्तसंस्थममरारिगुरुं जिगीषोः ॥ २० ॥

प्रायो बाहुल्येन आचार्याः नन्दिप्रभृतयो जगुरुक्तवन्तः, यथा पापाः रविभौमसौराः सहज-षष्ठदशायसंस्थाः तृतीयषष्ठदशैकादशस्थाः शुभाः श्रेष्ठफलाः। सौरस्य विशेषमाह, सवितृजं परिहृत्य खस्थमिति। सवितृजं सौरं खस्थं दशमस्थानगतं परिहृत्य त्यक्त्वा एवं शनैश्चरो दशमे न शुभः, क्षीणः शशी पापवद्विज्ञेयः, सहजषष्ठदशमायेष्वेव शुभः। सौम्याः शुभग्रहाः बुधबृहस्पतिपूर्णचन्द्राः सर्वत्रगाः सर्वेषु द्वादशसु स्थानेषु शुभ फलं जनयन्ति उत्पादयन्ति। यद्यप्येवं तथाप्यष्टमस्थश्चन्द्रमा नशुभः। शुक्रस्य विशेषमाह अमरारिगुरुं शुक्रं सप्तमस्थं त्यक्त्वा विहाय जिगीषोः शत्रुविजयप्रवृत्तस्य शुभफलं जनयन्ति।

तथा च नन्दिः—

सर्वस्थानगताः सौम्याः पापश्चोपचयर्क्षगाः।
विहाय सप्तमं शुक्रः शेषगोयातुरिष्टदः॥
क्षीणः शशी पापतुल्यः शुक्रे सौम्यो ऽष्टमं विना॥ २०॥

## एवं स्वमतमुक्त्वाऽन्यमतमाह–

केचित्प्राहुररिव्ययास्तसहजस्थानानि हित्वा भृगुः

श्रेष्ठश्चन्द्रसुतोऽन्त्यधर्मसहजद्यूनस्थितो नेतरः।

चन्द्रो लाभसुतार्थधर्मसहजव्योमस्थितः पूजितो–

जीवः सर्वगतो मणित्थकथितो नेष्टोऽन्यषट्त्रिस्थितः॥ २१॥

केचिदन्ये आचार्याः ब्रह्मशण्डादयः एवं प्राहुः, यथा अरिः षष्ठस्थानं व्ययं द्वादशं सप्तमम-स्तस्थानं सहजं तृतीयं एतानि स्थानानि त्यक्त्वा भृगुः शुक्रः श्रेष्ठफलदः। उक्तादन्यस्थानगः शुभफलद इत्यर्थः। तेन लग्न-द्वितीय-चतुर्थपञ्चम-नवम-दशमैकादशेषु शुभः। चन्द्रसुतो बुधः द्वादशनवमतृतीयसप्तमस्थः पूजितःशोभनः। तेन इतरोऽन्यस्थानगतः लग्नद्वितीयचतुर्थपञ्चमषष्ठा-ष्टमदशमैकादशेषु न शुभः। चन्द्रः शशी लाभे एकादशे सुतस्थाने पञ्चमेऽर्थे द्वितीये धर्मे नवमे सहजे तृतीये व्योमे दशमे एतेषु पूजितः शुभः। नान्येषु लग्नचतुर्थषष्ठसप्तमाष्टमद्वा-



दशेषु न शुभः। जीवो बृहस्पतिः सर्वगतो द्वादशसु भावेषु शुभः मणित्थमते अन्त्यषट्त्रि-स्थितः द्वादश-षष्ठ-तृतीयस्थो नेष्टः।

तथा च ब्रह्मशण्डः-

त्रिषट्दशायगाः पापाः द्वित्रिलाभात्मजाम्बरे।
नवमे च स्थितश्चन्द्र स्त्रिनवान्त्याऽस्तगो बुधः॥
सर्वस्थानगतो जीवः त्यक्त्वा षट्द्वादशं विना।
शुक्रः शुभप्रद प्रायो ग्रहाः शेषेष्वनिष्टदा॥
मणित्थकथितेनेष्टो अन्त्यषट्त्रिस्थितो गुरुः॥ इति॥

तथा च मणित्थः—

विनान्त्य-षट्त्रिगो जीवः सर्वस्थानगतःशुभः॥ इति॥ २१॥

## अथात्रैव मतान्तरमाह–

एकीयपक्षेऽपि हि कैश्चिदुक्तं

भृगुः शुभोऽन्त्यात्मजलाभवर्जम्।

चन्द्रः त्रिषष्ठायदशास्तसंस्थो

बुधोऽस्तलग्नायसुहृद्व्ययस्थः॥ २२॥

एकीयपक्षे केषांचिन्मते हि यस्मादर्थे कैश्चिद्बादरायणप्रभृतिभिः कथितं उक्तं, यथा भृगुः शुक्रः, अन्त्यं द्वादशं, पञ्चमं सुतस्थानं, एकादशं लाभस्थानं एतानि स्थानानि वर्जयित्वाऽन्येषु लग्न-द्वितीयतृतीयचतुर्थषष्ठसप्तमाष्टमदशमेषु शुभः। चन्द्रः त्रिषष्ठायेति, तृतीयषष्ठैकादशदशमसप्तमस्थः शुभः, नान्येषु तेन लग्नद्वितीयचतुर्थपञ्चमाष्टमनवमान्त्येष्वशुभः। बुधः सप्तमे प्राग्लग्ने, एकादशे चतुर्थे द्वादशे च स्थितः शुभः शेषेष्वशुभः।

तथा च बादरायणः—

उपचयसंस्थाः पापाः सुतलाभद्वादशं विना शुक्रः।
उपचयजामित्रगतः शशी गुरुस्तु सर्वगः सौम्यः॥
अन्त्यहिबुकसप्तमलग्नोपगतः शुभप्रदः प्रायः।

शशिनः शुक्ले पुष्टं कृष्णे याप्यं फलं वाच्यम् ॥ इति ॥
वराहमिहिराचार्य कृतेऽस्मिन्मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥ २२ ॥

इति भट्टोत्पलविरचितायां यत्त्येऽश्वमेधीययात्राविवृतौ ग्रहशुद्धिर्नामाऽध्यायो दशमः ॥ १० ।



# अथोत्सर्गापवादाऽध्यायो व्याख्यायते–

उत्सर्गः सामान्यः सर्वव्यापकः, अपवादो विशेषः । एकदेशमाश्रित्योत्सर्गस्य बाधको भवति, तौ द्वौ यत्रोच्यते स उत्सर्गापवादाऽध्यायः ।

## ॥ तत्र च ग्रहाणां लग्नादिस्थितानां यत्फलमुक्तं तदेव दूषयन्नाह–

सौम्यासौम्येष्वेतल्लग्नादिस्थितेषु यत्फलं प्रोक्तम् ।
तत्समकालगतानां फलवैषम्यादनैकान्तम् ॥ १ ॥

सौम्याः शुभग्रहाः असौम्याः पापाः तेषु सौम्यासौम्येषु लग्नादिस्थितेषु लग्नाद्या ये द्वादशभावास्तेषु स्थितेषु सत्सु यत्फलमनन्तरमुक्तं कथितं तत् समकालगतानां एकस्मिन् समकाले तुल्यसमये गतानां पुरुषाणां फलवैषम्यात् फलवैसादृश्यादनैकान्तमनिश्चयीकृतम् । ग्रहतिथिकरणर्क्षलग्नयोगतुल्यानुकूल्ये गता ये: तेषाम्, एकोऽन्यादृशं फलं प्राप्नोति, अन्योऽन्यादृशमिति । फलान्यत्वात् अनिश्चयीकृतमित्यर्थः ॥ १ ॥

## अधुना तदेव निश्चयं ज्ञापयन्नाह–

होराविदो जगुरिदं सूतावबलो दशाधिपारिश्च ।
अशुभफलश्च साम्प्रतमुदये सौम्योऽपि नेष्टफलः ॥ २ ॥

होराविदो जातकज्ञा गर्गवसिष्ठपराशरप्रभृतयः, इदं वक्ष्यमाणं जगुरुक्तवन्तः, यथा यो ग्रहो यातुः सूतौ जन्मकालेऽबलो वीर्यरहितः, तथा तत्कालं यस्य ग्रहस्य सम्बन्धिनी दशा वर्त्तते तस्य दशाधिपतेररिः शत्रुः साम्प्रतं यात्राकाले गोचरेणाष्टवर्गेण चाशुभफलदोऽनिष्टफलदः, अशुभस्थानस्थः उदये लग्ने सौम्योऽपि शुभग्रहोऽपि नेष्टफलः, इष्टफलप्रदो न भवतीत्यर्थः । यस्य यात्रा प्राधान्यात् लग्नग्रहणं यतो मूर्तिं लग्नमिति, तस्मात् सर्वस्थानेषु तादृशो सौम्योऽपि न

शुभदः किं पुनः पाप इति।

तथा च भगवान् गर्गः—

दशाधिपस्य यः शत्रु र्यो जन्मन्यबलो ग्रहः।
न गोचरेण शुभदः स हि सौम्योऽप्यनिष्टदः ॥

## अत्रैव पुनरप्याह—

साम्प्रतं शुभदः सूतौ बलान्वितो यो दशेशाधिमित्रं चेत्।
पापोऽपि हि शुभदः स्यात् श्लोकः शास्त्रोदितश्चात्र ॥ ३ ॥

यो ग्रहः साम्प्रतं यात्राकाले गोचरेणाऽष्टकवर्गेण वीर्यसंयुक्तः तथा वर्त्तमान दशापतेरधिमित्र अधिसुहृत्, एवं विधः पापोऽपि ग्रहः शुभदः प्रशस्तफलदः स्यात्। किं पुनः सौम्यः।

तथा च गर्गः—

यः साम्प्रतं शुभफलो यश्च जन्मनि वीर्यवान्।
दशापतेरधिसुहृत्स पापोऽपीष्टदो मतः ॥ इति ॥
अस्मिन्नर्थेऽयं श्लोकः शास्त्रोदितः शास्त्र निर्दिष्टः ॥ ३ ॥

## वसिष्ठमुनिकृतो ज्ञापकः साक्षात्पठति—

सौम्योऽप्यतीतचिरभाविफलो न योज्यः
पापोऽप्यसाम्प्रतफलो रिपुनिर्जितश्च।
पाकाधिपः सुहृदनष्टकवर्ग शुद्धः
स्वल्पोफलश्च दिनभांशविधि स्तथा स्यात् ॥ ४ ॥

अस्यार्थः- सौम्योऽपि शुभग्रहोऽपि अतीतचिरभाविफलः अतीतं अतिक्रान्तं फलं यस्य ग्रहस्य सोऽतीतफलः प्राग्दत्तफलः इत्यर्थः, तथा चिरभाविफलः चिरेण दीर्घेण कालेन पुरस्ताद्भावि एष्यत्फलं यस्य एवं विधः सौम्यः शुभोऽपि अपि शब्दात्पापोऽपि एवं विध यात्रा लग्ने न योज्यः, तादृग्यात्रा लग्नं न दद्यात्। यस्मिन् स्थितः शुभः पापो वापि अतिक्रान्तफल इत्यर्थः। पापोप्यसाम्प्रतफल इति। पापग्रहोऽपि तत्कालमसाम्प्रतफलो विरुद्धफलो लग्ने न योज्यः।



अपि शब्दात्सौम्यग्रहोऽपि विरुद्धफलो न योज्यः। तथा पाकाधिपाऽसुहृत्। पाकपतेर्वर्त्तमान दशापतेरसुहृच्छत्रुरित्यर्थः सोऽपि लग्ने न योज्यः, अनष्टकवर्गशुद्धः जातकोक्तेनाष्टकवर्गेण यो न शुद्धः न शुभफलदः सोऽपि लग्ने न योज्यः। तथा च स्वल्पफलश्च। जातके यः स्वल्पफलः अतिवाल्पफलदः सोऽपि लग्ने न योज्यः। अफलश्च, यस्य ग्रहस्य जातके शोभनं दशाफलं भावफलं राशिफलं दृष्टिफलं योगफलं वा न किञ्चिदप्यस्ति सोऽपि न योज्यो यात्रा लग्ने। दिनभांशविधिस्तथास्यादिति, न केवलं तादृशो ग्रहो लग्ने दद्यादित्येव न, तदीयं दिनं वासरं तदियं भं नक्षत्रं राशिं लग्नगतं तदियमंशं नवांशकं च तथा तेनैव प्रकारेण स्यात् भवेत्, अतो यात्रायां नदद्यादिति ॥ ४ ॥

## अथात्रैव मतान्तरेण लग्नशुद्धिमाह—

सौम्यं दशाधिपं लग्नसंस्थमिच्छन्ति केचिदाचार्याः।
पापं चोपचयस्थं न च लग्ने तत्र च श्लोकौ...... ॥ ५ ॥

केचिदाचार्याः मणित्थप्रभृतयः सौम्यं शुभग्रहं दशाधिपं वर्त्तमानदशानाथं लग्नसंस्थं यात्रा लग्नस्थितं इच्छन्ति, पापं क्रूरग्रहं दशापतिं उपचयस्थं लग्नात् षटत्रिदशायस्थं इच्छन्ति बाञ्छन्ति न च विलग्ने ॥ ५ ॥

तत्र च श्लोकौ तत्र तस्मिन्नर्थे इमौ वक्ष्यमाणौ द्वौ श्लोकौ ज्ञापकौ साक्षात् पठति।

## तौ चाह—

सौम्यग्रहेषु लग्नेषु शुभमेकान्तनिश्चितम्।
पापग्रहोदये यातुरसंशयमशोभनम् ॥ ६ ॥
तस्मात् क्रूरदशानाथं यातु वीर्य गुणान्वितम्।
कुर्यादुपचयर्क्षेषु न विलग्ने कथञ्चन ॥ ७ ॥

प्रायः स्पष्टावेतौ श्लोकौ। शुभग्रहेषु दशापतिषु लग्नस्थेषु यातुः शुभं फलं एकान्तेन दार्वेण निश्चितं, सिद्धान्तेन निश्चयीकृतमित्यर्थः। पापग्रहे तु दशापतौ लग्नगते यानं निःसंदिग्धमशोभनमनिष्टफलमत स्तमाद्धेतोः क्रूरं पापदशानाथं वीर्यगुणान्वितं बलेन गुणेन शुभदशाफले-

नान्वितं युक्तं यातुलग्नादुपचयेषु त्रिषडेकादशदशमान्यतमेषु यात्रा लग्नात्कुर्या न विलग्ने। यात्रा लग्ने कथं च न कदा न च दद्यात् ॥ ६ । ७ ॥

## एतादृशं मुनिमतमालोच्य स्वयमेव दूषयितुमाह–

तच्च विरुद्धं तेषां कथमन्यदशासु दास्यते सफलम् ।
एवं फलस्य नाशो व्रजति हि सर्वस्य फललिप्सोः ॥ ८ ॥

यदेतत्प्रागुक्तं तस्मात् क्रूरं दशानाथं यातुर्वीर्यगुणान्वितं उपचयर्क्षेषु कुर्यादिति, तत्तेषां आचार्याणां मते विरुद्धं विरोधमागतं असाम्यं प्राप्तम् । कुत इत्यत आह । कथमन्यददासु दास्यते सफलमिति । स ग्रहः कथं केन प्रकारेण अन्य ददासु अपर गृहदशास्वात्मीयं दकाफलं दास्यते । यदुक्तं ! क्रूरकर्म दशाधिनाथ उपचय क्रियते, तत्र शुभफलत्वर्क्षेषु कुर्यात्तत्रचाशुभोऽपि शुभफलं दास्यति । यतः पापानामुपचयस्थानां सर्वत्र शुभं फलं उक्तम्, कदाचित्स पापो जातकफलेनाऽशुभस्तस्य च फलविघाताय स उपचयस्थः क्रियते, तत्र शुभफलत्वात् । यद्यप्येवं तदस्य स्वदशायां शुभमशुभं वा फलं यद्विद्यते तत्र यातुर्यदि स्वदशायां तत्फलं न ददाति तत् किमन्यासु ग्रहदशासु दास्यति । यद्यप्येवमङ्गिक्रियते तत् यद्यत्कर्मारभ्यते तत्र तथा विधे लग्ने क्रियते । यस्य शुभग्रहाः शोभनस्थानस्थाः पापाश्चोपचयर्क्षगा स्तत्र कर्मसिद्धिं याति । एवमनेन प्रकारेण हि यतो यस्मात् सर्वस्याऽशेषफललिप्सोः फलाभिकाङ्क्षिणः फलनाशो व्रजति गच्छति । जातकफलं प्रमाणिकृत्य तत्काललग्नजातमेव फलं भवति तस्मादयुक्तमेतत् ॥ ८ ॥

## अथास्मिन्नेवार्थे मुनिमतं प्रमाणीकर्तुमाह–

तस्मान्नैकान्तोऽयं जातकमवलोक्य निर्दिशेत्सदसत् ।
श्लोकौ वृत्तं चेदं प्राह मणित्थो वसिष्ठश्च ॥ ९ ॥

तस्माद्धेतोरनैकान्तोऽयमयं पक्षो न निश्चयी कृतः ।

यदुक्तं—

कुर्यादुपचयर्क्षेष्विति किं तर्हि जातकमवलोक्य निर्दिशेत्सदसदिति । यातुर्जातकं जन्मकालं आलोक्य दृष्ट्वा सदसच्छुभाशुभं निर्दिशेत् । रक्षमाणं रक्षका वर्द्धकाश्चेति । अस्मिन्नेवार्थे मणित्थाचार्यः श्लोकौ द्वौ प्राह उक्तवान् । वसिष्ठमुनिश्चैकं वृत्तं उक्तवान् ।



अधुना मणित्थोक्तं श्लोकद्वयमाह–

रक्षका वर्द्धकाश्चैव ये स्यु र्जन्मनि नायकाः ।
तान् पापानपि निःशङ्को यात्रा लग्नेषु योजयेत् ॥
शुभाशुभफला योगा जातके ये उदाहृताः ।
तान्यथा योग्यपुरुषं प्रयाणेष्वपि योजयेत् ॥

अनयोरर्थः– रक्षतीति रक्षकाः चकारः समुच्चये एवकारः प्रकरार्थे तेन केवलं रक्षकाः जन्मन्यरिष्टपरिहारका इति यावत्. वर्द्धकाः वर्द्धयन्तीति वर्द्धकाः, ये च स्यु र्जन्मकाले नायकाः जन्मकाले ये ग्रहाः कारकाख्याश्चोक्ता इत्यर्थः । रक्षक वर्द्धक कारक परिज्ञानं इह आचार्येणोक्तम् वादरायणादिभिरुक्तम् ।

तथा च वादरायणः—

रक्षन्ति कारकाख्या जातस्यशरीरमञ्जसा सर्वे ।
चारगताश्च तद्वत् शुभदाता स्वे दशाकाले ॥

वादरायणेनोक्ता, लग्न चन्द्रगता ये कारकग्रहास्ते रक्षकसंज्ञा भवन्ति । चारगताश्च शुभदशा पाककाले रक्षका एव भवन्ति ।

स्वनिसर्गदशावर्षेषु च ग्रहदशाः प्रवृत्ताः सामान्येन शुभाः प्रोक्ताः ।

तथा चाऽऽचार्य आह—

स्वैःस्वैःपुष्टफला निसर्गकथितैः पक्तिर्दशायाः क्रमात् ।

स्वनिसर्ग दशावर्षेषु यो ग्रहः स्वदशा पाकं भुनक्ति स रक्षक इत्यत्र ।

भूचिध्वज आह—

स्वं स्वं वयस्तुल्यमवाप्य काले शरीरिणामाहुरनुक्रमेण ।
स्वैः स्वै गुणैरात्मबलैश्च पुंसां संवर्द्धनाद्रक्षणदा भवन्ति ॥

तथा च सत्यः—

स्वां स्वां वयसः सदृशां ग्रहाःसमासाद्य देहिनां कालात् ।
रक्षण–पोषण-चेष्टा–स्वभावदाः स्युर्यथा कालम् ॥

यथा लग्नकेन्द्रगतस्य ग्रहस्य कर्मगो ग्रहः सम्पूर्ण दशापाके बलान्वितः कारक स्तथा स

रक्षको वर्द्धकश्च भवति, सम्पूर्णदशापाकगो वा स्वनिसर्गदशावर्षेषु स्वदशाफलपाकदो ग्रहो रक्षको वर्द्धकश्च भवति, तस्मादनेकाकारं फलं वर्द्धयतीति वर्द्धकः। सत्याचार्यादिभिरत्र बलक्रम प्रदिष्टः।

तथा च वादरायणः-

व्यावर्तयेच्च विघ्नानुपचयसंस्थः करोति वृद्धिं च ।
स्वेषां स्वेषां वर्गे बलवीर्यसमन्विताः क्रमशः ॥

यदा लग्नकेन्द्र व्यतिरेकेण तत्फलं पणफरस्थस्य कारकस्य वा स नायक इत्युच्यते ।

तथा च वादरायणः-

स्वोच्चत्रिकोणसंस्थास्त्रय केन्द्रगता ग्रहाः प्रसवकाले ।
ज्ञेया नायकसंज्ञा ह्युपनायकसंज्ञिता भाग्ये ॥
नवयस्थानं भाग्यसंज्ञं वादरायणेनोक्तम्-
केन्द्रान्तरेषु युक्ता स्त्रितयान्यतमे ग्रहास्तु वीर्याढ्याः।
मित्रगृहेषु च याता ह्युपनायकसंज्ञिता ज्ञेयाः ॥

रक्षकादीनां लक्षणमेवं प्रकारेणाऽऽचार्यैरुक्तम्

तथा च सिद्धसेनः—

स्वक्षेत्रगतो जीवो वृश्चिकराशौ च नायको भवति ।
घटधरसंस्थो भौमो बुधोऽष्टमे मेषराशौ च ॥
स्वक्षेत्रे रजनिकरो बुधभवने भार्गवो रविः स्वगृहे ।
सौरश्च तुलाधरे नायकविधिरेप यवनोक्तः ॥

एवं रक्षकवर्द्धकनायकोपनायकाः परामृश्यन्ते, तान् ग्रहान् पापानपि किं पुनः शुभान् निःशङ्कः निःसन्देहो यात्रा लग्ने योजयेत् दद्यात्। रक्षक-वर्द्धक-जन्मनायक-संज्ञितेषु ग्रहेषु गमन-लग्नव्यवस्थितेषु क्रूरेष्वपि यायात्. अन्येत्वेवं व्याचक्षते । यश्चाथ पणफरस्थः स भवति रक्षोपगस्तस्येति। वर्द्धकाश्च कारस्थाः किल ते परस्परं कारकत्वाच्छुभफलं वर्द्धयन्ति। ये च जन्मनि नायकाः प्रधानास्तेषामति बलत्वा त्तान् ग्रहानेवं विधान् पापान अपि निःशङ्को यात्रालग्ने योजयेत्, इति। शुभाशुभ योगा जातके होराशास्त्रे उदाहृता उक्ता ते च यथा राजयोगा शुभाः नाभसाश्च तान् योगान् यथा योग्यं पुरुषं यथार्हपुरुषं प्रति यस्मिन योगे यो योग्यः पुरुष स्तस्य तथाभिधं राजयोगादिकं प्रयाणेषु योजयेत्। एतदुक्तं भवति केवलं यात्राप्रकरणोक्तेनैव गृहशुद्धि र्न्यायेन च गन्तव्यं जातकोक्तैः शुभयोगैश्च गन्तव्यं अशुभैर्न च गन्तव्यं,



अत्र यथायोग्यं पुरुषं योजयेदित्यनेन, आचार्यो जातकोक्तराजयोगानां विषयविभागस्यातिदेशं करोति ।

यथा—

अपि खल कुलजाता मानवा राज्यभाजः
किमु स नृपकुलोत्थाः प्रोक्त भूपालयोगैः ।
नृपतिकुलसमुत्था पार्थिवा वक्ष्यमाणै-
र्भवति नृपतितुल्यस्तेष्वभूपालपुत्रः ॥ इति ॥
उच्च स्वत्रिकोणगैर्बलिष्ठै स्त्र्याद्यैर्भूपति वंशजा नरेन्द्राः ।
पञ्चादिभिरन्यवंशजाता हीनै र्वित्तयुता न भूमिपालाः ॥

स्वकुलजाता इत्यस्मात् श्लोकादर्वाक् ये राजयोगा उक्तास्तेषु योगेषु खलकुलजाता अपि मानवा राज्यभाजो भवन्ति किं पुनर्ये नृपतिकुलजाता स्ते तु पुनरेषुयोगेषु सर्वेषु राजानो भवन्ति । अस्मादेवार्द्ध श्लोकादनन्तरोक्तै राजयोगैर्नृपतिकुलजाता एव केवलं राजानो भवन्ति नान्ये, अन्यवंशजास्तु ऐश्वर्येण, नृपतुल्या भवन्ति। तथा उच्च स्वत्रिकोणस्थैर्बलयुक्तै स्त्र्याद्यै नृपति वंशजा राजानो भवन्ति, पञ्चादिभिरेवाऽन्यकुलजाताराजानो भवन्ति । पञ्चम्योहीनैस्तु वित्ताढ्या न पुन राजान इति, दक राजयोगानां विषयविभागं स्पष्टतरमुक्तम् ।

तथा च विष्णुगुप्तः—

वंशोत्तमगेषु नृपाः जायन्ते च वक्ष्यमाणेषु ।
तेषु प्रागुक्तेषु च राजानो राजकुलजाताः ॥
नृपयोगेषु च जाता हीनेषु च राज्यभागिनस्ते स्युः ।
पुष्कलयोगोद्भूताः सागरगमनां महीं यान्ति ॥
राज्यानर्हकुलेष्वपि जाता मनुजा भवन्ति माण्डलिकाः ।
सचिवा नृपतिसमा वा सेनाधिपतयोऽधिपा धनिनः ॥

एवमत्रापि दैव समन्वितो याता कार्यनिष्पत्तौ गमन लग्नाद्विना ग्रहलग्नपरिशुद्धिं विना गतः सिद्धिं नाप्नोत्यतो जन्मनि येषां प्रत्यक्षतो राजयोगस्तस्यैव राजयोगान्विते काले यातुः सहसा राज्यादिलाभसिद्धिः सुतरां । लग्नशुद्धेः स्वल्पदोषत्वात्, एवं माण्डलिकादिषु गमनं तथा सामान्य-सेनापतीनां ये योगास्तथा योजनीयाः, अधर्मप्रवृत्तानां च तथाऽभिधा योगा अपि न पूर्णं फलदा ।

अत्र विवदन्ते परधनहरणप्रवृत्तस्य नाभसयोगः, कूटयोगश्च, कृष्यर्थं यो याति तस्य केदारः, परविघातार्थं यो याति तस्य शूल, धर्मार्थं यो याति तस्य गदेत्येवमादय उह्या, यथायोग्यमिति। अत एव योगयात्राप्रकरणे वक्ष्यतिः—

योगैः क्षितिपा विनिर्गताः शकुनैस्तस्करचारणादयः।
नक्षत्रगुणै र्द्विजादयः क्षणवीर्यादितरो जनोऽर्थभाक्॥

योगाऽध्यायोक्तैः केवल नृपा एव विनिर्गता अर्थभाजो भवन्ति, नान्ये सेनापतिसचिवादयः नृपाणामेते योगाऽध्यायोक्ता योगानान्येषामिति। राजयोगनिर्देशो यस्मिन् योगे श्रूयते, यात्राप्रकरणोक्तेन ग्रहलग्नशुद्धिन्यायेनाऽनिष्टफलता अपि तस्मिन् अभ्यनुज्ञा, नृपस्येत्येतत्प्रयोजनार्थं राजयोगं वासिष्ठं वृत्तं नानेनाह।

वसिष्ठः—

होरागतः स्वभवने यदि सूर्यपुत्रो
मेषोपगोऽवनिसुतः स्वगृहे शशाङ्कः।
शुक्रस्तुलाधरगतो मिथुने बुधश्च
सिंहे रविर्यदि च पार्थिव जन्म विन्द्यात्॥

होरागतो लग्नस्थः स्वभवने आत्मीयराशौ यदि सूर्यपुत्रः सौरः, अत्र यद्यपि सामान्येनोक्तं तथाऽपि मकरलग्ने स्थितः, अवनिसुतोऽङ्गारक मेषोपगो मेषप्राप्तः, शशाङ्कः श्चन्द्रः स्वगृहे कर्कराशौ व्यवस्थितः तुलाधरगतः शुक्रः, मिथुने बुधः' सिंहे रविः तदा पार्थिवजन्म विन्द्यात् जानीयात्।' एवमस्मिन् योगे जातो राजा भवति, एवं विधेष्वपि योगेषु नृपो यायात्, यद्यत्यन्तानिष्टफला तिथ्यादीनां नस्यादिति। अयमेव योग आचार्येणाऽपि जातके उक्तः।

यथाऽऽह जातके—

मृगमुखेऽर्कतनयस्तनुसंस्थः
क्रियकुलीरहरयोऽधिप युक्तः।
मिथुनतौलिसहितौ बुधशुक्रौ
यदि ततः पृथुयशाः पृथिवीशः॥

अत्र रक्षका बद्धका स्तानाख्याः स्थिता इति सर्वं प्रदर्शितं भवति॥ ६॥

## अधुना तारासंज्ञकानां ग्रहाणां लक्षणमाह—

जन्मसमये शशाङ्काद्यद्यप्युपचयसंस्थिताः ग्रहाः केचित्।



सर्वे ते भावाख्याः क्रूरैः सौम्यैः समाश्चिन्त्याः॥ १०॥

यातुर्जन्मसमये शशाङ्काच्चन्द्राक्रान्तराशेरुपचयस्थानगमा ये केचिद्ग्रहाः ते सर्वे ताराख्या ज्ञेया, ते सर्वे सत्फलं तन्वन्ति विस्तारयन्ति, ते ग्रहाः क्रूराः अपि सौम्यैः शुभग्रहैः समास्तुल्या श्चिन्तनीयाः, यात्रायां ते हितकारिणो भवन्ति॥१०॥

## अधुना वश्यानां रक्षोपगानां च लक्षणमाह—

यो यस्य दशमसंस्थः स तस्य वश्योपगस्तु नियमेन।
यश्चाऽथ पणफरसंस्थः स भवति रक्षोपगस्तस्य॥१०॥

यत्पूर्वमुक्तं चन्द्रबलाऽध्याये (सखिवशि गृहयुक्त इति) तत्राऽयमुपयुज्यते। यो ग्रहो यस्य ग्रहस्य जन्मकाले दशमसंस्थः स तस्य वश्योपगो नियमेन निश्चयेन भवति, यस्माद्दशमस्थस्य भवतीत्यर्थः। तदीयफलं पुष्णाति सर्वकालं यश्च यस्य ग्रहस्य पणफरस्थः स तस्य रक्षोपगो भवति. यस्माद्द्वितीयादिस्थो भवति स तदीयं फलं रक्षति॥११॥

## अधुना तानेव तुल्यान् कारकाख्यांश्चाह—

उपचयपरस्परस्था स्तानः समाः प्रकीर्त्यन्ते।
आदौ प्रकीर्णकाऽध्याये चोदिताः कारकाख्याश्च॥१२॥

परस्परमन्योन्यमेवोपचयस्थाः तृतीयषडेकादशदशगास्ते तानसमाः तानतुल्याः संप्रकीर्त्यन्ते कथ्यन्ते ते च परस्परं फलं घोषयन्तीत्यर्थः। आदौ जातके प्रकीर्णाऽध्याये कारकाख्या ग्रहाश्चोदिताः।

ते च—

स्वर्क्षतुङ्गमूलत्रिकोणगाः कण्टकेषु यावन्त आश्रिताः।
सर्व एव तेऽन्योऽन्यकारकाः कर्मगस्तु तेषां विशेषतः॥इति॥

अन्येऽपि—

लग्नस्थस्य सुखस्था दशमस्थाश्चापि कारकाः सर्वे।
एकादशराशिस्था अपि मेषूरणे रविर्विशेषेण॥

स्वमित्रर्क्षो ज्ञगो हेतुरन्योऽस्य यदि वर्गगः ।
सुहृत्तद्गुणसंपन्नः सोऽपि कारकसंज्ञितः ॥
नीचकुले संभूतः कारक विहगैः प्रधानतां याति ।
क्षितिपतिवंशसमुत्थो भवति नरेन्द्रो न सन्देहः ॥इति॥

अत्र आत्मकारकादयोऽपि जैमिनीमुनिमतप्रसिद्धा अष्टौ चरकारका अष्टौ स्थिरकारका श्रोक्ताः । ते च भागाधिकः, कारकःस्यादल्पभागोऽन्त्यकारक इत्युक्तं वृद्धैः । आत्माऽमात्य-भ्रातृमातृपुत्रज्ञातयबलाः क्रमात् तेऽपि तदर्थं यातुः कारका भवन्ति इति । १२॥

## अथ यात्रायां यादृशो ग्रहो लग्ने नदेयस्तमाह–

जन्मेश्वरलग्नपयोर्यः शत्रुलग्नगः सौम्योऽपि ।
कुरुते देहविपत्तिं क्रूरोऽपि शुभस्तयोर्मित्रम् ॥१३॥

जन्मेश्वरो जन्मनि चन्द्राधिष्ठित राशिपति लग्नयो जन्मकाले प्राक्क्षितिजलग्नराशेरधिपतिः, तयोर्यो ग्रहः शत्रुः स यात्रा लग्नगः शुभग्रहोऽपि यातुर्देहविपत्ति शरीरनाशं कुरुते किं पुनः पापः तयोर्जन्मेशलग्नपयोर्यो ग्रहो मित्रं स मापोऽपि लग्नगतो यातुः शुभः श्रेयः प्रदः शब्दात्सोम्यो ऽतीव शुभः ॥१३॥

## अथाऽत्र सिद्धान्तमाह–

भवेन्नयः कारकतानसंस्थः
स्वजन्मलग्नाधिपयोः शुभोऽपि ।
करोति लग्नोपगतः स यातु–
र्भयं विनाशश्च बहुप्रकारम् ॥१४॥

यो ग्रह स्वजन्मराशिलग्नपयोः कारकतानसंस्थो न भवेत् तयोर्मध्ये एकस्यापि नकारकत्वेन अपि च तानत्वेन वा नस्थितः स शुभग्रहोऽपि यात्रा लग्नगतो यातुर्भयं भीतिं विनाशं सैन्य-विनाशं बहुप्रकारमनेकविधं करोति ॥१४॥



## अथान्नल्लग्नयदूषणमाह–

पापोऽपि लग्नोपतो नराणां
शुभप्रदः कारक तानसंस्थः ।
तस्मात्प्रयत्नादिदमेव चिन्त्यं
यियासतः कारकतानयातम् ॥१५॥

पापः क्रूरग्रहोऽपि यःकारकतानसंस्थः जन्मलग्नाधिपयोः कारकतानत्वेन वा स्थितः स यात्रालग्नगतो नराणां शुभप्रदः । अपि शब्दाच्छुभोऽतीव शुभः । तस्माद्धेतोः प्रयत्नात्सर्वथा यियासतो गच्छतः इदं कारक तान जारकत्व–तानत्व–रक्षकादि संयुतमिदं गमनेऽवश्यं चिन्त्यं चिन्तनीयमिति ॥१५॥

## अन्यदपि लग्नदूषणमाह–

एकोऽपि वक्रोपगतो नराणां
शुभोऽशुभो वापि चतुष्टयस्थः ।
वर्गोऽपि वाच्योदयगो विनाशं
बहुप्रकारं कुरुतेऽध्वगानाम् ॥१६॥

एकोऽपि ग्रहो वक्रोपगतः स च शुभो वापायो वा यदि चतुष्टयस्थः केन्द्रस्थः तथा भूतोऽध्वगानां प्रयातृणां पुरुषाणां बहुप्रकारमनेकविधं भीतिं विनाशं क्षयं च कुरुते. अपि शब्दोऽत्र सम्भावनायां, एकोऽपीदृक् किं पुनर्बहवः । अस्य वक्रोपगतस्य वर्गः गृहहोराद्रेष्काणन-वांशद्वादशांशत्रिंशद्भानां एकोऽपि लग्नस्थोऽपि भयं विनाशं च बहुप्रकारमेव कुरुते ॥१६॥

## अधुना रक्षकवर्द्धकनायकतानस्थस्य ग्रहस्य लग्नगतस्य फलमाह–

स्वसुतस्थाने[1] सूर्यः स्त्रीरत्नजयप्रमोददो लग्ने ।
अत्रशेषस्थानगतो बध बन्धोद्वेगदः क्षिप्रम् ॥१७॥

---

१, यात्राकालीनलग्ने लग्नादिद्वादशभावस्थितानां ग्रहाणां फलानि आदरायणोक्तानि ।

रक्षकवर्द्धकनायकस्थानस्थः सूर्यः स्वसुतस्थात्मीयपुत्रस्य शनैश्चरस्य स्थाने मकर-कुम्भयोरन्यतमे राशौ लग्नगतः स्त्रियो योषितो रत्नानि मणयः, जयो विजयः प्रमोदो हर्षः, एतान् ददाति अवशेषेषु अन्यगृहस्थानेषु चन्द्रभौमबुधगुरुसितानां राशिषु लग्नगतः स्थितः क्षिप्रं आश्वेव बन्धनं बधस्ताडनं उद्वेगो विनाश एतान् ददाति ॥१७॥

---

तनुभावस्थग्रहफलम्

राहुर्भौमदिवाकरेन्दुरविजाः प्रस्थानलग्न गताः
क्षुत्तृष्णाग्निविषायुधज्वरभवा रोगाश्च नानाविधाः ।
जीवः सोमसुतस्तथैव भृगुजो यात्रोदयस्थो नृणां
सा यात्रा धनधान्यभोगसुखदा पुण्यैः कृतैर्लभ्यते ॥

धनभावस्थग्रहफलम्

कोशस्थाने नराणामसुरगुरुबुधैर्धर्मकामार्थलाभम्
पुत्रोत्पत्तिं च जीवो धनसुखमतुलं शत्रुपक्षक्षयञ्च ।
मन्दो बन्धं सुदीर्घं मृतिमवनिसुतः कोशहानिं च भास्वां-
श्चन्द्रः कुर्यान्नरेन्द्रं प्रियजनसहितं राहुरुत्पातरूपम् ॥

सहजभावस्थग्रहफलम्

प्रस्थाने भूमिपस्य क्षितिसुतरविजौ तिग्मभानुश्च राहुः
शुक्रश्चन्द्रात्मजो वा सुरगुरुरथवा शीतरश्मिर्धनायुः ।
दुश्चिक्यस्थानसंस्थो गजतुरगरथान् प्राप्य सर्वार्थसिद्धिं
जित्वा शत्रूनशेषान्विचरति वसुधा गोकुले गोपवेशः ॥

सुखभावस्थग्रहफलम्

बन्धुस्थानगतो ददाति विपुलान् भोगान् भृगोरात्मजो-
जीवः शत्रुविनाशमिच्छति महालाभं करोतीन्दुजः ।
हानिं बन्धुगतः करोति रविजो वृद्धिं क्षयं चन्द्रमा
राहुर्भूमिसुतस्तथोष्णकिरणः कुर्वन्ति दुःखं महत् ॥



## अधुना चन्द्रस्याह—

**उडुपति रुदयप्राप्तः सर्वस्थानोपगः प्रयातृणाम् ।**
**कुरुते शत्रुप्रवृद्धिं दीप्तिविनाशं विघातश्च ॥१८॥**

उडुपतिश्चन्द्रः रक्षक-वर्द्धक- तानत्वेन स्थितः सर्वस्थानोपगः सर्वेषां ग्रहाणां स्थानेषु राशिषु स्थितः उदयप्राप्तो लग्नोपगः प्रयातृणाम् गच्छतां शत्रुविवृद्धिं अरीणामुपचयं दीप्तिविनाशं तेजोहानिं विघातं उपद्रवं च कुरुते ॥१८॥

---

पुत्रभावस्थग्रहफलम्

कुर्यादर्थस्य सिद्धिं सुतभवनगतो वाक्पतिः शत्रुनाशं
शुक्रः शीतांशुपुत्रः सुरगुरुसदृशं युद्धकाले करोति ।
सूर्यश्चन्द्रश्च भौमो दिनकरतनयः सिंहिकानन्दनोऽसौ
सर्वे ते पञ्चमस्था विविधभयकराः पार्थिवानां रणोर्व्याम् ॥

अरिभावस्थग्रहफलम्

शत्रुस्थाने नराणां दिनकरतनयो भूमिपुत्रस्तथार्कः
शीतांशुर्दैत्यमन्त्री रजनिकरसुतः सैंहिकेयोऽथ जीवः
कुर्वन्त्येवार्थलाभं परबलमथनं सिद्धिमाप्नोति कार्यं
शत्रुघ्नं भूमिपानां भवति हि गमने धर्मकार्यार्थसिद्धिः ॥

कलत्रभावस्थग्रहफलम्

नाशं शुक्रदिवाकरार्कतनया राहुस्तथा भूमिजः
क्षिप्रं शत्रुवशं नयन्ति पथिकं स्थाने स्थिताः सप्तमे ।
सौम्यो मित्रसमागमं सुरगुरुः स्त्रीवित्तलाभं नृणां
चन्द्रोऽभीष्टं सुखं ददाति च धनं यात्रासु जामित्रगः ॥

आयुर्भावस्थग्रहफलम्

आरोग्यं चन्द्रपुत्रो जनयति भृगुजः सर्वकामार्थसिद्धिं
जीवो रक्षत्यशेषं सुतमिव जननी यात्रिकं नैधनस्थः ।

## अथ भौमस्य

थानेऽर्कसुतस्य कुजो लग्नस्थो रिपुविनाश जयदाता ।
शेषस्थानोपगतः क्षितिसुत रत्नार्थनाशकरः ॥१६॥

रत्नकवर्द्धकतानत्वेन स्थितः कुजोऽङ्गारकः अर्कसुतस्य सौरस्य स्थाने मकरकुम्भयोरन्यतमे विलग्नगतो रिपुविनाशं स्वविजयं ददाति, शेषेषु अन्यग्रहस्थानेषूपगतः रविशशिबुधगुरुशुक्राणां राशिषु प्राप्तः, क्षितेः भूमेः सुतानां पुत्राणां रत्नानां मणिनां अर्थस्य वित्तस्य विनाशः क्षयं करोति ॥१६॥

---

चन्द्रार्कौ चेत्समो वा जनयति नियतं शत्रुपक्षस्य वृद्धिं
भौमश्चार्कात्मजो वा जनयति सततं त करेभ्यो भयञ्च ॥

भाग्यभावस्थं ग्रहफलम्

शुक्रोऽतिसौख्यं नवमो बुधश्च जीवो जयः श्रीधनधान्यलाभम् ।
चन्द्रार्कसौरा नवमाः सभौमाः कुर्वन्त्यनेकान् पुरुषस्य दोषान् ॥

कर्मभावस्थग्रहफलम्

कर्मस्थानस्थितोऽर्कः प्रचुरजयकरः पुष्टिदः शीतरश्मि–
जीवः सङ्ग्रामकाले भवति शुभकरः सर्वकार्यप्रदो ज्ञः ।
शुक्रः साम्राज्यलक्ष्मीं वितरति च महीनन्दनः प्राज्यकीर्तिं
राहुर्वैरापतुत्तिं जनयति सततं दीर्घरोगं तथार्किः ॥

लाभभावस्थग्रहफलम्

शशिबुधगुरुशुक्राः सूर्यराह्वर्किभौमा
व्रजति हि नरनाथः क्षिप्रमेकादशस्थाः ।
द्रुतमिह रिपुवर्गं घ्नन्ति नूनं प्रयातु–
र्विचरति गजराजो युद्धमध्यस्थितो वा ॥

व्ययभावस्थग्रहफलम्

क्षितिजरविसुतार्काः सैंहिकेयो नराणां
जनयति रजनीशः श्रेष्ठभृत्येषु भेदम् ।



## अथ बुधस्य–

रविशशिभौमस्थानेष्वनर्थदो लग्नगः शशाङ्क सुतः ।
भृगुसुतमन्दानामभिषेक जयार्थदीप्तिकरः ॥२०॥

... ... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ...

### अथैवं विधोऽपि गुणान्वितो यादृशो ग्रहो लग्ने नदेय स्तमाह–

योऽस्तं यात्युदयं वा दक्षिणभागस्थितः सहस्रांशो ।
कुरुते ग्रहः सलग्नं योधधनाङ्गक्षयं यातुः ॥२१॥

यो ग्रहः प्रागुक्तगुणान्वितः सहस्रांशोरादित्यस्य दक्षिणभागस्थितः रवे र्दक्षिणस्यां दिशि अस्तमयं उदयं वा करोति स तथा भूतो ग्रहो लग्ने यात्रालग्ने स्थितो यातुर्गच्छतः योधधनाङ्गक्षयं कुरुते । अत्रादित्यक्रान्ति कृत्वा ततोऽन्येषां ग्रहाणां क्रान्ति शरसंस्कृतां कारयेत् । तत्र ग्रहार्कयोर्यस्योत्तराक्रान्तिः स उत्तरदिग्भागस्थः, यस्य दक्षिणा स दक्षिणभागस्थः, अथ यदि द्वयोरप्युत्तरस्थयो र्यस्योनाक्रान्तिः स दक्षिणभागस्थः, यस्याऽधिका सोत्तरभागस्थद्वयोरपि दक्षिणयोर्यस्योना स उत्तरभागस्थः यस्याऽधिका स दक्षिणभागस्थः, अथ यदि ग्रहार्कौ तुल्यक्रान्ती भवतः स ग्रहो रविबिम्ब मध्यस्थो ज्ञेयः ॥२१॥

### अथात्रैव लग्नगतस्य विशेषफलमाह–

तिग्मकरस्योत्तरतो दर्शनमायाति यो ग्रहोऽस्तं वा ।
मध्ये तु वामलग्ने यातुः कुसुमाम्बराशनागमदः ॥२२॥

---

रिपुजय धननाशं भृत्यनाशं च कुर्यु–
र्यदि बुधगुरुशुक्रा द्वादशस्था भवन्ति ॥
इति बादरायणीययात्रायां भावफलानि एवं सम्यग् यात्रालग्नं दत्त्वा यात्रा कारणीयेति तात्पर्यार्थः ।

यो ग्रहः तिग्मकरस्योत्तरतः उत्तरस्यां दिशि दर्शनं उदयं अस्तमयं अदर्शनं वा आयाति स यातुः गच्छतः कुसुमानि पुष्पाणि अम्बराणि वस्त्राणि अशनं भोजनं एषां गमो लाभः स्यात् ॥२२॥

## अथ ग्रहस्य विकृतिलक्षणं तस्य लग्नगतस्य दोषश्चाह–

नियतगतिद्युतिवर्णप्रमाणवैलक्ष्यमुच्यते विकृतिः ।
विकृतिस्थो लग्नगतो नशुभः शुभदः स्वभावस्थः ॥२२॥

नियता अविकला गतिर्गमनं भुक्तिरित्यर्थः । वक्रानुवक्रविकलमन्दतरमन्देतरा इत्यर्थः । द्युति दीप्तिकान्तिर्वर्णः सितरक्तपीतकृष्णादि बिम्बं परिमाणं एषां वैलक्ष्यं अन्यादृशत्वं विकृतिर्विकार इत्युच्यते । एवं विकृतिस्थो ग्रहः पूर्वोक्त गुणयुक्तोऽपि लग्नगतो नशुभोऽनिष्ट-फलदः ॥ स्वभावस्थः प्रकृतिस्थो लग्नगतः, शुभद इति ॥२३॥

## अथान्यलग्नगतस्य वर्ज्यत्वमाह–
## तत्रादौ ग्रहजातर्क्षाण्याह

याम्ये तमो ज्ञः श्रवणे रविस्तु
जातो विशाखासु सितश्च पुष्ये ।
पौष्णस्य भाग्योरगकृत्तिकासु
मन्दारवागीशशिखीन्दु जन्म ॥२४॥

याम्ये भरण्यां तमो राहुर्जातः, ज्ञो बुधः श्रवणे, रविरादित्यो विशाखासु, सितः शुक्रः पुष्ये, पौष्णाप्यभाग्योरगकृत्तिकासु यथा संख्यं मन्दारवागीशशिखीन्दूनां जन्म, रेवत्यां मन्दः शनिः आप्ये पूर्वाषाढायां आरो भौमः, भाग्ये उत्तरफाल्गुन्यां वागीशो गुरुः, उरगः सर्पः तन्नक्षत्रमश्लेषा तस्यां शिखी केतुः, कृत्तिकासु इन्दुश्चन्द्रः ॥२४॥

## अथैतेषां प्रयोजनमाह–

त्रिविधोत्पाताभिहतं बलवद्ग्रहपीडितश्च यस्यर्क्षम् ।



यात्रायां लग्नगतः स वर्जनीयोऽनुकूलोऽपि ॥२५॥

यस्य ग्रहस्य नक्षत्रं त्रिविधोत्पातेन दिव्यान्तरिक्षभौमेनाऽभिहतं पीडितं । त्रिविधोत्पाते, ग्रहर्क्षादिविकारो दिव्योत्पातः, उल्कानिर्घातपवनपरिवेषगन्धर्वपुरपुरन्दरचापरजोनीहारा अन्तरीक्षाः । भूकम्पादि चरस्थिरविपर्ययो भौमः । एवं त्रिविधोत्पातमभिहितं, तथा च बलवता पापेन सौम्येन वा ग्रहेण वा पीडितं योगताराभेदेन मध्यमगमनेन दक्षिणदिग्गमनेन वा यस्य ग्रहस्य नक्षत्रं स ग्रहोऽनुकूलोऽपि पूर्वोक्तगुणयुक्तोऽपि यात्रायां वर्जनीयः रक्षक-वर्द्धक तानत्वेऽपि स्थितः परिहर्तव्य इति ॥२५॥

## अधुना यादृशोग्रहो लग्ने देयस्तादृगाह–

पाकेश्वराधिमित्रे तद्वर्गे वा विलग्नगे यातुः ।
स्वयमरिरुपैति वश्यं प्रणतशिरा सार्वभौमोऽपि ॥२६॥

पाकेश्वरो वर्तमानदशाधिपः तस्य यो ग्रहोऽधिमित्रं तद्ग्रहे लग्नस्थे अथवा तद्वर्गगेऽपि लग्ने यात्रालग्नस्थे यातुर्विजिगीषोररि शत्रुः सार्वभौमोऽपि अखण्डभूम्यधिपतिरपि प्रणतशिर अवनत-मूर्द्धा स्वयमेवात्मना वश्यं वश्यभावं उपैति गच्छति ॥२६॥

## अधुना वर्ज्यगृह आह–

पाकेश्वरारिलग्ने वर्गे वा तस्य भूपतिर्गच्छन् ।
विनिहतशूरनराश्वः शत्रोरायाति वश्यत्वम् ॥२७॥

पाकेश्वरो वर्तमानदशापतिः तस्य योऽरिः शत्रुः स यदि यात्रालग्ने यात्रालग्नस्थे तथा तद्वर्गे लग्नगते व्रजन् भूपतिः विनिहतशूरनराश्वः विनिहताः व्यापादिता; शूरा नरा अश्वास्तुरगाः यस्य स तथा भूतः शत्रो वश्यत्वं विधेयत्वं आयाति गच्छति ॥२७॥

## अधुना लग्नादीनां द्वादशानां भावानां सञ्ज्ञाऽऽह–

मूर्त्यर्थयोधबान्धवमन्त्ररिपुमार्गनैधनमनांसि ।

कर्मागमसचिवा श्चोदयतः कीर्तिता भावाः ॥ २८ ॥

उदयं लग्नं तदादितः अमीभावाः कीर्तिता उक्ताः, तद्यथा–येन लग्नेन यात्रा दीयते तल्लग्नं यातुर्मूर्तिः शरीरं, द्वितीयोऽर्थो धनम्, तृतीयं योधा भृत्याः, चतुर्थं वाह्यं गजाश्वादि, तथा पञ्चमं मन्त्रः, स च द्विविधो नीति शास्त्रोदित आथर्वणश्च, षष्ठं रिपुः शत्रुः, सप्तमं मार्गः पन्था, अष्टमं नैधनं मरणं, नवमं मनः चित्तं, दशमं कर्म यत्किञ्चित् क्रियते तत्, एकादशं आगमो धनोत्पत्तिस्थानं, द्वादशं शचिवाः मन्त्रिणः । उक्तञ्च । देहः कोशो योधावाह्योमन्त्रःशत्रुर्मार्गोत्थायुश्चित्तं कर्मप्राप्तिर्मन्त्री प्राग्लग्नगाद्भावाश्चिन्त्या इति ॥२८॥

## अथान्येषामपि भावानां संज्ञा तेषां प्रागुक्तानां च शुभाशुभत्वमाह–

यात्राफलं चतुर्थे जामित्रे शत्रवः प्रमादश्च ।
शुभपापग्रहयोगाच्छुभाऽशुभं विनिर्दिशेदेषाम् ॥२९॥

यात्रायाः फलं यत्कर्मणमुद्यमः तच्चतुर्थे स्थाने जामित्रे शत्रवो रिपवो विचार्याः कोशेन बलेन समृद्ध्यादिना च तथा प्रमादः स्वकीयानामनवधानता विचार्या । तत्कथमिति तदर्थमाह शुभपापग्रहयोगादिति यस्य भावस्य शुभग्रहैर्योग स्तस्य शुभं निर्दिशेत्, योगशब्दस्योपलक्षणत्वाच्छुभदर्शनादपि,एवं पापग्रहयोगदर्शनादशुभं वाच्यं एवं चतुर्थे शुभयुते दृष्टे यात्रासफल सप्तमे शुभयुतदृष्टे शत्रवो न भवन्ति, प्रमादश्च न भवति । पापयोगदर्शनात् व्यत्ययमिति । एवं तेन लग्नस्थे शुभग्रहेयातुर्देहसुखं पापे शरीरोपतापः, द्वितीयस्थे शुभग्रहे यातुरर्थोपचयः पापे धननाशः, एवं तृतीये शुभग्रहे योधवृद्धिः चतुर्थे शुभग्रहे वाहन वृद्धिर्यात्रा वृद्धिश्च.पञ्चमे मन्त्र समृद्धिः,षष्ठे शत्रुनाशः, सप्तमे मार्ग शोभनं अप्रमादः, अष्टमे आयुषोवृद्धिः, नवमे सुस्थितत्वं दशमे कर्मणां सिद्धिः, एकादशे धनप्राप्तिः द्वादशे मन्त्रवृद्धिः तृतीयषष्ठैकादशस्थानानि वर्जयित्वाऽन्यत्र भावे स्थिताः पापाः उक्तविपर्ययफलदाः । दशमे सूर्यभौमौ शोभनौ न सौरः तेन तृतीये पापा योधवृद्धिकराः षष्ठे शत्रुनाशकराः दशमे सूर्यभौमौ कर्मणां वृद्धिकरौ न च सौरः एकादशे सर्व एव प्राप्तिप्रदाः, चन्द्रस्याष्टमवर्ज्यं शुक्लपक्षे शुभग्रहवत्फलदातृत्वं, कृष्णे पापवत् शुक्रस्य सप्तमे विपर्ययः ।



उक्तञ्च—

त्रिलाभवर्ज्यं रविसौरभौमा
निघ्नन्ति नोकर्मणि सूर्यभौमौ ।
पुष्णन्ति सौम्या रिपुराशि वर्ज्य-
मस्तं भृगु मृत्यु विलग्नमिन्दुः ॥इति॥

अत्र सर्वभावेषु सौम्यग्रहदृष्टिः शुभाः, न पापानां मिश्रयोगदर्शनान्मिश्रं फलं वाच्यं, फलाधिकाश्चेति, तदुभयोः शुभपापयो र्यस्य बलाधिक्यं तदधिकं मिश्रफलेऽपि वाच्यम् ॥२९॥

## अथ सत्याचार्यमते यादृशश्चन्द्रो यात्रायां शस्त तादृशमाह–

सत्याचार्यस्य मते विबलः शस्तः शशी प्रयाणे तु ।
दिग्वीर्याद्यो नः केवलमिन्दुः शस्त इति जगुरन्ये ॥३०॥

सत्याचार्यस्यैवं मतं यथा प्रयाणे तु यात्रा समये चन्द्रो विबलो बलचतुष्टयरहितोऽपि शस्तः शुभः ।

तथा च सत्यः—

सर्वे बलिनः सौम्याः यात्रायां शत्रुविजयलाभंकराः ।
दिक्स्थानकालचेष्टाबलैर्युक्तः शशी धन्यः ॥

अत्रैव मतान्तरमाह । दिग्वीर्यो न इति अन्ये बादरायणप्रभृतयः एवं जगुः उक्तवन्तः, यथा चन्द्रो यात्रायां केबलं दिग्वीर्यो नो दिग्वलरहितोऽन्यवलयुक्तश्च शस्तः शुभः लग्नाच्चतुर्थे न कार्य इत्यर्थः ।

तथा च बादरायणः–

सौम्या बलिन शुभदाः पापा लाभतृनीयषष्ठगताः ।
दिग्बलरहित श्चन्द्रः परिशेषबलैर्युतः शस्तः ॥ इति ॥३०॥

अधुना लग्नगतस्य ग्रहस्य यत्फलमुक्तं तदेव सफलमतिदिशन्नाह–

यदेव यस्योदयसंस्थितस्य
फलं प्रयाणे सदसत्प्रदिष्टम् ।
तदेव तस्याऽखिलमह्नि यातु–
र्ग्रहस्य वर्गे च विलग्नसंस्थे ॥३१॥

यस्य ग्रहस्योदयसंस्थितस्य प्राग्लग्नगतस्य प्रयाणे यात्रायां यत्फलं सदसच्छुभाशुभं वा प्रदिष्टं उक्तम् । तथा च "सन्तापशोकगदविघ्नकृदुद्गमेऽर्के" इत्यादिकं तदेव तस्य ग्रहस्याऽह्नि दिनेऽखिलं निःशेषं यातुर्वक्तव्यं न केवलं यावत्तस्य ग्रहस्य वर्गेऽपि विलग्नसंस्थेऽपि प्राग्लग्नगतेऽपि तदेव फलं वाच्यमित्यर्थः ॥३१॥

वराहमिहिराचार्यकृतेऽस्मिन्मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यच्येऽश्वमेधीययात्राविवृतौ उत्सर्गाऽपवादाऽध्याय एकादशः ॥११॥

—०—



# अथ व्यतिपाताऽध्यायो व्याख्यायते

## तत्रादावेव व्यतिपातदोषमाह–

एष्यो धनं क्षपयती व्यतिपातयोगे
मृत्युं ददाति न चिरादपवर्तमानः ।
सन्तापशोकगदविघ्नभयान्यतीत–
स्तस्मादिनत्रयमपि प्रजहीत विद्वान् ॥१॥

व्यतिपाताख्यो योगो द्विविधः । लाटाख्यो वैधृताख्यश्च ।-स च चन्द्रार्क क्रान्ति गतिकृतः तस्य च भावाऽभावौ गणितस्कन्धोक्तौ, इह तु वादार्थमेवाऽभिधीयते, स च व्यतिपाताख्यो योगः, एष्य आगामी सर्वकर्मसु प्रारम्भे सति धनं वित्तं क्षपयति नाशयति, तथा वर्तमानः सम्प्रतिकालं जातो न चिराच्छीघ्रमेव मृत्युं मरणं ददाति, तथाऽतीतो गतः सन्तापः शोकः सन्तापोद्वेगजनकादि, शोकः स्वकीयजनमरणोद्भूतः, गदो रोगं, विघ्नं कार्यनाशः, भयं परकृतोपद्रवात्त्रासं ददाति । तस्माद्धेतो विद्वान् पण्डितः दिनत्रयं परित्यजेत्, दिनत्रये विवाहयात्रोपनयनवेश्मादि न किञ्चित्कर्तव्यमिति एकमतम् ॥१॥

## अथ मतान्तरेण व्यतिपातयोगदूषणमाह–

अतीतमेष्यत्तदहश्च केचिद्दिनत्रयं दूषयीति शास्त्रम् ।
नसंहिताकारकृतांत्रिकानामेव प्रकारो व्यतिपातयोगः ॥२॥

अतीतं अतिक्रान्तं अहर्दिनं, एष्यत् आगामिदिनं, तदहो वर्तमान दिनं, एतद्दिनत्रयं व्यतिपातयोगो दूषयति, इति केचित् ब्रह्मशगुप्तप्रभृतयो वदन्ति ।

तथा च ब्रह्मशण्डः-

एष्यो वित्तविनाशं मृत्युं ददाति वर्तमानमपि ।
सन्तापयत्यतीतमतो दिनत्रयं दूषयति पातः ॥

अन्ये एवं वदन्ति, यथा अतीतं दिनत्रयं तदूर्ध्वं च दिनत्रयं तद्दिनं चेति दिनसप्तकं व्यतिपातो दूषयति ॥ ॥

अतएवोक्तं आचार्येण-

व्यतिपातहतं दिनत्रयं व्यतिपातेन समञ्च वैधृतम् ।
यदपि स्फुटपातदर्शनं द्विगुणं तद्यदि वा न निश्चितम् ॥इति॥

एतदशास्त्रं शास्त्रविरुद्धं अनागम इत्यर्थः । यः एवं प्रकारो व्यतिपात योगः स संहिताविदां नाभिमतः, नापि हौरिकानां होराविदां, न च तान्त्रिकानां सिद्धान्तविदां, न केषांचिदभिमत इत्यर्थः । तस्माद्यदुक्तं दिनत्रयं दिनसप्तकं व्यतिपातयोगो दूषयति, एतत्सर्वं अशास्त्रं शास्त्रविरुद्धं अनागम इत्यर्थः । य एवं प्रकारो व्यतिपातदोषः कथयन्ति ते गणिताऽनभिज्ञाः ॥२॥

## अतः सिद्धान्तः

चन्द्रार्कबिम्बान्तरमेक मार्गा-
द्यावत्परिक्रामति सैव कालः ।
पातो यदा स्यादथवा भविष्य-
त्तावत्फलं तस्य कुतोऽस्त्यभावात् ॥३॥

मार्गोऽत्र द्विःप्रकारः मेष तुलादौ, मकर कर्कादौ च तत्र च मेषादावुत्तरगोलः, तुलादौ दक्षिणः । तथा च मकरादावुत्तरमयनं कर्क्यादौ दक्षिणमिति । तत्रार्कचन्द्रयोर्भिन्नायनयोरेकगोलस्थयोर्लाटो भवति, लाटोऽत्र व्यतिपातः । तथैकायनस्थयोर्भिन्नगोलयो रर्कचन्द्रयो वैधृतो भवति । तत्र चन्द्रः शशी गगने आकाशेऽर्कबिम्बान्तरं सूर्यमण्डलमध्यं स्वमण्डलप्रमाणैकमार्गात्पूर्वोक्तात् यावत्परिक्रामति यावत् कालेन परित्यजति ग्रहणस्थित्यर्द्धवत् । एतावानेव व्यतिपातवैधृतयोः समयः । अनेनैतदुक्तं भवति यावदर्कचन्द्रयोः स्वकान्त्योः साम्यमुत्पद्यते



तावत्काले एव व्यतिपातो वैधृतो वा दुष्टः, स कालो यदा यस्मिन् काले तावत्फलं तत्प्रमाणफलं पातद्वयस्य कुतः कस्मात् अस्ति विद्यते अभावादविद्यमानत्वाद्धेतोः, यतोऽतीते काले क्रान्त्योः साम्यमतीतं भवति, तस्मिन् काले कथं दुष्टं अतः क्रान्तिसाम्यकाल एव दुष्टः । अतः सूर्याचन्द्रमसोः क्रान्त्योर्यत्र कलादिसाम्यं तत्पात मध्यकालः, तस्मात् प्राक् क्रान्त्यंशसाम्यावधि तत्स्पर्शकालः पश्चादपि तादृक् तन्मोक्षकालोऽतो मध्यकालो वर्तमानकालः तस्मादतीतं स्पर्शकालः एष्यन्मोक्षकालः तावानेव कालोऽतिदुष्ट तत्पूर्वापरयोर्न कोऽपि दोषः ।

तथा चाऽऽर्यभटः-

चक्रार्द्धेऽर्कशशीयुतौ भिन्नायनयो स्वक्रान्तिसमत्वे ।
चक्रे वैधृतमेकायनस्थयोः क्रान्तिजीवयोः साम्ये ॥इत्यादि॥३॥

## अधुना भगवत्पराशरेणोक्तं बृहद्व्यतिपाताख्यमाह-

भवनद्वयमेकेशश्चन्द्रार्कौ तिष्ठतः समाक्रम्य ।
सिंहकुलीरे च तथा स्फुटगणिते स व्यतीपातः ॥४॥

भवनद्वयं राशिद्वयं एकेश एकाधिपतिकं चन्द्रार्कौ समाक्रम्य गृहीत्वा तिष्ठतः, तथा एको मेषे द्वितीयो वृश्चिके, एको वृषे द्वितीयः तुलायां, एको धनुषि द्वितीयो मीने, एको मकरे द्वितीयः कुम्भे, एको मिथुनेऽपरः कन्यायां, सिंह कुलीरे च एकः सिंहे द्वितीयः, कर्कटे स्थितः तथा स्फुटगणिते स्पष्टगणितविषये स व्यतिपातः पातकालः इति पराशरादीनामभिमतः ।

तथा च भगवान् पराशरः—

क्रमोत्क्रमाभ्यां पितृदैवतादि
तिष्यादि तुल्यौ यदि चन्द्रसूर्यौ ।
गतौ भुजगेन्द्रपरिग्रहे वा
तदा व्यतिपातदिनं तदाहुः ॥इति॥

एतद् व्याख्यायते पितृदैवतं मघा मघादि नक्षत्रत्रयोदशकं श्रवणान्तं क्रमेण तथा तिष्यादि नक्षत्रत्रयोदशकं धनिष्ठान्तं उत्क्रमेण गतयो श्चन्द्रार्कयोः तत्र तावर्कचन्द्रौ भवत स्तदा तद् व्यतिपातदिनं अत एवाऽऽचार्यैर्बृहद्व्यतिपाताख्यस्य सप्तराशयः षोडशभागाश्चत्वारिंशल्लिप्ता ध्रुवकोऽभिहितः ६।१६।४०।

उक्तञ्च

राशिषट्कं ध्रुवो लाटे बृहतो राशिसप्तकम् ।
भागाः षोडशलिप्तश्च चत्वारिंशत ध्रुवो भवेत् ॥७।१६।४०
चक्रं वैधृतकं विन्द्या चन्द्रसूर्ययुतौ सदा ॥इति॥

अथ यथश्चैको मघायां द्वितीयो विष्ये यतस्तयोः स्फुटयो योगो बृहद् व्यतिपातः ध्रुवकतुल्यो भवति, एवं सर्वत्र परिकल्पनीयं तथा पूर्वफल्गुनी पुनर्वस्वोः, उत्तरफाल्गुन्यार्द्रयोः, हस्त मृगयोः, चित्रारोहिण्योः, स्वातिकृत्तिकयोः, विशाखाभरण्योः, अनुराधाऽश्विन्योः, ज्येष्ठारेवत्योः, मूलोत्तरभाद्रपदयोः, पूर्वाषाढापूर्वभाद्रयोः, उत्तराषाढाशतभिषजोः, श्रवणधनिष्ठयोरिति । भुजगेन्द्रपरिग्रहोऽश्लेषा तत्र गतो तन्मध्ये 'यदाऽर्कचन्द्रौ भवतस्तदा व्यतिपातदिनं । एवं अर्कचन्द्रयोः अश्लेषागतयोः स्फुटयो योगो यदा बृहद्व्यतिपाततुल्यो भवति तदा व्यतिपातदिनमाहुः कथयन्ति । एतदेवानयो स्तुल्यमिति ॥४॥

## एतदेव पुनरन्यतमेनाऽऽह–

अयमेवाऽर्थोऽभिहितः शशिभान्वोरेकनाथयोर्द्विभयोः ।
षड्विंशे षड्विंशे व्यतिपातः पतति नक्षत्रे ॥६॥

अन्यैरप्याचार्यैर्देवलप्रभृतिभि रयमेवाऽर्थः पूर्वोक्त एव व्यतिपात लक्षणोऽभिहित उक्तः, शशिभान्वोः चन्द्रार्कयोः एकनाथभद्विस्थितयोः एकोग्रहो नाथः स्वामी यस्मिन ते नक्षत्रद्वये प्राक् प्रदर्शिते राशिद्वये वा तत्र गतयो र्व्यवस्थितयोः यथैको मेषेऽपरो वृश्चिके इत्यादि प्रागुक्तात् क्रमोत्क्रमाभ्यामिति ।

तथा च देवलः–

एकस्येह द्वयेऽर्केन्द्वोः गृहस्य यदि तिष्ठतः ।
तदा भवेत् व्यतिपातः सर्वकर्मस्वशोभनः ॥इति॥

एवं कृते भवतीत्याह, "षड्विंशे षड्विंशे इति" एवं स्फुटगणितं कृत्वा षड्विंशे षड्विंशे नक्षत्रे पुनः पुनः पतति । यथा अश्विन्यां पतति एकवारं पुनरुत्तरभाद्रपदायामिति । तथा चोक्तम्–

लाटो बृहच्चतुर्थर्क्षे वैधृतं दशमे ततः ।
तस्मा च्चतुर्दशे लाटमृक्ष षड्विंशके पतेत् ॥ ५ ॥ इति ॥



## अधुना व्यतिपातदिने व्यापारनिषेधस्य कारणमाह–

रविचन्द्रौ किल तदहनि परस्परं प्रोत्तपितौ निरीक्षेते ।
क्रोधनयनाऽनलभवो दृक्संपर्कात्तयो र्भवति ॥६॥

किलेत्यागमसूचने, तदहनि व्यतिपातदिने रविचन्द्रौ सूर्येन्दू परस्परं अन्योऽन्यं प्रोत्तपितौ प्रकर्षेण उत्तपितौ क्रुद्धौ निरीक्षेते पश्यतः, तयोर्दृक्सम्पर्कात् दृग्योगात् क्रोधनयनानलभवः लोचनाग्निसमुत्थितो भवति उत्पद्यते ।

कीदृशमुत्पद्यते तमाह–

रौद्रो दीर्घः कृष्णः शङ्कुश्रवणो विदारितास्यश्च ।
स्थूलनसो लम्बभ्रूः केकरदृष्टिः कपिलकेशः ॥

रौद्रो भीषणो भयानकरूपः दीर्घ अत्यायामः कृष्णः सितेतरवर्णः शङ्कुकर्णः कीलकाकारकर्णः विदारितास्य उद्घाटितमुखः स्थूलनसो बृहन्नासिकः लम्बभ्रूः पतितललाटचर्मा केकरदृष्टिः काचराक्षः कपिलकेशो बभ्रुकचः ॥ ६ ॥

## एवं विध उत्पन्नः किं करोतीत्याह–

पतितः पतितस्तस्मिन् भूयो भूयोः स भवत्येषः ।
सर्वारम्भेष्वशुभो व्यतिपातः कीर्तितः केचित् ॥७॥

पतितः पतितः आगतः आगतः तस्मिन नक्षत्रे भूयो भूयः पुनः पुनः व्यतिपातः संभवति उत्पद्यते । अतः सर्वारम्भेष्वशुभोऽनिष्टः व्यतिपातो व्यतिपातसंज्ञा बृहती आख्या यस्य स कैश्चित् आचार्यैः पराशरादिभिः कीर्तित उक्तः ।

तथाशास्त्रान्तरे पठ्यते–

तस्मिन् काले तु तौ क्रुद्धावन्योऽन्यं समपेक्षतः ।
क्रोधनेत्राग्निसंभूतो व्यतिपातश्च जायते ॥
शङ्कुकर्णः केकराक्षो लम्बभ्रूः स्थूलनासिकः ।
रौद्रो दीर्घः कृष्णवर्णः पिङ्गकेशो महामुखः ॥

क्तितः पतिः तस्मिन् भूयो भूयोऽभिजायते ।
सर्वारम्भेष्वशुभदो व्यतिपातः प्रकीर्तितः ॥ इति ॥७॥

## परस्य मतमुपन्यस्याऽधुनैतदेव दूषयितुमाह—

परस्परं रविशशिनोः निरीक्षतो
यदा तदा गुरुबुधभेषु केवलम् ।
अथैक दिग्भवति हि नित्यमेव वा
निरन्तरं भवनमपास्य शास्त्रतः ॥८॥

यदि परस्परं अन्योऽन्यं रविशशिनोः सूर्याचन्द्रमसोः निरीक्षतो वीक्षणयोर्व्यतिपात संभवस्तदा केवलं अद्वितीयं गुरुबुधभेषु जीवबुध–क्षेत्रेष्वेव संभवति गुरुभे धन्विमीनौ बुधभे कन्या मिथुने एवमेव परस्परनिरीक्षणं भवति चतुर्थदशमत्वात्, नान्येषां षट्काष्टकत्वात् द्विर्द्वादशत्वात्, तस्मात् परस्परनिरीक्षणाद्यदुक्तं तन्निराकृतम् । अभ्युपगम्यापि पक्षान्तरमाह । अथैकदिग्गते अथवा नित्यं सर्वकालं एकस्य दृष्ट्या व्यतिपातो भवति, तन्नैवं यतो निरन्तरं भवनमेकाधिपतिकं राशिद्वयं निरन्तरं यत्र नास्ति,मकरकुम्भौ तावपास्य वर्जयित्वा यतस्तत्राप्येक दृकत्वन्तु न संभवति दर्शनाभावात् , तस्मान्निरन्तरं भवनं वर्जयित्वाऽन्यत्र संभवति एकदृकत्वं, इति वीक्षणमत्र न कारणम, शास्त्रत इति । शास्त्रत्क्रमोत्क्रमाभ्यामिति स्मारयति, अन्ये पुनः पठ्यन्ते क्वचिदिति, यथैकस्यां दिशि चन्द्रार्कौ यदा भवत स्तदा व्यतिपातसंभवः, तत्रादौ मेषादिराशिषट्कमुत्तरादिक्, तुलादौ दक्षिणा, एवं गुरुबुधभेष्वेव केवलमेकदिक्त्वं सम्भवति, नान्यत्र यतो मिथुनकन्ये उत्तरगोले, धन्विमीनौ दक्षिणगोलस्थौ, एकाऽधिपतिके राशिद्वयेऽपि सति मेषवृश्चिकयोर्नैकदिक्त्वं, वृषतुलयोरपि पारिशेष्याद्गुरुबुधयो र्भेष्वेव संभवति । मकरकुम्भयोरपि न सम्भवति, तदर्थमुक्तं "निरन्तरं भवनमपास्य शास्त्रत इति," तयो सत्येकदिक्त्वनिराकरणं, एतयोरेक दिक्त्वं, तस्मात् समानदिक्कमपि न कारणं एवं दिग्लक्षणञ्च दूषितम् ॥ ८ ॥

## अथैकनाथ द्विभयोरपि रविशशिनो र्व्यतिपातसम्भव इति यैरुक्तं तान्प्रति दूषणमाह—

चन्द्रेऽजपर्यन्त विलिप्तिकास्थे
भानुर्यदा वृश्चिकमभ्युपैति ।



काल स्तदैकेश मतेन कस्यां
नक्षत्रजो राशिसमुद्भवो वा ॥ ९ ॥

चन्द्रे शशिनि अजं मेषपर्यन्तलिप्तिकास्थे अन्तर्विलिप्तिकां वर्तमाने भानुः सूर्यो यदा यस्मिन काले वृश्चिकमभ्युपैति वृश्चिकस्थो भवति, तदा स कालो व्यतिपातसमयः । एकेशमतेन यैरेतदुक्तं "शशिभान्वोरेकनाथभद्विगयो व्यतिपात इति" । तदेकेशमतेन कः कालः स्याद्भवेत्, दुष्टत्वेन गृह्यतां, नक्षत्रजो नक्षत्राश्रयजो राशिसमुद्भवो राश्याश्रयो वा कः कालो दुष्ट इति । यत श्चन्द्रे वृषोपगते एकेशभस्थिति र्न भवति, रविशशिनो व्यतिपातकालस्तु निराश्रय आचार्यैरुक्तः, तस्मा न्न राश्याश्रयो नापि नक्षत्राश्रय इति, अनेनैतत् प्रदर्शितं भवति, यथा चन्द्र मेषान्तस्थे सूर्ये वृश्चिकगते व्यतिपातसंभवे सति मध्यकालस्याऽभावात् कथं दिनत्रयं दुष्टमिति ॥ ९ ॥

## पुनरप्येतदेवाह—

राशिद्वयैक्ये गमने न दोषो
धिष्ण्यस्य नास्त्यन्यगृहाश्रयत्वात् ।
नैकार्गलस्थेषु न राशिदोषः
स्याद्व्यतीत्येव मतिप्रसङ्गः ॥ १० ॥

यस्मिन नक्षत्रे राशिद्वयस्यैक्यमनुप्रवेशस्तस्मिन राशि द्वयैक्ये नक्षत्रे गमनं पतनं व्यतिपातस्य तेन गमनेनैक्यराशेर्दोषेण दूषणे न धिष्ण्यस्य नक्षत्रस्य दोषो नास्ति न विद्यते, कुतः शून्यगृहाश्रयत्वात् अपरमर्द्धं मिथुनस्थं तत्तस्य न दोषो गृहाश्रितत्वादिति, तस्मात्कथं दिनत्रयं दूष्यति । नैकार्गलस्थेष्विति, भेषु राशिषु एकस्थानस्थितेषु राशिदोषो न स्यात् न भवेत् । यथाऽश्विन्यामेव व्यतिपातः पतितोऽश्विनी च मेषाश्रिता तदाऽऽश्रयत्वान्मेषस्य दोषो न भवेत् । यद्यनेन हेतुना दिनत्रयं दुष्टं भवति यावत्तन्नक्षत्रं तावदेव दुष्यति, चेत् शब्दोऽत्राऽऽहार्य, यदुक्तं प्रागतीतमेष्यं तदहश्च केचित् दिनत्रयं दूषयतीति, यावद्दिननवकं दुष्यति अतिशयार्थं विवर्तते, यथाऽपि सप्ताहादधिकं नवाहमपि दुष्यतीत्यर्थः ॥ १० ॥

## तथा तमेवाऽति प्रसङ्गं स्पष्टीकर्तुमाह–

नक्षत्रदोषात्किल राशिदोषो
भराशिदोषेण च दौष्ट्यमेति ।
यद्येवमन्योऽन्यसमाश्रितत्वा–
द्धानां नवानामपि दोषसङ्गः ॥ ११ ॥

किल शब्दोऽत्र सम्भावनायाम् नक्षत्रस्य दोषात् राशिदोषो राशिर्यदि दुष्यति, तथा भं नक्षत्रं च राशिदोषेण राशिदुष्टत्वेन यदि दौष्ट्यं दुष्टतामेति गच्छति यदि चेदेवं स्यात्तदा अन्योऽन्यं परस्परसमाश्रितत्वात्, समाश्रयणाद्धेतोर्नवानां भानां नक्षत्राणां दोषसङ्गो भवेत् । अश्विन्याद्यश्लेषान्तानि नक्षत्राणि राशिसंबन्धेन स्थितान्येव ॥११॥

## अधुना एतदेव स्पष्टीकर्तुमाह–

मेषस्य दोषा द्बहुला प्रदुष्टा
वृषोऽपि दुष्टो बहुलाश्रयेण ।
तेनाऽपि सौम्यं मिथुनश्च तेन
पुनर्वसुस्तेन च कर्कटेऽपि ॥ १२ ॥

मेषस्य दोषात् बहुला कृत्तिका प्रदुष्टा तथा बहुलाश्रयेण कृत्तिकाश्रयेण वृषोऽपि दुष्टः। तेनाऽपि वृषेण सौम्यं मृगशिरो दुष्टः तेन मृगशिरसा मिथुनो दुष्टः तेन पुनर्वसुना कर्कटोऽपि दुष्टः एवमन्योऽन्यसमाश्रयेण नवानां नक्षत्राणां दोषाशक्तिर्भवति, अतो न दिनत्रयस्य नापि दिन सप्तकस्येति ॥१२॥

## अतोऽत्र सिद्धान्तीकर्तुमाह–

नक्षत्रदोषात्सकलस्यराशेर्न दूषणं भस्य न राशिना च ।
ऋक्षेऽपि चन्द्रार्ककृतः सदोषस्तन्मात्रमेवेति मतं बहूनाम् ॥१३॥

तस्मादेकस्य नक्षत्रस्य दोषात्सकलराशिर्दुष्टो न भवति, भस्य नक्षत्रस्यापि अपि शब्दाद्राशावपि नक्षत्रराशौ वा यस्मिन् पतति तत्र सयोगः, व्यतिपाताख्य चन्द्रार्ककृतः चन्द्रार्काभ्यामुत्पादितः तन्मात्रं तावत्परिमाणमेव यावत्तयोरपक्रमः स एव दुष्ट इत्याचार्याणां बहुनां मतमेतत् । अत एवाऽह ब्रह्मगुप्तः–



रविबिम्बमेकमार्गाच्छशिबिम्बाऽपक्रमो भवति यावत् ।
तावत्फलं तदुक्तं तदभावा तत्फलाभावः ॥ इति ॥१३॥

## अधुनैव दृढीकर्तुमाह–

विष्टेर्न दोषेण बवस्य दोषः कौजेन बौधस्य यथा नचाह ।
अन्यां स्तथा न व्यतिपातयोगः कालान् हिनस्तीति गतागमिष्यत् ॥ १४ ॥

विष्टेः करणस्य दोषेण दुष्टत्वात् बवस्य न दोषः कौजेन भौमवारेण बौधस्याह्नो बुधदिनस्य दुष्टता न भवति, विष्टेरनन्तरं बवस्य प्रारम्भः भौमवारात्परतो बुधवारस्य अनयोः परस्परसमाश्रयान्न दोषः, तथा तेनैव प्रकारेण व्यतिपाताख्योऽन्यान् अपरान् कालागतागतान् अतीतैष्यान् नहिनस्ति न दूषयति ॥ १४ ॥

## अथाऽत्रदृष्टान्तमाह–

विषप्रदिग्धेन हतस्य पत्रिणा
मृगस्य मांसं शुभदं क्षताद्दते ।
यथा तथैव व्यतिपातदूषितः
क्षणेन पापो न तिथिर्न वासरः ॥१५॥

विषेण हालाहलोपलिप्तेन पत्रिणा शरेण हतस्य व्यापादितस्य मृगस्याऽरण्यपशोः मांसं क्षताद्दते क्षतंबिना शुभदं स्वादिष्टं गुणावहं भवति, यथा तथैव प्रकारेण वैधृतव्यतिपातयो वैधृताख्येन महाव्यतिपातेन दूषितः क्षणोऽत्र पापः यावत्कालमभिव्याप्य महापातस्तावान् एव कालो दूषितः यावत् क्रान्ति साम्यं भवति तावन्मात्र इत्यर्थः । तिथयः प्रतिपदादयः वारा रव्यादयोस्तत्कालवर्तमानाः, भमत्राऽनुक्तमप्युपलक्षणत्वान्न च ते दुष्टाः ।

अत एवोक्तम् —

न तिथिर्न च नक्षत्रं न वारो न च तद्दिनम् ।
यावत्कान्त्यंशतुल्यं स्या त्तावदेवातिगर्हितम् ॥ १५ ॥ इति ॥

## अथ सौर सावनचान्द्रनाक्षत्रलक्षणम् ।

## तत्र च नाक्षत्रवर्जिते मानत्रये प्रसङ्गाद्विनियोगत्वमाह—

षडशीति मुखान्यने विषुवद्द्वयमपि च शर्वरीमानम् ।
केवल सूर्यान्येतान्यनपेक्ष्य शर्वरीनाथम् ॥१६॥

मेषादि स्थितस्याऽर्कराशिं त्रिंशानां गुणय भागान् संयोज्य यस्मिन् दिने षडशीति भागाः ८६ भवन्ति तस्माद्दिवसाद्दिनचतुष्टयं यावत तावदित्यनेन मिथुनार्ककालं यावत षडशीति मुखान्युच्यन्ते यावद्भ भाग नवतिः ततः कर्कटार्कः स्यात् पुन षडशीति भागान् भुक्त्वाऽन्यद्भागचतुष्टयं पुनः षडशीतिमुखं, पुनरप्येवं तुलादितो मकरादितः, अतः षडशीतिमुखं मिथुनकन्याधनुर्मीनेषु संभवतीति वर्णयन्ति मुनयः ।

उक्तञ्च

आषाढाश्वयुजे पौषे चैत्रमासे तथैव च ।
दिवसा षोडशः प्रोक्ता ब्रह्मलोकनिवासिनाम् ॥ इति ॥
एवं केषाञ्चिन्मतं, आचार्यस्य नतादृगभिमतम् ।
तथा च पञ्चसिद्धान्तिकायाम्-

मेषतुलादौ विषुवत् षडशीतिमुखं तुलादिभागेषु ।
षडशीतिमुखस्य रवेः पितृदिवसा ये च शेषास्युः ॥

षडशीतिमुखं कन्या चतुर्दशेऽष्टादशे च मिथुनस्य मीनस्य द्वाविंशे षड्विंशे कार्मुकस्यांश इति, एतदाचार्य मतमेव शोभनं न पूर्वोक्तमिति तथाऽपि सौरमानमाश्रित्यैतदुक्तम्. एवं षडशीतिमुखानि चत्वारि, अयने द्वे उत्तरायणं दक्षिणायनञ्च रवेः कर्कसङ्क्रमणं मकरसङ्क्रमञ्च विषुवद्द्वयमपि रवेर्मेषसङ्क्रमणं तुलासङ्क्रमणञ्च एवं सर्वा एव रविसङ्क्रान्तयः, तथा शर्वरीमानं दिनप्रमाणञ्च शर्वरीग्रहणात्तदवशिष्टं दिनमानञ्चाऽऽगतं, एतानि केवलं सूर्यात् केवलेनाऽद्वियेनैव सूर्येण ज्ञायन्ते सौरमानेन भवन्ति, विभावरीनाथं चन्द्रमनपेक्ष्यैव चन्द्रापेक्षामकृत्वैव सूर्यगत्यैव ज्ञायते ॥१६॥



## अधुना केवलचन्द्राण्याह—

नक्षत्राणि मृदुस्थिरतदुभयतीक्ष्णोग्रलघुकार्येषु ।
पुंसवनविवाहविधौ यात्रादिष्वपि च शशिगत्या ॥१७॥

नक्षत्राणि चन्द्रभोगाश्रितानि मृदौ मृदुकर्मणि यानि विहितानि मृदुनि "अनुराधाचित्रापौष्णेन्दवानि" स्थिरे कर्मणि यानि विहितानि "त्रिण्युत्तराणि रोहिणी च ध्रुवाणि" तदुभयेषु साधारणेषु कर्मसु, चरस्थिरेषु मृदुलघुषु च यानि, तथा तीक्ष्णेषु उग्रेषु लघुषु च कार्येषु तथा "मूलशक्रशिवभुजगाधिपानि तीक्ष्णानि" तीक्ष्णकार्येषु विहितानि तथोग्राणि "पूर्वात्रययाम्यपित्र्याणि" उग्रेषु कार्येषु विहितानि तथा हस्ताश्विपुष्या लघुकार्येषु तथा पुंसवने यानि नक्षत्राणि हितानि आदिग्रहणादन्यानपि । "हस्तो मूलं श्रवणः पुनर्वसु मृगशिरस्तथा पुष्यः" पुंसंज्ञितेषु तथा पुंसवनाद्येषु कार्येषु । तथा विवाहविधौ परिणयनविधाने "मृगशिरसिमघायामित्यादिनोक्तानि" तथा यात्रायां यानि नक्षत्राणि विहितानि (दिशिदिशिबहुलाद्या इत्यादीनि) आदिग्रहणादन्यान्यपि वस्त्रक्षुरनवान्नप्राशनचूडोपनयनानि सर्वाणि चन्द्राश्रितनक्षत्रैर्यानि क्रियन्ते तानि केवलया शशिगत्या चन्द्रेण मानेनेत्यर्थः । ॥१७॥

## अधुना द्वयोरप्याह—

तिथिकरणव्यतिपातागण्डान्तो वैधृतस्त्र्यहः स्पृक् च ।
चन्द्रार्कगति नियोगाद् व्याघाताद्यानि सूर्यशशिगत्या ॥१८॥

तिथयः प्रतिपन्मुखाः करणानि बवादीनि व्यतिपातो गणितोक्तः, एते तिथिकरणव्यतिपाताः गण्डान्तः संहिताकारैर्गणितकारैश्चोक्तः स च अश्लेषामघयो र्ज्येष्ठामूलयोः, रेवत्यश्विन्योर्मध्ये भवति ।

तथा चोक्तम्-

मूलाश्वयोर्मघानां प्रथमांशे भवति यमदंष्ट्रा ।
भुजगेन्द्ररेवतीनां पश्चिमभागे तथा घोरा ॥

वैधृतं प्रसिद्धं गणितनिर्दिष्टं त्र्यहः स्पृक् त्रीण्यहानि तिथयो यस्मिन्नुदयात्प्रभृत्यहोरात्रे भवति स त्र्यहःस्पृक् तिथिः ।

उक्तञ्च लक्षणमस्या आचार्येण–

तिथ्यन्तं यदि सूर्यः स्पृशेन्न तदैष्य वासरादिश्च ।
योगस्तदा त्र्यहःस्पृक् तिथित्रयस्पर्शनादह्नः ॥ इति ॥

अत्रवाऽवसराऽऽगतं विलम्बितलक्षणम्

पक्षान्तं यदि सूर्यः स्पृशेन्न तदैष्यभस्य चाद्यमपि ।
योगो विलम्बिताख्योस्तत्तृतीयस्य स्पर्शनाच्च तिथेः ॥

एतानि चन्द्रार्कगतिनियोगा चन्द्रार्क-भुक्ति-योग-वियोगाद्भवति । नियोगश्च गणितकारैरुक्तः । यथा तिथयः करणानि च त्र्यहःस्पृक् चन्द्रार्कान्तरेण गणितेनोक्तं व्यतिपात-वैधृतगण्डान्तव्याघाताद्यानि सूर्यशशिगत्या योगेन भवन्ति ।

उक्तञ्च -

विष्कोभे गण्डान्तो लाटोऽसौ बृहद् व्यतिपातः ।
स्पष्टश्च कालदण्डो व्याघातो वैधृतश्चान्त्यः ॥

एतेषां सामान्येनोक्तं चन्द्रार्कगतिनियोगादिति । अथान्ये योगवियोगमन्यादृशं पठन्ति। चन्द्रार्कगतिवियोगात्तिथिकरणे स त्र्यह स्पृशमिव नित्यं, व्यतिपात-वैधृत-व्याघाताद्यन्यर्क शशिगतियुत्या ॥ १८ ॥

## एवं सर्वं सिद्धान्तेन संस्थाप्य दूषयन्नाह–

रविशशिगतिलक्षणोऽस्य कालो
नपृथगयं शशिना यतः किमर्थम् ।
शशिगृह संयुति प्रमाणं
दिनकरचारवशाद्भवेन्नक स्मात् ॥ १९ ॥

अस्य सर्वस्य व्यतिपातादेः रविशशिनोः सूर्याचन्द्रमसोरुभयो र्गतिर्गमनं तदेव लक्षणं यस्य स रविशशिगतिलक्षणः क्रान्तिसाम्ये तुल्यत्वात् नपृथगेकेनैव शशिना चन्द्रेण व्यतिपातो यस्मान्नभवति यतो राशि नक्षत्रं वा कथं दूषयति, यत्र राशौ यन्नक्षत्रे वा चन्द्रस्थितः तद्राशि नक्षत्रं कथं दुष्यति । यदि वाभ्युपगम्याप्युच्यते तर्हि शशिनः चन्द्रस्य गृहेण राशिना



युतिः संयोगः शशिगृहयुतिः तस्या संस्थिति प्रमाणं यस्य यस्मिन् राशौ नक्षत्रे वा चन्द्रस्थितः स च यावान् कालःस तस्य दुष्टता यदि स्यात्तद्दिनकरस्थभात् सूर्यगृहयुतिकरणात्तस्य परिमाणं न भवेत्, यस्मिन् राशौ नक्षत्रे वा सूर्यस्थितः तस्य कस्माद्दुष्टता न भवति ॥१९॥

## अथाऽस्यान्यदपि दूषणमाह–

कियत्प्रमाणश्च स वर्तमान
कालो यतो नागत यातचिन्तां ।
यदाऽस्य कालः पतितव्य एकः.
संभूयतेऽन्य पतितस्य वापि ॥२०॥

प्रागुक्तं–

एष्यो धनं क्षपयतो व्यतिपातयोगो
मृत्युं ददाति न चिरादपि वर्तमानः ।
संतापशोकगदविघ्नभयान्यतीत-
स्तस्माद्दिनत्रयमिदं प्रजहीत विद्वान् ॥ इति ॥

तत्र कियत्प्रयाणं वर्तमानः केन परिमाणेनाऽवधिभूतेन स वर्तते यतोऽस्मादवधि भूतात् अनागत यातचिन्ता एष्यदतीतविचारणा एतदपि स्वयं विवृणोति । यदाऽस्य काल इति, यदा यस्मिन् व्यतिपातस्य एकः कालः पतितव्यः भूयतेऽन्योऽपरः पतितस्य वापि स्वल्पकालभुक्त व्यतिपातस्य कथमतीतैष्यगणना क्रियते, इत्यर्थः ॥ २० ॥

## एवं परमतं सर्वं दूषयित्वा लाटवैधृतावेव पातौ सिद्धान्तेन स्थापयन्नाह–

उपलक्षणमात्रमिदं कथितं
न तु लक्षणमेव भराशिकृतम् ।
रविचन्द्रकलापरिमाणकृतो
दिनकृद्ग्रहवत्समयोऽस्य मतः ॥२१॥

इदमुपलक्षणमात्रकथितं उक्त दिङ्मात्रमेतत्प्रदर्शितं, यद्रविशशि गतियोगेन भवति, नत्वस्य लक्षणं भक्तं न च राशिकृतं एव शब्दः प्रकारार्थे, राशिनक्षत्रवशान्नोपपद्यते व्यतिपातः, किं तर्हि रविचन्द्रकला परिमाणकृतः यावन्मिता रविचन्द्रयो र्मानकलाः ताभिः कृतं परिमाणं अस्याः क्रान्ति साम्यसम्भवात् दिनकृद्ग्रहणवत् आदित्यग्रहणे यथा समयः कालः स्थित्या उत्पद्यते तद्वदत्रापि मतः प्रारम्भमध्यान्तानि भवन्ति इति ॥ २१ ॥

## अधुना तस्य स्वरूपमाह–

प्रारम्भकालादसमाप्तिकालो
यावद्ग्रहस्येति स वर्तमानः।
तस्योपलब्धिर्गणितेन तत्तु
प्रोक्तं च सर्वं गणिते मया तत् ॥२२॥

प्रारम्भकालात्प्रवर्तमानसमयाद्यावदसमाप्तिकालःसमाप्तिकालात्प्राक् ग्रहस्य रविग्रहस्य कालः समयो बिम्बसम्पर्क इत्येव प्रमाणः, स तस्य वर्तमानः स कालो व्यतिपातस्य चोपलब्धिरुपलम्भनं गणितेन भवति, तच्च गणितं मया करणे पञ्चसिद्धान्तिकायां प्रोक्तं सर्वमशेषेण तत्वं कृत्वा क्रियाविशेषणम् ।
तदुक्तम्–

अर्केन्दुयोगचक्रे वैधृतमुक्तं दशार्क्षसहितेषु ।
यदि चक्रं व्यतिपातो दिनकृच्छशियोगचक्रार्द्धः ॥२२॥

## अधुना परमतेन क्रान्तिसाम्यमुद्देशमात्रेणाह–

केचिदतिशिक्षितत्वाद्विक्षेपापक्रमं यथा शशिनोः ।
कृत्वाऽर्कायनभागै स्तुल्यं तद् व्यतिपातमिच्छन्ति ॥२३॥

केचित् लाटाचार्यदयः अतिशिक्षितत्वात् अतिशयेन गणितज्ञत्वात् शशिनश्चन्द्रमसः विक्षेपाप क्रमंकृत्वा स्फुटात् शशिनो विक्षेपमानीय तस्मादेव–संस्कृतं क्रान्त्यंशं कृत्वा तयोरेक–दिशोर्योगो भिन्नदिशो र्वियोगः कृत्वा चन्द्रस्य स्फुटा क्रान्ति रुच्यते, तदग्रे चन्द्रबिम्ब इत्यर्थः तत्कालिकादर्कात् क्रान्त्यंशाकार्या, त एवार्कायनभागा उच्यन्ते, एवमर्कायनभागै



श्चन्द्रायनभागां स्तुल्या यदा यस्मिन् काले भवन्ति, तत्काले व्यतिपातमिच्छन्ति अनुसरन्ति ।
तथा च लाटाचार्यः–

स्फुटचन्द्रांत्स्वक्रान्तिः कार्या सूर्यायनांशकै स्तुल्याः ।
यस्मिन् काले साम्यं तस्मिन् पतति व्यतिपातः ॥२३॥

## एतदेव लाटाचार्यमतेन दर्शयन्नाह–

लाटाचार्यमतं किल मार्गैकत्वं यदाऽर्कचन्द्रमसोः ।
भवति तदा व्यतिपातो वाक्यमिदं च तस्य द्वे ॥२४॥

किलेत्यागमसूचने, लाटाचार्यस्यैव मतं यदा यस्मिन् कालेऽर्कचन्द्रमसो रविशशिनो- मार्गैकत्वं मार्गसमानता, मार्गो द्विः प्रकार उत्तरो दक्षिणश्च सोऽपि द्विविधः, मेषादावुत्तरतः तुलादौ दक्षिणतो गोलसंज्ञः, द्वितीयो मकरादावुत्तरः, कर्कटादौ दक्षिणः स चाऽयनसंज्ञः । तत्र चन्द्रार्कयोरेकगोलयो भिन्नायनस्थयोः लाटाख्यो व्यतिपातः, वैधृतस्तु एकायनस्थयोर्भिन्नगोलयो- र्भवति, एवं मार्गैकत्वमुत्पद्यते । अर्कचन्द्रमसोरेवं यदा भवति, तस्मिन् काले लाटो वा वैधृत अस्मिन् एवार्थे तदीयमिदं वाक्यं द्वे इमे आर्ये तस्य वचनमित्यर्थः ॥ २४ ॥

## तदानयनस्वरूपेणाह–

चन्द्रार्कोनं भगणादर्धमुद्धरेद्रविशशिद्यु भुक्तिभ्याम् ।
लब्धैर्दिवसैरुद्देशतस्तु भवति व्यतिपातः ॥२६॥

चन्द्रार्कयोः स्फुटयो योगं कृत्वा तेन योगेन भगणं द्वादशराशयो भगणार्द्धं षड्राशयो- र्वा ऊनीकार्यो अथवा तस्मात् योगात् भगणं भगणार्द्धं वा शोध्यम् । एष आनीतस्य गणितस्य धर्मत्वात्, उच्छिष्टं तेषां पिण्डीकृत्योद्धरेत्, रविशशिद्युभुक्तिभ्यां रविशशिन श्चन्द्रार्कयो र्ये द्युभुक्ति स्फुटे दिवसभुक्ती ताभ्यां उद्धरेत्, चन्द्रार्कस्फुट– भुक्तियोगेन भागम- पहरेत्, लब्धं दिवसादिकाल, तच्चैष्यं अतीतं वा कथं उच्यते, योगात् रविशशिनोर्भगणं भगणार्द्धं च यदा पतितं अत्रत्य भगणादियोगं पतितं तद्देष्यं, एवं लब्धैर्दिवसैरुद्देशत उद्देशमात्रेण परिज्ञातो भवति व्यतिपातकालो न निश्चय इति, तत्प्रागुक्तं लाटाचार्य– मतं मार्गैकत्वमिति ॥ २५ ॥

## तदर्थं द्वितीयार्यामाह–

गगने निशाकरार्कौ युगपत्स्यातां यदैकमार्गस्थौ ।
तुल्यपथस्थौ भगणे भगणार्द्धे वार्कशशिनौ ॥२६॥

चन्द्रो यदा भगणार्द्धे अर्कश्च यदा शशी च स भवेत् व्यतिपातः, गगने वियति निशाकरार्कौ शशिसूर्यौ युगतुल्यकालं स्यातां भवेतां, यदा यस्मिन् काले एकमार्गस्थौ तुल्य भगणे भगणार्द्धे वाऽर्कः शशी चन्द्रो यदा यस्मिन् काले भवेत्तदा तस्मिन् काले स व्यतिपातो भवेत् । एतदुक्तं भवति अर्कचन्द्रौ स्फुटावेकीकृतौ भगणे राशिद्वादशके भगणार्द्धे राशिषट्के भवतस्तदा व्यतिपातः, ऊनातिरिक्तायां प्राक्वत् कर्मेति ॥ २६ ॥

## अधुना क्रान्तिसाम्योद्देशमाह–

शशिभुक्ते विक्षेपस्तदपक्रम एतयोरुक्तकालानाम् ।
विक्षेपैक्यान्यत्वे युतिवियुतिभ्यां सदा विभजेत् ॥२७॥
भुक्तिघ्नं भोग्यार्थं षष्ठ्या कालार्थमपि च विक्षेपम् ।
एवं कृत्वा सर्वं स्पष्टतरं चाप्यतः कुर्यात् ॥२८॥

अस्मिन् आर्याद्वये केषांचिद्व्याख्या । शशिभुक्तिश्चन्द्रभुक्तिरिति, स्फुटचन्द्रात्स्वपातं संशोध्य केन्द्रं भवति, तस्मादपि ज्याकेन्द्रं कृत्वा तस्य लिप्तां पिण्डीकृतस्य नवतिशतैर्भागे हृते भुक्तखण्डं त्रिशत्सनवाधिकं लभ्यते तदग्रस्थितज्याखण्डकं गुणकारस्तेन खण्डकेन पात भुक्त्यूनांस्फुटचन्द्रगतिं सङ्गुण्य नवभिः शतैर्विभज्य आप्तं चन्द्रभुक्तिज्या तां च नवभिः सङ्गुण्य पञ्चभिर्विभजे ल्लब्धं चन्द्रभुक्तिविक्षेपः, तस्य चन्द्रकेन्द्रवशाद्दिक्परिकल्पना तस्मिन् मेषादिराशिषट्कस्थे उत्तरः तुलादिस्थे दक्षिण इति, एवं शशिभुक्तिविक्षेपः ततश्च तदपक्रमः तस्या भुक्तेरपक्रमः क्रान्तिः कार्या, तत्कथमित्युच्यते, स्फुटचन्द्रं केन्द्रं परिकल्प्य तस्माज्ज्याकेन्द्रं लिप्तीपिण्डीकृत्य तस्य नवभिः शतैर्भागमपहृत्य लब्धं भुक्तक्रान्तिखण्ड भवति, तस्याऽग्रस्थितेन खण्डेन सहान्तरं कृत्वा तेन क्रान्तिखण्डान्तरेण दिक्परिकल्पना. स्फुटचन्द्रं मेषादिराशिपट्कस्थे उत्तरा, तुलादिषट्कस्थे दक्षिणा, एवं विक्षेपापक्रमौ दिक्चिह्नितौ कृत्वा ततः किं कुर्यादित्याह । तत्तत्कलानामिति, ततः शब्दः प्रकारे एतयोर्विक्षेपापक्रमयोर्याः कला लिप्तास्तासां युतिवियुतिकार्ये, क्रान्तिविक्षेपयोरेक दिक्त्वे योगो भिन्नयो र्वियोगः कार्यः ताभ्यां युतिवियुतिभ्यां



सदा सर्वकालं विभजेत्, स्वक्रान्त्या भागं अपहरेदित्यर्थः । किं तद्भजेदित्याह, विक्षेपः प्रागानीतं कीदृशं भुक्तिघ्नं भोगार्थी षष्ठ्या कालार्थं भोगार्थी रविचन्द्रयोर्भोगं ज्ञातुमिच्छतीति, किं प्रमाणेन रवि–चन्द्रभोगेन क्रान्तिसाम्यो भविष्यति, स गणको भुक्तिहतं विक्षेपं भजेत्, एकत्र रविचन्द्रभुक्त्यंशं संगुण्य अन्यत्र शशिभुक्त्या, ततः स्थानद्वयेऽपि स्वक्रान्त्या भागमपहरेत्, लब्धं रविचन्द्रभोगः, तेन रविचन्द्रभोगेन क्रान्तिसाम्यकालो भूतो भावी वा इति विचारः प्राग्वत् । अथ यः कालार्थी कालं ज्ञातुमिच्छति, केन कालेन घट्यादिना क्रान्तिसाम्यं भविष्यति तदा विक्षेपं षष्ठ्यां सङ्गुण्य स्वक्रान्त्या भागमपहरेत्, लब्धेन कालेन घटिकादिना व्यतिपातस्य क्रान्तिसाम्यो भूतो भावी वेति विचारः प्राग्वत्, एवं कृत्वा आसन्नं भवति निकटं भवति नातिस्फुटतरं चाप्यतः कुर्यादतोऽस्मात्स्फुटतरं कुर्यादिति । अन्ये पुनः, एतदार्याद्वयमन्यथैव पठन्ति । शशिभुक्तविक्षेपस्तदपक्रमः, एतयोः, कलानां, विक्षेपैक्याऽन्यत्वे युतिवियुति स्वक्रमैक्य हृतं भुक्तिघ्नं भोगार्थी षष्ठ्याविकलार्थमपि तदन्तरकं कृत्वा सर्वं स्पष्टतरं चाप्यतः कुर्यात्, तत्रादावेवाऽर्कचन्द्रौ स्फुटौ स्वभुक्तिसहितौ कृत्वा ततस्तयोर्योगः कार्यः । तस्मिन् योगे यदा राशिषट्कं भवति तदा व्यतिपातः क्रान्ति साम्यकालोऽन्वेष्यः । अथ यदि राशिद्वादशकं भवति तदा वैधृतः। चन्द्रार्कयोगो यदा राशिषट्काद्राशिद्वादशकाद्वा हीनाऽधिकं भवति, तदा यस्यासन्नं तेन सह तस्य योगस्यान्तरं कार्यं तच्च लिप्तिपिण्डीकृत्य भुक्तियोगेन रविशशिनोर्विभजेत्, लब्धैः दिवसैः प्राग्वदुद्देशतस्तु व्यतिपातः । ततस्तेन कालेन रविशशिपातास्तात्कालिकाः कार्याः । तत्करणं व्याख्यायते, चन्द्रार्कयुते ध्रुवकेन सह यदन्तरं तत्स्थानत्रये संस्थाप्य एकत्रार्कभुक्त्या अन्यत्र चन्द्रभुक्त्या तृतीयं पातभुक्त्या गुणयेत्, यतः, उक्तं तदन्तरं भुक्तिघ्नं भोगार्थीति । तत्स्थानत्रयमपि गमैक्यहृतं कार्यम । गमशब्देन चन्द्रार्कभुक्तिरुच्यते । गमिर्गम इति कृत्व तयोरैक्यं योगं कृत्वा तेन गमैक्येन तदनन्तरं विभजेत्, लब्धं काललिप्ता भवन्ति । शेषं षष्ठ्या संगुण्य तथैव विभज्यावाप्तं विकला, यतः, उक्तं षष्ठ्या विकलार्थमपि । तदनन्तरकमिति । एवं लब्धानि पृथक् पृथक् फलानि रविशशिपातानां भवन्ति । तेन भोगेन व्यतिपातो भाविभूतो वा चन्द्रार्कयोगे राशिषट्कादूनश्चेद्भावी अधिके त्वतीतः, अतीते याते रविशशिनोः, स्वफलं शोध्यं, एष्यति देयं, पातस्य विपरीतं एष्यति शोध्यं अतीते देयं, एवं कृते रविशशिपाताः, ध्रुवकालिकाः, चक्रार्द्ध कालिकाः, चक्रकालिका भवन्ति, ततो ध्रुवककालिकादर्कात्क्रान्तिः कार्यः सूर्यस्य पाताभावात्, विक्षेपाभावस्तस्मात्तस्य सैव क्रान्तिः । एवं सूर्यक्रान्ति कृत्वा शशिभुक्तेर्विक्षेपः कार्यः शशिनोर्भुक्तिः शशिभुक्तिः भुक्तिशब्देन भोग उच्यते, स्फुटचन्द्रात् ध्रुवककालिकात्, तात्कालिकेन पातेन विक्षेपः कार्यः तदपक्रम इति, तस्मादेव तात्कालिकात् चन्द्रात् अपक्रमः कार्यः अपक्रमशब्देन क्रान्तिरुच्यते

सा च प्रथममेव रविक्रान्तेस्तुल्या भवति, एतयोगतकालानां विक्षेपैक्यान्यत्वे सति युतिवियुति-कार्ये। ततः शब्दः प्रकारे अनेनैव प्रकारेण पातान्वेषणं तयोश्चन्द्रे विक्षेपापक्रमयोः कलानां लिप्तानां क्षेप्यैक्यान्यत्वे सति युतिवियुति कार्ये, मेषादिराशिषट्के वर्तमानात् क्रान्तिः, कृता उत्तरा भवेत्, तुलादिषट्के दक्षिणा; विक्षेपस्यैवं, पातो न चन्द्रकेन्द्रवशात् दक्षिणोत्तरविज्ञानं एवं तयोरेक दिक्क्योर्योगो भिन्नदिक्कयोर्वियोगः स स्वक्रमः चन्द्रस्य क्रान्तिर्भवति। तस्याऽयोगे दिक् ज्ञायते। वियोगे क्रान्तिविक्षेपयोर्वियोगे बह्दिकोऽवशेषः सैव चन्द्रक्रान्तिर्दिग्वाच्येति। एवमनेन प्रकारेण क्रान्तिसाम्यान्वेषणं कृत्वा आसन्नं निकटवर्तिनं पातं भवति, तत्स्फुटतरं, यस्मात् यत्रकाले रविशशिनोः क्रान्तिसाम्यं भवति, स एव स्फुटो व्यतिपातमध्यकालः। अत एवोक्तं स्पष्टतरं कुर्यादिति, अतोऽस्मादुक्तात्प्रकारात्स्पष्टतरं अतीवस्फुटतरं कुर्यात्, येन पातकालः सुतरां ज्ञायत इति ॥ २७ ॥ २८ ॥

## तत्र न ज्ञायते केन प्रकारेण स्पष्टतरं क्रियते तदर्थमस्माभि र्लाटकृतादेव सिद्धान्तात् आर्यासप्तकमानीय प्रदर्श्यते

लब्धसमयेन रविशशिपातां स्तात्कालिकात् स्फुटीकृत्य।
सूर्येन्द्वोरयनांशात्कृत्वेन्दो रजतुलगतस्य ॥२९॥
क्रान्त्यंशात्सूर्योना एष्यः पातोऽधिकस्तदातीतः।
विपरीतः कर्किमृगोऽपगतस्य युतिरन्तरं कार्यम् ॥३०॥
भिन्नैकदिशोः प्रथमो व्यतिपाते वैधृते तु विपरीतम्।
अन्यास्यमिष्टघटिका फलेन युक्तैर्ग्रहैरेवम् ॥३१॥
एवं रीत्या गतमपरद्वितयमतीतं भाविन मथवा तदन्तरे छेदः।
उद्योगमन्यथाद्यस्य कला ताड़िता तस्य फलम् ॥३२॥
घटिकास्ताभिर्मध्यं पातद्वितीयस्य चाद्यराशिवशात्।
तस्मिन् कालेऽर्केन्दू तत्कालीकृत्य कारयेत्क्रान्ती ॥३३॥
एवं भूयो भूयस्तुल्ये यस्मिन् सपातकालः स्यात्।
तस्मिन् स्थिति कालकला कृत्वा मध्यं भवेद्दृष्टम् ॥३४॥



अत्र व्याख्या लब्धसमयेन रविशशिपातानिति-

"चन्द्रार्कोनं भगणार्द्ध मुद्धरेद्रविशशिद्यु भुक्तिभ्याम्।
लब्धैर्दिवसैरुद्दे शतस्तु भवति व्यतिपातः ॥"

इति प्रागुक्तेन न्यायेन लब्धः प्राप्तः समयः कालो व्यतिपातस्य अतीतो वा एष्यो वा तेन गणित लब्धसमयेन रविशशिपातान्मध्यमांस्तात्कालिकीकृत्य चन्द्रार्कौ स्पष्टीकार्यौ स्वभुक्ति-सहितौ तत्र सूर्येन्द्वोरर्कचन्द्रयो प्राग्वदयनांशकं कृत्वा तांश्च दिक् चिह्नितान् कृत्वा पृथक् पृथक् स्थापयेत्। ततो विचारः कार्यः, इन्दोश्चन्द्रस्याजतुलगतस्य मेषादिराशित्रये तुलादिराशित्रये वा स्थितस्य ये क्रान्त्यंशास्ते यदि सूर्यक्रान्त्यंशेभ्य ऊना भवन्ति तदैष्य पातो ज्ञेयः, तस्मादर्द्ध चक्रात्कालात्, चक्रकालाद्वा। अथ तत्र चन्द्रक्रान्त्यंशा अधिका भवन्ति तदा अतीतः पातकालः। विपरीतः कर्किमृगोपगतस्येति। तुलादिराशित्रये उपगतस्य समवस्थितस्य चन्द्रस्य मकारादौ राशित्रये स्थितस्य विपरीतकालोख्यपक्रमांशेभ्यः, ऊनैरपक्रमांशकैरतीतकालोऽधिकैर्भावी। एवं क्रान्तिसाम्यकालस्यातीतानागतपरिज्ञानं प्रदर्श्येदानीमानयनमाह। युतिरन्तरं कार्यं भिन्नैक्यदिशोः प्रथम इति, ततो व्यतिपाते क्रान्त्योरभिन्नदिशोर्युतिः अन्यदिशोरन्तरं कार्यं एवं कृते यो राशिर्भवति, स प्रथमाख्य इत्युच्यते, तं अतीतानागततया चिह्नितं एकान्ते स्थापयेत्। अन्याख्यं इष्टघटिका फलोनयुक्तैर्ग्रहैरेवमिति, ततः स्वमतिकल्पिताभिरिष्टघटिकाभिः पञ्चभिर्दशभिर्वा चन्द्रपातभुक्ति संगुण्य षष्ठ्या विभज्यावाप्तानि फलानि भवन्ति, तैः स्वफलैः आगामि पाते ध्रुवकतकालिकौ रविचन्द्रावधिकौ कार्यौ, पातस्तु अतीते रविचन्द्रावूनौ पातश्चाधिकः ततस्तयोः प्राग्वत् तत्क्रान्ती कार्ये, तत इन्दोरजतुलगतस्य क्रान्त्यंशाः सूर्योना एष्यत् पातः अधिकश्चेत्तदा अतीतः, विपरीतः कर्किमृगोपगस्येति, पातस्य अतीतानागत्वरन्वेष्यं, तत्र तयोः क्रान्त्योर्युतिरन्तरं कार्यं। भिन्नैक्य-दिशोरिति, प्रथमराशिमुत्पादयेत्, तदपि गतागतपातचिह्नितं स्थापयेत्। विवरद्वयमतीतं भाविनमथवा तदन्तरछेदः। उद्योगमन्यथेति, ततो यदि राशिद्वये व्यतिपातः पातकालो ज्ञातोऽथवा राशिद्वयेप्यागामी,तयोराद्यो अन्तरं कार्यं स छेदो भवति। अथैकेन राशिनाऽतीतोज्ञात अन्येनागामी तद तयो राश्योरैक्यं कार्यं स छेदो भवति। कस्येत्यत आह, आद्यस्य इष्टकलाताडितस्येति, याभिरिष्टघटिकाभिरर्कादीन् तात्कालिकां कृत्वा द्वितीयाख्य उत्पादितः ताभिराद्यस्य गुणितस्य छेदो भागहारो भवतीत्यर्थः। ततो यत्फलं ताः घटिका ताभिः फलघटिकाभिः मध्यंपातः द्वितयस्य द्वयोरपि व्यतिपात वैधृतयोः आद्यराशिवशात्, यावतीभिर्घटीभिः पातकालः चक्रार्द्ध कालाच्चक्रकालाद्वा अतीतं एष्यो वा ज्ञातव्यः; अथ यदि प्रथमेन राशिनाऽतीतः पातो ज्ञातव्य स्तदा कालेन क्रान्तिसाम्यं तयोर्भवति, तस्मिन् एव काले व्यतिपातस्य वैधृतस्य वा मध्यं भवति। तस्मिन् काले

केन्द्रं तात्काले कृत्वेति,याभि र्घटिकाभिः प्रथमराशिवशात्,तत एव कालाच्च द्वयोर्मध्यं ताभिःध्रुवककालिकाः रविचन्द्रपाताः तात्कालिकाः कार्या स्ततो रविचन्द्रोः स्वक्रान्ति कृत्वा प्राग्वत् अन्याख्यं राशिं उत्पाद्य तस्य पूर्वागतेनैव प्रथमराशिना सह वियोगादिकेन कर्मणा प्राग्वत् काल उत्पाद्य तेन पुनरर्कचन्द्रयोःपाताःध्रुवककालिकाःकार्याः। ततो रविचन्द्रयोः क्रान्तिःकार्यं, ताभ्यां यदन्याख्यं राशिं उत्पाद्य तस्य प्रथमराशिना सह योगवियोगादिकेन कर्मणा प्राग्वत्कालं उत्पाद्य, एवं भूयो भूयस्तावत्कार्यं यावत्काल स्थिरोभवति। तत्र काले व्यतिपातस्य वैधृतस्य वा मध्यं स्फुटं भवतिः, तत्र च क्रान्त्योः साम्यत्वमुत्पद्यते। अथ यत्र मिथुनधनुषो स्थितस्य चन्द्रमसः सूर्यक्रान्तेः चन्द्रस्य क्रान्तिरूना भवति तत्र क्रान्तिसाम्याऽभाव स्तदा पाताऽभाव एव। अथ तत्रैवाधिका चन्द्रस्वक्रान्ति-र्भवति, तदा वारद्वयं क्रान्तिसाम्यमुत्पद्यते। तत्रैको ग्राह्यो द्वितीयस्त्याज्यः, यो ग्राह्यः स उच्यते। व्यतिपाते गोलैकत्वेऽयनभेदे च यत्क्रान्ति साम्यं तद्गृह्यते। वैधृतेऽयनैकत्वे गोलभेदे च यत्क्रान्तिसाम्यं तद्गृह्यते।

तथा च ब्रह्मगुप्तः-

त्रिनवगृहेन्दुक्रान्तिर्मेषतुलादौ दिवाकरक्रान्तेः।
ऊना यावदभाव स्तावदभावोऽन्यथार्केन्द्वोः॥

व्यतिपातोऽपक्रमयो र्दृक्साम्ये वैधृतं दिगन्यत्वे।
अधिको प्यूनः कल्प्यो दिग्भेदोऽपक्रमः शशिनः॥

मेषतुलादाविन्दोरपक्रमश्च क्रमादूने।
एष्य स्त्वधिकेऽतीतो विपरीतः कर्किमकरादौ॥

क्रान्तेर्युतिरन्यदिशोरेकदिशोरन्तरं व्यतिपाते।
एकदिशोर्युतिरन्तरन्यदिशोर्वैधृते प्रथमः॥

एवं द्वितीयराशियुतिहीनैरिष्टनाडिका स्वफलैः।
एष्यदतीतं वा यदि राशिद्वयमपि तदन्तरकम्॥

छेदोऽन्यथा तदैक्यं घातस्येष्टघटिका प्रथमम्।
राशेः फलघटिकाभि र्मध्याद् द्वयोरपि प्रथमराशिवशात्॥
तात्कालिकैरसकृदिष्टघटिका फलोनयुक्तैस्तैः॥ इति॥



एवं पातमध्यकालं ज्ञात्वा तस्मिन् काले स्थितिकालघटिकाः कृत्वा ताभिरुनाधिकं कृत्वा तन्मध्ये व्यतिपातदुष्टं भवति॥ २६-३४॥

## अधुना स्थितिकालानयनमाह-

गतिविवरहृता गुणिता षष्ठ्या रविचन्द्रमानयोगकलाः।
व्यतिपातस्य स कालः पुण्योऽतोऽर्द्धेन चाद्यन्तौ॥ ३५॥

उक्तविधानेन रविचन्द्रयोर्मानकला कार्याः, ततस्तासामैक्यं कार्यं, ताश्च रविचन्द्र मानयोगकला उच्यन्ते, ताः षष्ठ्या सङ्गुण्यचन्द्रार्कस्फुटभुक्तिविवरेण भागमपहृत्यावाप्तं स्थितिकालघटिका सकालो व्यतिपातदुष्टः, स च पुण्यकालः यतोऽस्मात् स्थितिकालादर्द्धेन चाद्यन्तौ कार्यौ। एतदुक्तं भवति व्यतिपातमध्यकालः स्थानद्वये स्थाप्य एकत्र स्थित्यर्द्धं संशोध्यः स प्रारम्भकालो भवति, अन्यत्र संयोज्य समाप्तिकालो भवति, प्रारम्भकालात्स-माप्तिकालो यावत् तावत्कालो व्यतिपातदुष्टः, व्यतिपातेन दूषितो भवति स एव पुण्यकालः इति॥ ३५॥

## अथ व्यतिपातकाले कर्तव्यमाह-

तदहनि कुर्याच्छ्राद्धं विप्रामरपूजनं होमम्।
तस्मिन् जपनियमाद्यो धर्मः स्वल्पोऽपि बहुलो भवति॥ ३६॥

तदहनि तस्मिन् व्यतिपातदिने श्राद्धं पितृतर्पणं कुर्यात्, तथा विप्राणां ब्राह्मणानां, अमराणां देवानां पूजनं अर्चनं कार्यं, जपं गायत्र्यादिमन्त्राणां होमं अग्नौ हवनं च कार्यं, तस्मिन् काले यस्मिन् काले पातारम्भस्तत्कालमारभ्य पातविरामकालपर्यन्तात्मको यः कालस्तस्मिन् नियमाद्यो धर्मः नियमो व्रतानुसेवनं आदिग्रहणात्सुरपूजनदानादि एवं विधः स्वल्पोऽपि धर्मो बहुलोऽनन्तफलो भवतीति॥ ३६॥

वराहमिहिराचार्य कृतेऽस्मिन् मत सागरे।
अर्थिनामुत्पल श्चक्रे स्वाप्तये विवृतिप्लवम॥

इति भट्टोत्पलविरचितायां यात्रायेऽश्वमेधीययात्राविवृतौ व्यतिपाताऽध्यायो द्वादशः॥१२॥

-०-

# अथ मिश्रकाऽध्यायो व्याख्यायते
# मिश्रकः प्रकीर्णक उच्यते

## तत्रादावेव व्यतिपातकालयातस्य दोषमाह—

व्यसनं प्राप्नोति महद् व्यतिपाते निर्गतोऽथवा मृत्युम् ।
वैधृत गमनेप्येवं त्र्यहस्पृशि समुदिशन्त्येके ॥ १ ॥

याता गन्ता व्यतिपातकाले निर्गतः प्रस्थितो महद् व्यसनं अति दुःखं प्राप्नोति अथवा मृत्युं मरणं प्राप्नोति, यदि न म्रियते तदा महद् व्यसनं प्राप्नोति ।

आचार्येण च योगयात्राप्रकरणे नक्षत्रतिथिद्वारेण दूषितः

ऋक्षे तिथौ वा व्यतिपातदुष्टे
यो याति मोहात् खलु वैधृते वा ।
सनाशमायात्य चिरेण राजा
राजेव दैवज्ञ विलोमचेष्टः ॥

इत्यनेनैव वाक्येन निषेधः कृतः वैधृतकालगतो महद्व्यसनं मृत्युं प्राप्नोति । एवं त्र्यहस्पृशि त्र्यहस्पृक् दिवसे एवं समुद्दिशन्ति कथयन्ति ।

तथा च सिद्धार्थः—

यस्मिन् पक्षे दिनं लुप्तं प्रस्थाने स विगर्हितः ।
व्यतिपाते नरो याता याति वैवस्वत क्षयम् ॥ इति ॥

तथा च गर्गः—

त्र्यहस्पृक् दिवसे याता मरणं दुःखमाप्नुयात् ॥ १ ॥



## अथान्यस्मिन् काले गमननिषेधमाह—

नावमरात्रे यायाद्दोष स्तत्राऽधिमासके व्यसनम् ।
ऋत्वयनयुगसमाप्तौ न विजयकाङ्क्षी नृपः प्रवसेत् ॥ २ ॥

यत्र तिथिलोप स्तस्मिन् अवमरात्रे न यायात्, तत्र न गच्छेत् तत्र यातस्य दोषो भवति, तथाऽधिमासमध्ये न यायात्, अत्रावमरात्रमधिमासश्च करणागतो न ग्राह्यः किन्तु स्पष्ट गणितागत एव केवनाऽहर्गणानयने लब्धाधिकमासकदिनमितीच्छन्ति, एवं लब्धावमदिनं चेच्छन्ति न च तद्वस्तु सिद्धम् ।

तानि वाक्यान्यप्रमाणानि

यदा क्षयं याति गभस्तिमण्डलं
दिवाकरः सङ्क्रमणे व्रजत्यनु ।
तदाऽधिमासः कथितः स्वयंभुवा
विवाहयज्ञोत्सवसिद्धिनाशनम् ॥
अमावास्यामतिक्रम्य यदा सङ्क्रमते रविः ।
तदाऽधिमासः कथितः सर्वकर्मसु गर्हितः ॥

इत्यादिकानि, एवं अधिमासमध्ये न च गच्छेत्, अधिमासयातस्य व्यसनं दुःखं भवति, ऋत्वयनयुगसमाप्ताविति, ऋतु- समाप्तौ अयन- समाप्तौ उत्तरायण- दक्षिणायन- सङ्क्रान्तौ ।

उक्तञ्च—

उदगयनं शिशिरादावृतवः शिशिरायनश्च सूर्यवशात् ।
द्विभवनकालसमानाद्दक्षिणमयनं च कर्कटादि ।

तथा युगसमाप्तौ प्रभवादयोऽब्दाः तैः पञ्चभिः पञ्चभिरब्दैर्यानि विष्णवादीनि द्वादशयुगान्यभिहितानि बृहस्पतिमानाश्रितानि ।

तथा चार्यभटः—

गुरुभगणा राशिगुणा अश्वयुगाद्या गुरोरब्दाः ।

तस्य समाप्तौ, अत्र समाप्ति शब्दः प्रत्येकमभिसंबद्ध्यते, ऋतुसमाप्तावयनसमाप्तौ च विजयकाङ्क्षी विजयाभिलाषी नृपो राजा न प्रवसेत् नगच्छेत्, अत्रर्तुग्रहणे सिद्धे प्रतिषेधे यदयनग्रहणं करोति तदतिशयवर्जनार्थम् ।

तथा च–

समाप्ति मासकर्तूनां समाप्तिरयनस्य च ।
यत्रर्क्षे तत्र गमनं भूतिकामस्य नेष्यते ॥ इति ॥ २ ॥

## अधुना ग्रहस्य षाड्गुण्यनिरुपणावसरे मित्रामित्रपरिज्ञानमाह–

स्वर्क्षेशदशाधिपयोर्मित्रोदासीनशत्रुभांशभवाः ।
उत्पातकभुजश्चोक्ता विजिगिषोर्मित्रमध्यपराः ॥३॥

स्वर्क्षेशो जन्मराश्याधिपतिः दशाया अधिपो वर्तमान दशाधिपतिः स्वर्क्षेशश्च दशाधिपश्च तयो र्यानि मित्राणि सुहृदो ग्रहाः ये चोदासीनाः, मध्यस्थाः, ये च शत्रवः तेन च होराशास्त्रे "शत्रू मन्दसितावित्यादिनोक्ताः" तेषां यानि भानि गृहाणि स्वराशयः "क्षितिजसितज्ञ-चन्द्रेत्यादिनोक्ताः" तैश्च भवो जन्म येषां नराणां तदीयैरंशैः चेत् नवांशकैर्वा येषां जन्म-लग्नाश्रितर्वा तद्राशिभिः तदंशकैर्वेत्यर्थः, तेन विजिगीषोर्जेतुमिच्छोः, यथासंख्यं मित्रमध्यपरा भवन्ति । एतदुक्तं भवति स्वर्क्षेशदशाधिपयोर्यानि मित्रभानि सुहृद्राशयश्च येंऽशकाः नवभागाः येषां ते मित्रभांशभवाः यातुः, सुहृदो ज्ञेयाः एवं उदासीनानांशभवास्ते मध्यस्था उक्ताः कथिता, ये शत्रु भांशभवास्ते शत्रवः । उत्पाकभुजश्चेति, उदिति स्वर्क्षेश दशाधिप-योर्मित्रोदासीनशत्रूणां परामर्शः, तेषां तत्कालं यदा पाकं भुञ्जते तद्दशावान्तर्दशा येषां पुरुषाणां वर्तते — — — — —

— — — — —
— — — — —
— — — — —
— — — — —
— — — — —
— — — — —
— — — — —

१३।१४।१५।१६ अध्याया अत्र त्रुटिताः सन्ति





# अथातोऽधुना गुह्यकसहायाध्यायो व्याख्यायते

## तत्रादावेव क्रमदर्शनमाह–

यात्राऽर्वाक् सप्ताहाद्गुह्यकसहाय्यकं त्र्यहं पूर्वम् ।
त्र्यहमथ विजयस्नानं ग्रहयज्ञं सप्तमे दिवसे ॥१॥

चित्तशुद्धौ ज्ञातायां दैवज्ञेन नृपस्य यात्रायां दिवसो निरुप्य तस्माद्यात्रादिवसादर्वाक् प्राक् सप्ताहात्पूर्वं सप्तभिर्दिनैः, तस्माद्दिनसप्तकात्पूर्वं प्रथमं त्र्यहं दिनत्रयं गुह्यकसहाय्यकं कर्म कार्यम् । गुह्यकाः गणाः सहायस्य भावः साहाय्यं तस्य कः प्रत्ययः प्रथमं त्र्यहं दिनत्रयं गुह्यकयागः, कर्तव्यः ततः परं अन्य त्र्यहं विजयस्नानं विजयार्थं स्नानं कर्तव्यम् । षट्दिनानि । सप्तमे दिवसे ग्रहयज्ञः ग्रहाणां यागः कर्तव्यः ॥१॥

## अथात्र तेषां विधानमाह–

पक्वाममांसदधिफलकुसुमासवपायसप्रतिसराभिः ।
मूलकभक्ष्यैर्गन्धैर्गुग्गुलुमुख्यैस्ततो धूपैः ॥२॥
साम्वत्सरसचिवपुरोहिताप्तपुरुषायुधीयपरिवाराः ।
यायान्नगरचतुः पथमभुक्तवस्त्रोत्तरीयाङ्गः ॥३॥

पक्वं स्विन्नं आमं अपक्वं तद्द्विविधं मांसं तेन दध्ना क्षीरविकारेण फलैः श्रीफल-जातीफलपूगफलादि तत्तत्कालसम्भवाम्रकदलीदाडिमादिभिरण्योद्भवैश्च फलैः कुसुमैः स्थलजजल-जारण्यजैः कमलोत्पलजातीचम्पकादिभिः, आसवैः पानैर्गौडीपैष्टीमाध्वीताडीभिः, पायसेन परमान्नेन प्रतिसरया कार्या, ससूत्रनिर्मितं तत्पुञ्जात्मकमण्यन्वितं रहिद्रा कुंकुमादिभि रञ्जितं स्रक् प्रतिसरोच्यते । एतैः सह तथा मूलकं 'मुरहीति लोके' भक्ष्यैर्नानाप्रकारैः, अपूपै-र्मोदकैर्वापि कार्यैः गन्धैः सुगन्धद्रव्यैः कर्पूरकस्तूरीकेशरैः सर्वौषध्यादिभिस्तथा गुग्गुलुमुख्यैः गुग्गुलु-

मुख्यो येषां गुग्गुलु प्रधानैर्धूपै, एतैरपि सह । सांवत्सरो दैववित् सचिवो मन्त्री पुरोहित आचार्यः आप्तपुरुषा बान्धवाः, आयुधीयाः योधशीलाः शूराः पदातयः, एते परिवाराः सहाया यस्य एवं विशिष्टो राजा तथोक्तः, नगरे यच्चतुष्पथं तद्यायात् । कीदृशः, अभुक्तं नवं वस्त्रं उत्तरीयं अङ्गेषु यस्य स तथा भूतः ॥ २-३ ॥

## अथ तत्र गत्वा कस्मिन्काले किं कुर्यादित्याह–

अर्द्धनिशायामुदयति सौम्ये वक्रेऽथवा तदंशे वा ।
दद्याद्बलिं दिशासु प्रागादिषु पुरोहितः क्रमशः ॥४॥

अर्द्धनिशायां अर्द्धरात्रिवेलायां उदयं यद्युद्गच्छति सौम्ये बुधे लग्नस्थे वक्रे भौमे वा उदयति लग्नस्थे तदंशे तयोर्बुधभौमयोरंशके नवांशके तत्काललग्नप्राप्ते मेषमिथुनकन्या-वृश्चिकान्यतमलग्ने नवांशके वा तत्काललग्नगते दिशासु आशासु प्रागादिषु पुरोहित आचार्यः क्रमशः परिपाट्याः बलिमुपहारं दद्यात् दापयेत् । पूर्वाग्नेययाम्यनैऋत्य- वारुण-वायव्योत्तरैशान्योऽष्टौ अध उद्र्ध्वं च एवं दिशो दश इति ॥ ४ ॥

## तत स्तत्र किंकुर्यादित्यय आह–

आवर्तये त्पुरोधा कृताञ्जलिस्तत्र रुद्रसावित्रीम् ।
कुष्माण्डमहारौहिण कुवेर हृदयान्यतः प्रपठेत् ॥५॥

तत्र तस्मिन् स्थाने चतुः पथे पुरोहितः कृताञ्जलिः सन रुद्रसावित्रीं श्रावयेत् पुनः पुनः प्रपठेत् ।

रुद्र सावित्री यथा–

"महेश्वराय विद्महे महादेवाय धीमहि तन्नोरुद्र प्रचोदया" दिति रुद्रसावित्री । तथा कुष्माण्डान् मन्त्रविशेषान् यजुर्वेदोक्तान, महारौहिणं मंत्र, कुवे हृदयं अथर्ववेदोक्तं एतान् मन्त्रान् यतः संयतः प्रपठेत् । अथान्यान् मुनिकृतान् मन्त्रानपि पठेत् ॥५॥



## तान्मन्त्रान् स्वरूपेणाह–

द्वारत्रिकचतुष्काट्टपुरनिष्कुटवासिनः ।
महापथनदीतीरगुहागह्वरवासिनः ॥६॥
विश्वरूपामहारूपामहासत्वामहाव्रताः ।
प्रमथाः प्रतिगृह्णीध्वमुपहारं नमोऽस्तुवः ॥७॥

मन्त्रार्थः–

द्वारे पुरद्वारे ये गणाः देवविशेषा निवसन्ति तथा त्रिके त्रिपथि चतुष्के चतुष्पथि अट्टे अट्टालके पुरे नगरे निष्कुटे गृहारामे, एतेषु स्थानेषु ये निवसन्ति, तथा महापथि बृहद्रथ्यायां नदीतीरे गुहासु दरीषु गह्वरे पर्वतसमीपे ये निवसन्ति, तथा ये गणा विश्वरूपाः नानाकाराः, ये च महारूपा बृहद्रूपाः, महासत्त्वा महाभिप्रायाः अतीव शूराः महाव्रता स्तीव्रतपसः एवं विधाः प्रमथास्ते उपहारबलिं गृह्णन्तु वो युष्मभ्यं नमोऽस्तु नमस्कारो भवतु ॥ ६ ॥ ७ ॥

## ततस्तेष्वेवं ब्रूयादित्याह–

सपुत्रामात्यभृत्योऽयं सदा नश्चैव पार्थिवः ।
रक्षणीया हिते चास्य प्रयतध्वं समाहिताः ॥८॥

अयं पार्थिवो राजा पुत्रैः सुतैः, अमात्यैर्मन्त्रिभिः, भृत्यैः प्रेष्यैः, दारैः कलत्रेण च सहितः युष्माभिः रक्षणीयः पालनीयः, हिते हितविषये चास्य नृपस्य प्रयतध्वं प्रयत्नपरा भवन्तु । समाहिताः समेताः सन्निहिता वा एकचित्तः, एवं मन्त्रानावर्त्य ॥ ८ ॥

## ततः किंकुर्यादित्यतआह–

एवमुक्त्वा ततस्त्वर्घ्यं प्रमथेभ्यः प्रदापयेत्
सावित्र्या स्थण्डिले तस्मिंस्तत स्तूपहरेद्बलिम् ॥९॥
यमेन्द्रवरुणार्थेशविष्णुपावकशूलिनाम् ।
यक्षरक्षपिशाचानामसुराणां तथैव च ॥१०॥

ये स्युर्भूतगणास्तेभ्यो नमोऽस्त्वित्यनुयान्ति च ।
सन्नद्धः स्वैः प्रहरणैररिसेना विधायिनः ॥११॥

एवं अमुनाप्रकारेण मन्त्रान् पठित्वा ततोऽनन्तरं प्रमथेभ्योऽर्घ्यं प्रदापयेत् । ततोऽर्घ्यं दत्वा तस्मिन्नेव स्थण्डिले भूभागे सुपरिस्कृते सावित्र्या मन्त्रेण बलिं उपहरेत् दद्यात् । प्रमथेभ्यो न केवलमेतेषु यावदन्येष्वपि ।

केष्वित्याह—

यमेन्द्रवरुणार्थेशेति, तेषां मन्त्रानावर्त्तयेत्, प्रागुक्तान् रुद्रसावित्र्यादिकुवेरहृदयान्तान् । तत उपहरेद् बलिं अर्घ्यं च दद्यादिति, सकलेन सम्बन्ध यमस्य प्रेतपते रिन्द्रस्य शतक्रतोः वरुणस्य अपांपते, अर्थेशस्य वैश्रवणस्य विष्णोर्नारायणस्य पावकस्याग्नेः शूलिनो महादेवस्य एतेषां तथा यक्षाणां देवयोनीनां रक्षसां पिशिताशिनां तथान्येषां पिशाचानां पिशिताशिनां देवयोनीनां असुराणां दैत्यानां सम्बन्धिनो ये भूतगणाः भूतसङ्घाः स्यु र्भवेयुः तेभ्यः तथैव तेनैव प्रकारेण नमोऽस्तु इत्यनेन अर्घ्यं बलिञ्च तस्मिन्नेव स्थण्डिले दद्यात् । तथा राज्ञः अनुयान्तु पश्चाद्गच्छन्तु किं विशिष्टाः सन्नद्धाः वद्धकवचाः, आत्मीयैः प्रहरणैः आयुधैः समेताः संयुक्ताः तथा अरिसेना विधायिनः शत्रुसेनानारणशीलाः ॥ ११ ॥

## ततोऽन्यत्किं वक्तव्यमित्याह—

चमुं समेतामनुयान्तु पृष्ठतो
विचित्रमाल्याभरणा मदोत्कटाः ।
विरङ्गवस्त्राजटिलाः किरीटिनः
करालम्बोदरकुब्जवामनाः ॥ १२ ॥

मम सम्बन्धिनी चमुं सेनां समेतां पृष्ठतः कृत्वा पश्चादनुयान्तु गच्छन्तु, किं भूताः विचित्राणि नानाकाराणि माल्यानि स्रजः आभरणानि अलङ्काराणि च येषां तथा च मदेन दर्पेण उत्कटाः प्रमत्ताः. विरङ्गवस्त्रा विरङ्गानि विविधवर्णविचित्रानि अम्बराणि येषां । जटिला जटाभिर्युक्ता किरीटिनो किरीटशोभिमौलिनः, तथा करालाः भीषणाः, लम्बोदराः प्रलम्बजठराः कुब्जाः अवनताः वामनाः खर्वाः ते सर्वे अनुयान्तु इति पठेत् ॥ १२ ॥



## तत स्तेषामिदं वक्तव्यमाह—

निवृत्तमात्रः पुनरप्यहं हि भो
विजित्य शत्रुं भवतां प्रसादात् ।
अतो विशिष्टं बहुवित्तमुत्तमं
बलिं करिष्ये विधिनोपपादितम् ॥ १३ ॥

पठेदिति प्रागुक्तेन योजना । भवतां युष्माकं प्रसादतः प्रभावात्, शत्रून् विजित्य जित्वा पुनर्भूयोऽप्यहं वो युष्मभ्यं निवृत्तमात्रः निवर्त्तित एव बलिं उपहारं करिष्ये । अतोऽस्मादुपनीता द्विशिष्टं अधिकं बहुवित्तं प्रभूतधनं उत्तमं प्रधानं विधिना शास्त्रदृष्टोपपादितं कृतम् ॥ १३ ॥

## अधुना गणपूजाप्रशंसार्थमाह—

अनर्चिता स्ते नृपतिं सवाहनं
विनाशयन्ति क्षपयन्ति वा चमूम् ।
सुपूजिताः सिद्धिकरा भवन्ति ते
प्रबाधकाः शत्रुगणस्य चाहवे ॥ १४ ॥

ते गणाः अनर्चिताः अपूजिताः, नृपतिं राजानं सवाहनं वाहनसहितं विनाशयन्ति मारयन्ति, चमूं सेनां वा क्षपयन्ति । सुपूजिताः भक्त्या अभ्यर्चिताः ते गणाः सिद्धिकरा भवन्ति, सिद्धिं प्रयच्छन्ति । तथा आहवे सङ्ग्रामे शत्रुगणस्य अरिसमूहस्य प्रबाधकाः भवन्ति शत्रून् विनाशयन्तीत्यर्थः ॥ १४ ॥

## अनन्तरं कर्तव्यमाह—

क्षणषष्टिभागमात्रं प्रणतो नृपति विसर्जयेत्प्रमथान् ।
नैमित्तिक पुरोधाभ्यामावेदितव्यं ... ... ॥ १५ ॥

क्षणस्य मुहूर्तस्य षष्टिभागः क्षणो घटिकाद्वयं तस्य षष्टिभागो विघटिका द्वयं तेन द्वादश श्वासोच्छ्वासमात्रं तावत्काले प्रयतः प्रह्वो नृपतिः, राजा प्रमथान् गणान् विसर्जयेत् प्रेषयेत् ।

ततोऽनन्तरं नैमित्तिकेन दैवज्ञेन पुरोधसा आचार्येण आभ्यां द्वाभ्यामेवादितमङ्गलः आवेदितानि मङ्गलानि यस्य तथा भूतो ज्ञातशुभनिमित्तो गृहं यायात् ॥ १५ ॥

वराहमिहिराचार्यकृतेऽस्मिन्मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्नये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यत्त्येऽश्वमेधीययात्राविवृतौ गुह्यकाऽनुष्ठानाऽध्यायः सप्तदशः ॥ १७ ॥





# अथ स्वप्नपरीक्षाऽध्यायो व्याख्यायते-

ततो गुह्यकपूजनात्परतः शुभाशुभस्वप्नदर्शनार्थं स्वप्नपरीक्षा कर्तव्या। तत्र शुभस्वप्नसंदर्शनाद्यात्रायामुद्यमः कर्तव्योऽशुभदर्शनात्तथाविधः कश्चिदुपायः कर्तव्योऽतस्तत्रादावेव स्वप्नविधानमाह—

दुकूलमुक्तामणिभृन्नरेन्द्रः
समंत्रिदैवज्ञपुरोहितोऽतः ।
स्वदेवतागारमनुप्रविश्य
निवेशयेत्तत्र दिगीश्वरार्चाम् ॥ १ ॥

अतोऽस्मात् गुह्यकपूजनात्परतः नरेन्द्रो राजा स्वदेवतागारं आत्मीयार्चा देवगृहं अनुप्रविश्य तत्र गत्वा तस्मिन् स्वदेवतागारे दिगीश्वरार्चां दिक्पतिप्रतिमां यस्यां दिशि गन्तुमिच्छा तस्यां दिशि योऽधिपतिग्रहो लोकपालश्च तत्प्रतिमां निवेशयेत्स्थापयेत् पूजार्थम् ।

तथा च योगयात्रायामुक्तम्—

पुरुहूतहुताशयमानिऋति-
र्वरुणानिलयक्षशिवाश्च दिशाम् ।
पुनरर्कसितारतमोरविजाः
शशिसौम्यबृहस्पतयः पतयः ॥ इति ॥

कीदृशो राजा दुकूलमुक्तामणिभृत् दुकूलं कौशेयं मुक्ताप्रसिद्धा मणिश्च तद्दिगीशग्रहस्येति। तान् बिभर्त्ति धारयतीति दुकूलमुक्तामणिभृत् तथा समन्त्रि दैवज्ञपुरोहित, मन्त्रिणा दैवज्ञेन पुरोधसा तादृक् दुकूलमुक्तामणिभूषितै स्तै स्त्रिभिः सहितः संयुक्तः ॥ १ ॥

## ततः किंकुर्यादित्यत आह–

अभ्यर्च्य मन्त्रेण पुरोहित स्ता–
मधश्च तस्यां भुविसत्कृतायाम् ।
दर्भैस्तु कृत्वाऽऽस्तरमक्षतै स्तं
लिखेत्समन्तात्सितसर्षपैश्च ॥ २ ॥

ततः पुरोहितः तां दिग्गीशप्रतिमां मन्त्रैरात्मीयैः तस्या मन्त्रो वेदविहित स्तैर्बहुभिस्तद्दैवत्यैः सम्पूज्याभ्यर्च्य स्नानोपलेपपुष्पधूपोपहारदीपनैवेद्यवाद्यनृत्यगीतैः, तत स्तस्यामेव भुवि भूमौ सत्कृतायां घृष्टोपलिप्तायां अधः स्थले वक्ष्यमाणविधिना स्वप्नं परीक्षेतेति, वक्ष्यमाणेन सम्बन्धः। दर्भैः कुशैरास्तरं प्रस्तारं कृत्वा ततः तमास्तरं समन्तात्सर्वतोदिशं अक्षतैरखण्डितैर्यवैः सितसर्षपैर्गौरसर्षपाभिश्च लिखेत् । अक्षतसर्षपाभिः तत्र सर्वतोमण्डलं निश्छिद्रं कुर्यादित्यर्थः ॥ २ ॥

## अथान्यदपि विधानमाह–

ब्राह्मीं सदूर्वामथ नागपुष्पीं
कृत्वोपधानं शिरसि क्षितीशः ।
पूर्णान् घटान् पुष्पफलाभिधाना–
नाशासु दध्याच्चतुरः क्रमेण ॥ ३ ॥

ब्राह्मीं सप्तपर्णीं दूर्वया सादूर्वलेन सहितां अथ शब्दः पादपूरणे समुच्चये वा नागपुष्पीं शङ्खपुष्पीं एता औषधयः शिरस्योपधानं शिरोगण्डिकां कृत्वा क्षितीशो राजा स्वप्नं परीक्षेत। तथा च तत् शमनस्थलात् स्पष्टासु चतुर्षु दिक्षु चतुरोघटान् पूर्णानुदककुम्भान दध्यात् । कीदृशान् कुसुमैः पुष्पैः फलैश्च श्रीफलादिभिरासमन्तात्विधानं घट्टनं येषां तान् क्रमेण परिपाट्या प्रागाद्यासु दिक्षु दध्यात स्थापयेत ॥ ३ ॥

## ततः किं कुर्यादित्यत आह–

यज्जाग्रतो दूरमुपैति दैव–
मावर्त्य मन्त्रं प्रयत स्त्रिरेतत् ।



लघ्वैकभुक् दक्षिणपार्श्वशायी
स्वप्नं परीक्षेत यथोपदेशम् ॥ ४ ॥

ततो राजा यज्जाग्रत इत्येतदाद्यं मन्त्रं त्रिरावर्त्य त्रीनवारान् पठित्वा, यज्जाग्रत इत्यारभ्य सुखारथिरित्यंतं, षण्मन्त्रानिति वदन्ति शिष्टाः। किं भूतो राजा लघ्वैकभुक् लघु स्वल्पं एकवारं भुक्त्वा दक्षिण पार्श्वेण शेते तच्छीलः दक्षिणपार्श्वशायी, यथोपदेशं येन प्रकारेण दैवज्ञेन पुरोहितेन तदुभाभ्यां शिक्षितं तेन प्रकारेण स्वप्नं परीक्षेत विचारयेत् ॥ ४ ॥

## किं तदुपदिश्यते इत्यत आह–

नमः शंभो त्रिनेत्राय रुद्राय वरदाय च ।
वामनाय विरूपाय स्वप्नाधिपतये नमः ॥ ५ ॥
भगवन् देवदेवेश शूलभृद्वृषवाहन ।
इष्टाऽनिष्टं समाचक्ष्व स्वप्ने सुप्तस्य शाश्वतम् ॥ ६ ॥

हे शम्भो महेश्वराय ते नमः किं भूताय त्रिनेत्राय त्रीणिनेत्राणि यस्याऽसौ तस्मै, रुद्राय रोदयति द्रावयति दैत्यानिति रुद्रः, वरदाय वरं स्वाभिमतं ददातीति वरद स्तथा भूताय तथा च वामनाय खर्वाय विरूपाय विविधरूपाय, स्वप्नाधिपतये स्वप्नानामीश्वराय । भगवन्निति, हे भगवन् ।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
वैराग्यस्याथ मोक्षस्य षण्णां भग इति स्मृतः ॥

ते षडेव विद्यन्ते यस्य तस्याऽऽमन्त्रणं, देवदेवेश देवानां सुराणां ये देवा तेषां ईशः प्रभुः हे शूलभृत् शूलं आयुधविशेषं विभर्त्तीति, वृषवाहन वृषो दान्तो वाहनं यस्य इष्टं शुभं अनिष्टं अशुभं मम सुप्तस्य लब्धनिद्रस्य स्वप्ने स्वप्नावस्थायां आचक्ष्व कथय शाश्वतं सत्यरूपमिति ॥ ५—६ ॥

## ततः किमित्याह–

एकवस्त्रः कुशास्तीर्णे सुप्तः प्रयतमानसः ।
निशान्ते पश्यति स्वप्नं शुभं वा यदि वा शुभम् ॥ ७ ॥

एकेन वस्त्रेण कुशास्तीर्णे सुप्तः प्रयतमानसोऽनन्यचित्तः संयतात्मा इत्यर्थः। निशान्ते रात्रिमध्ये स्वप्नं पश्यति, शुभं शोभनं अथवाऽसोभनमशुभम् ॥ ७ ॥

## अधुना स्वप्नस्य नानात्वमाह—

अनूक आद्ये स्मृत आयुषोंऽशे
शेषे त्रिभागे गतिजः प्रदिष्टः।
धातुप्रकोप-ग्रहपाक-चिन्ता
दृष्टाऽभिचारोद्भव-गुह्यकोत्था ॥ ८ ॥

अनूक आगतित प्राग्जन्म तत्राऽनुभूतं शुभाशुभं कर्म तद्यथा आद्ये प्रथमे आयुषोंऽशे जीवितत्रिभागे पश्यति, एवं आयुषत्रिभागे आनूकः स्वप्नः स्मृत उक्तः। शेषोऽन्ते आयुषः त्रिभागो गतिजः गतेर्जातः गतिजः प्रदिष्टः उक्तः गतिजं स्वप्नं पश्यति। यस्मिन योऽन्यन्तरे गमिष्यति तत्र च यद्भावि तस्य तद्‌बाहुल्येन पश्यतीत्यभिप्रायः।

तथा च सत्यः—

आयु स्तृतीयभागे गतिजाः प्रकीर्तिताः स्वप्नाः।
पूर्वकाले त्वागमिकोद्भवास्त्वेव विनिर्दिश्या ॥

धातुप्रकोपत इति। शिष्टो मध्यमत्रिभागः वातपित्तश्लेष्माणि त्रयो धातवः तेषां वातादीनां प्रकोपस्ततो जातः धातुप्रकोपजः स्वप्नो ग्रहपाकज इति, ग्रहस्य पाको दशान्तर्दशाजन्मग्रहफलपरिपाक स्तस्माज्जातो ग्रहपाकजः। चिन्ता यच्च मनसा चिन्तितं ध्यातं तदेव रात्रौ पश्यति। दृष्टश्च यत्पूर्वं प्रत्यक्षीकृतं तदेव रात्रौ पश्यति, अभिचारोद्भवं शत्रुभिर्योऽभिचारः क्रियते विद्वेषोच्चाटनमारणादिक स्तदुद्भूतो यः स्वप्नः सोऽभिचारोद्भवः। गुह्यकेभ्य उत्थितो गुह्यकाः देवविशेषाः प्रागुक्ता स्तज्जनित संभ्रमोत्पन्नः स्वप्नः एवमेते मध्यमे त्रिभागे स्वप्ना उक्ताः ॥ ८ ॥

## अधुनाऽनूकजादीनां स्वप्नानां लक्षणमाह—

गतैष्यजात्यन्तरसत्वसङ्गः
स्वप्ने ह्यनूके गतिजे च नित्यम्।



धातुप्रकोपादनिलात्मकस्य
तर्वद्रितुङ्गाम्बरलङ्घनानि ॥ ९ ॥
पित्तेऽधिके काञ्चनरत्नमाल्य-
दिवाकराग्निप्रभृतीनि पश्येत्।
श्लेष्माधिकश्चेन्दुभशुक्लपुष्प-
सरित्सरोंऽभोनिधिलङ्घनानि ॥ १० ॥

गतानि अतीतानि यानि जात्यन्तराणि तादृशैः सत्वैः प्राणिभिः सह संयोग आसीत्तदेव पश्यति। एष्यः जात्यन्तरसत्वैः सह सङ्गः, यत्र तेन मृतेन गन्तव्यं तदेव पश्यति। एवं अनूकः प्राग्जन्मनि यत्र स आसीत्। तथा गतिजे च यत्र गमिष्यति, तत्सत्वसङ्गः नित्यं सर्वकालमायन्ते च वयसि पश्यति। अनूकस्वप्ने गतजात्यन्तरसत्वैः सह संयोगः। गतिजे च स्वप्ने एष्य जात्यन्तरसत्वैः सहः संयोगः। पश्यत्यनूके यत्र मृतो गमिष्यति, तत्र च यादृग्रूपो भविष्यति तादृशैः सत्वैः सह सङ्गः पश्यति। गतिजे स्वप्ने धातुप्रकोपात् अनिलात्मा यादृग्रूप आसीत्, तादृग्रूपैः सत्वैः सह सङ्गः पश्यति। अनूके यत्र मृतो गच्छति गमिष्यति तत्र यादृग्रूपो भविष्यति, तस्य तरूणां- अद्रीणां- पर्वतानां उच्चप्रदेशानामम्बरस्य आकाशस्य च लङ्घनं उत्प्लवनं एतानि पश्यति। इत्येतद्वातात्मकस्वप्नलक्षणम्। त्रयाणां धातूनां पित्तेऽधिके काञ्चनं स्वर्णं रत्नमाल्यानि रक्तस्रजः दिवाकरः सूर्यः अग्निर्वह्निः एतदादीनि अन्यान्यपि तेजोरूपाणि पश्येत्। अथ यदि श्लेष्माधिकः पुरुषस्तदा इन्दुश्चन्द्रः भानि नक्षत्राणि शुक्लपुष्पाणि सरिन्नदी सरः प्रभूतोदकखातः अम्भोधिः समुद्रः, तथैषां जलाशयानां लङ्घनानि उत्तरणानि पश्यति ॥ ९—१० ॥

## अधुना कालेन धातुप्रकोपमाह—

जघन्यमध्यप्रथमे निशांशे
प्रावृट्शरे माधवसंज्ञिते च।
काले मरुत्पित्तकफप्रकोपः
साधारणः स्यात्खलु सन्निपातः ॥ ११ ॥

निशा रात्रिः तस्याः, जघन्यांशेऽन्त्ये त्रिभागे मरुत्प्रकोप वायोः प्रकोपो भवति । मध्ये रात्रि त्रिभागे पित्तस्य प्रकोपः, प्रथमे त्रिभागे कफस्य श्लेष्मणः प्रकोपः । अथ प्रावृट्शरमाधवसंज्ञिते च काले यथाक्रमं मरुत्पित्तकफप्रकोपः, प्रावृषि वर्षा रात्रे मरुत्प्रकोपः, शरदि पित्तप्रकोपः, माधव-संज्ञिते वसन्ते श्लेष्मप्रकोपः, अन्यर्तुषु सञ्चयं गच्छति । स्व स्व काले च ते प्रकोपं यान्ति कुपिता श्चेल्लक्षणं प्रकटीकुर्वन्ति अतिशयेन, यथा स्वभावितोऽनिलात्मा जघन्ये रात्रि त्रिभागे प्रावृषि अतिशयेन वातचिह्नानि पश्यति । एवं पित्तान्मध्ये रात्रित्रिभागेऽतिशयेन :पित्तचिह्नानि पश्यति । तथा साधारणः स्यात् खलु सन्निपातः, सन्निपातः सर्वेषां वातपित्तश्लेष्माणां प्रकोपः तत्र साधारणः सर्वचिह्नमयः स्वप्न स्यात् । यथाऽनिलात्मकस्य विषये न वातप्रकोपः कालवशाद्रात्रिमध्यभागे पित्तप्रकोपः तथा पित्तात्मकस्यातिशयेन पित्तप्रकोपः । कालवशादन्ते रात्रि-त्रिभागे वातप्रकोपः । कालवशात् वसंते श्लेष्मप्रकोपः । तथा श्लेष्मात्मकस्यातिशयेन श्लेष्म-प्रकोपः । कालवशाच्छरदि पित्तप्रकोपः । एवं स्वभावप्रकोपातिशयात्सर्वेषां चिह्नानि पश्यति । मिश्रे मिश्रं स्वप्नं पश्यतीत्यर्थः ॥ ११ ॥

## अधुना ग्रहपाकादिजस्वप्नलक्षणमाह–

दशासु चोक्तग्रहपाकजातं
चिन्ता च दृष्टा च यथा तथैव ।
वीभत्समन्त्राऽभिभवोऽभिचारो
विश्वोद्भवो गुह्यकजः प्रदिष्टः ॥ १२ ॥

दशासु फलं जातके यदुक्तं तद्ग्रहपाकजातग्रहस्य दशान्तर्दशाफलम् । " सौर्या स्वं नख-दन्तचर्मकनक " इत्यादिकं वातश्लेष्मापैत्तिकाः ग्रहाः पित्तप्रकृति सविता इत्यत्राभिहिताः तेन रविभौमौ पैत्तिकौ, चन्द्रसितौ कफवातिकौ बुधः सन्निपातः गुरुःश्लेष्मिकः शनिर्वातिक इति ॥१२॥

## अमुमेवार्थं दर्शयन्नाह–

कफवातिकौ शशिभृगू भौमार्कौ पैत्तिकौ चोक्तौ ।
गुरुबुधसूर्यसुताः श्लेष्मिकविमिश्रवायव प्रोक्ताः ॥ १३ ॥



वातश्लेष्मपित्तप्रकृतिः सात्विको—राजस—स्तामसो वाग्रहः स्वदशायां स्वप्रकृत्यनुरूपं स्वप्नं प्रदर्शयति ।

अत एवोक्तम्—

" परिणमति फलोक्तिः स्वप्नचिन्ता स्ववीर्यैः ॥" इति ॥

तथा चिन्तजं यत् मनसा चिन्तितं तत्तथा पश्यति । स्वप्ने दृष्टं च यत् प्रत्यक्षतो दृष्टं यथा येनैव प्रकारेण तथा तेनैव प्रकारेण स्वप्ने पश्यति । वीभत्सो भीषणसत्वैः प्राणिभिरभिभवो भर्त्सनं स्वप्ने यत् क्रियतेऽसौ अभिचाराख्यः स्वप्नः । विश्वोद्भवो गुह्यकजो विश्वं बहुप्रकारं नाना-कारमित्यर्थः, गुह्यकागणा इहैवोक्ताः तथा च संवत्सरसूत्रे उक्त गणयागे इत्यादि । विश्वो नाना-कारः, उद्भव उत्पत्तिर्यस्य गुह्यकजो गुह्यकजातः प्रदिष्टः उक्तः, एते गुह्यकसंज्ञागणा अनिष्टं फलं प्रयच्छन्ति तत्सदृशमेव स्वप्नं यतः पश्यति ।

तथा चोक्तम्—

"अनर्चिता स्ते नृपतिं सवाहनं नाशयतीत्यादि ।
सुपूजिताः सिद्धिकरा भवन्ति ते ॥ इति ॥ " ॥ १३ ॥

## एवं अष्टानां अनूकजादीनां कतमः सफलः कतमो निष्फलस्तत्प्रद-र्शनार्थमाह–

अनूकचिन्तागतिदोषदृष्टा–
ह्यभीक्ष्णकर्माणि च निष्फलानि ।
द्युदृष्टदीर्घाः कथितास्तु तद्व–
दनन्यपाकाः कथिताऽवशेषाः ॥ १४ ॥

अनूकजश्चिन्ताजश्च गतिजश्च दौषजश्च दृष्टश्च अनूकचिन्तागतिदोषदृष्टाः, अनूकजं चिन्ताजं दोषजं वातपित्तश्लेष्मजं प्रत्यक्षदृष्टं च, अभीक्ष्णं कर्म यत्पुनः पुनः स्वप्ने तदेव क्रियते एते सर्वे निष्फलाः । तथा द्युदृष्टाः दिवसे ये दृष्टाः, दीर्घा ये आख्यायिकावद् दृश्यन्ते तन्निष्फला इत्यर्थः । अनन्यपाकाः कथितावशेषा इति । नान्यः अनन्यः अनन्य पाकः फलं येषां ते अनन्यपाकाः, कथितेभ्यो उक्तेभ्योऽवशेषाः ग्रहपाकजाभिचारगुह्यकेशाः, स्वप्ना यथा दृष्टपाकाः नन्वत्र यदुक्तं ग्रहपाकजाः स्वप्नेऽनन्यपाकः तच्च न यस्माद्वीर्यग्रहपाकफलं स्वप्ने चिन्तायां

च प्राप्नोति । तथा अनिष्टग्रहदशाफलमेतत् ।

तदुक्तमाचार्येण—

परिणमति फलोक्तिः स्वप्नचिन्ता स्ववीर्यैः ॥ इति ॥

तावदेवात्र न वक्तव्यः पाके । गुह्यकजोऽभिचारजो ग्रहपाकजस्तु कदाचिद्यथादृष्टफलः कदाचिन्निष्फलः । तत्रोच्यते । अनूकज-गतिज-ग्रहपाकजाः स्वप्नाः । जातक सव्यपेक्षा जातकसफलता निष्फलता वाऽऽगतैव येभ्यो वीर्यग्रहदशापाकजो भवति तदा निष्फलोऽन्यथा दृष्टाफलः । अत्र केचिदनित्यपाकाः कथितावशेषा इति पठन्ति । कथिताऽवशेषा ये स्वप्नास्ते अनित्यपाकाः, न नित्यं पच्यन्ते कदाचित्सत्यरूपाः कदाचिद्विपरीताः ॥ १३ ॥

## अधुना ये सत्यरूपा भवन्ति तानाह—

प्रत्यक्षवद्भवति यः स्फुरतीव चान्तः
स्वप्नस्य तस्य नियमात्सदसत्फलाप्तिः ।
स्वप्ना शुभाशुभकृता फलदा नराणा-
मुद्देशमात्रमिव ता ननु वर्णयामि ॥ १५ ॥

यः स्वप्नः प्रत्यक्षवद्भवति दृष्टिगोचरे स्थित इव तथा स्फुरतीव अन्तः, अभ्यन्तरे मनसि स्फुरतीव तस्य स्वप्नस्य नियमान् निश्चयेन सदसच्छुभाशुभानां फलानां प्राप्तिर्भवति । न तु पुनर्नये । मोहजनकभ्रान्तिरूपा न स्पष्टा न तेषां फलप्राप्तिर्भवति । एवं स्वप्ना शुभाः शुभकृताः शुभेनाऽशुभेन वा कर्मणोत्पादिता एते च नराणां पुरुषाणां फलदाः शुभाशुभफलं प्रयच्छन्ति । तान् स्वप्नानुद्देशमात्रेण लेशमात्रेणेहाऽस्मिन् शास्त्रेऽनुवर्णयामि कथयिष्यामि ॥ १५ ॥

## अधुना तानेवाह—

१स्वाङ्गप्रज्वलनं परोपशमनं शक्रध्वजालिङ्गनम् ।
दृक्संपृक्तनरैर्निकृत्य च ततो प्रक्षेपणं दिक्षु च ॥ १६ ॥

१, शिरसि ज्वलति निकेतं ग्रामपुरं यः सुप्तोऽपि जागरितः ।



बन्धो वा निगडैर्ग्रसेच्च दहनं नानाशिरो बाहवः ।
छत्रं वा द्विरदोऽभिषिच्य विभृयादिद्व्योऽथवा ब्राह्मणः ॥ १७ ॥

अधिराज्यं भवतीति वक्ष्यमाणेन सम्बन्धः । स्वाङ्गानामात्मीयामवयवानां प्रज्वलनं प्रकर्षेण दीप्यमानतापोपशमनं परस्य शत्रोः, राक्षसादेरुपशमनं शाम्यमानता तथा शक्रध्वजस्य इन्द्रयष्टेरालिङ्गनं परिष्वजनम् । दृक्संपृक्तनरैः सङ्गतपुरुषैर्मित्रबन्धुभिर्मेलनं तैः सह स्वशरीरं निकृत्य सञ्छिद्य दिक्षु आशासु प्रक्षेपणं प्रक्षेपः । निगडैः शृङ्खलादिभिरात्मनो बन्धो बन्धनं दहनं अग्नि वा ग्रसेत् भक्षयेत् । तथा नानाविधानि शिरांसि मस्तकानि बाहवो भुजाश्चात्मनो दृश्यन्ते । नानाविधानां बहुप्रकाराणां शिरसां बाहूनां भावः, नानाशिरोबाहुता । द्विरदो हस्ती अभिषिच्याऽभिषेकं कृत्वा छत्रं आतपत्रं विभृयाद्धारयेत् । अथवा दिव्यो देवरूपो ब्राह्मणो द्विजो मुनिप्रायोऽभिषिच्य छत्रं विभृयाद्धारयेदित्यर्थः ॥ १६—१७ ॥

## अथान्यदप्याह—

२उडुपतिदिनकृद्भूगोशृङ्गस्नुताम्बभिषेचनम् ।
यदि च महिषीसिंहीव्याघ्रीगवां मुखदोहनम् ॥१८॥
जठरनिस्सृतैरन्त्रैर्ग्रामद्रुमाद्रिविवेष्टनम् ।
विशति यदि वा सुश्लिष्टाङ्गी तनुं प्रवराङ्गना ॥१९॥

स्वप्नमस्वप्नदिवसे मनुजः साम्राज्य माप्नोति ॥
स्वप्ने शक्रध्वजदेवतायतनमञ्चादीनाम् ।
वीक्षणमथाधिरोहो धनधान्यकरो भवेत्पुंसाम् ॥
आजानुनिविडनिगडैर्यो भुजबन्धेन वा निबध्येत ।
न भवति भयं तस्य पुनः प्रतिष्ठाप्य कष्टेन ॥

मया संपादिते जगन्मोहने विशेषो द्रष्टव्यः ।

२, यः सूर्याचन्द्रमसोबिम्बं ग्रसते समग्रमपि पुरुषः ।
पालयते दीनोऽपि च समहीं नित्य ससागरां धन्यः ॥
स्वप्ने पूर्णनिशाकरदिनकरयो र्वा नवोदयं गतयोः ।
यच्चापि दर्शनस्याद्राज्यश्रीः प्राप्यते तेन ॥

उडुपति श्चन्द्रो दिनकृदादित्यो भूर्भूमी गोश्रृङ्गं गोविषाणं तेभ्यः स्नुतं यज्जलं तेनाऽभिषेचनं पश्यति। तथा महिष्याः सिंह्याः व्याघ्र्याः गोः आसां स्तन्यं आत्मीयवक्त्रे दोहनम्। स्वजठरान्निसृतानि अन्त्राणि तैर्ग्रामवेष्टनं परिकरबन्धः, द्रुमस्य वृक्षस्य वाऽद्रेः पर्वतस्य वा वेष्टनम्। यदि वा प्रवराङ्गना प्रधानभार्या श्लिष्टाङ्गी शोभनावयवा तनुं स्वशरीरं प्रविशति तदा अधिराज्यं भवतीति सम्बन्धः॥ १८—१९॥

## अथान्यान्यप्याह–

[१]मनुजहृदयमूर्द्ध्नां भक्षणं वा स्वदेहे
स्वहतभुजगसिंहे तापसां साधनानि।
तृणतरुकुसुमाम्बुप्रोद्भवो वा स्वनाभौ
क्षितिगिरिपरिवर्त्तोन्मूलने चाधिराज्यम् ॥२०॥

मनुजो मनुष्यः हृदयं मनुष्यहृत्पद्मं मूर्द्ध्नां मनुष्यशिरः, एषां मनुज हृदय मूर्द्धनां भक्षणं सकलावयवसंयुक्तमनुष्यभक्षणं स्वप्ने मनुजहृद्भक्षणं वा मनुजशिरोऽन्तर्गतमज्जा भक्षणं स्वस्यात्मीयदेहस्यावयवस्य स्वेनैव भक्षणं पश्यति। स्वयमेवात्मना स्वहस्तेन व्यापादितो भुजगः सर्पः सिंहः प्रसिद्ध इभो हस्ती एषां मांसस्य अदनानि भक्षणानि अथवा स्वानां वा स्वकीयनाभौ तृणस्य कुशकाशादिरूपस्य तरोर्वृक्षस्य कुसुमस्य पुष्पस्य अम्बुनो जलस्य प्रोद्भव उत्पत्तिः। क्षितेर्भूमे गिरिः पर्वतस्य परिवर्तनं सूर्यस्याधोभावः उन्मूलनं उत्पाटनं वा दृष्टेऽधिराज्यं नृपप्रधानत्वं भवति। एते सर्वे प्रश्ना अधिराज्यदा इति सर्वत्र योज्यम् ॥ २० ॥

## अन्यानि सुस्वप्नान्याह–

[२]दिनकरशशितारा भक्षणा स्पर्शनानि
धरणमपि च मूर्ध्नः सप्त पञ्चत्रिधा वा।
वृषभगृहमृगेन्द्रा श्वेभसिंहाधिरोहा
ग्रसनमुदधिभूम्यो श्चाधिराज्यप्रदानि ॥२१॥

एतान्यपि च स्वप्नदर्शनानि अधिराज्यप्रदानीति सर्वत्र योजना। दिनकरस्यादित्यस्य शशिन श्चन्द्रस्य तारकानां नक्षत्राणां भक्षणान्यदनानि स्पर्शनानि यदा वा पश्यति। मूर्ध्नः शिरसो धरणं धारणं सप्तधा पञ्चधा वा त्रिधा वा धारणं स्पर्शनं वृषभः प्रसिद्धः, गृहं, मृगेन्द्रः केशरो अश्व घोटकः, इभो हस्ती सिंहो व्याघ्रः, एषामधिरोहः उपर्यारोहणम्, उदधेः समुद्रस्य भूमेश्च ग्रसनं भक्षणं पश्यति तान्यप्यधिराज्यप्रदानीत्यर्थः ॥ २१ ॥

## अथान्यत् सत्स्वप्नान्याह–

[१]विपुलरणविमर्दद्यूतवादैश्च जित्वा
पशुमृगमनुजानां लब्धिरध्यासनं च।
विडशनपरिलेपोऽगम्यनारीगमो वा
स्वमरणशिखिलाभः सस्य सन्दर्शनञ्च ॥२२॥

परिणतराज्यफलप्रदाः प्रदिष्टा इत्यनेन वक्ष्यमाणेन सम्बन्धः। यच्चान्यत्राधिराज्यप्रदानीत्यनेन वा, विपुलेन महता रणविमर्देन सङ्ग्रामक्षोभेन द्यूतेन देवनक्रियया, वादेन परस्परं झकटेन वादप्रतिपादरूपेण एतैः पशूनां चतुष्पदानां पश्वादीनां मृगाणामारण्यानां मनुजानां मनुष्याणां वा लब्धिर्लाभः। एतैः प्रागुक्तै र्विपुलरणविमर्दद्यूतवादैर्विजित्य। अथवा एषां अध्यासनं उपरिसंस्थानं बिडशनं बिडभक्षणं विड्लेपश्च अगम्यानां नारीणां गुर्वङ्गनादीनां गमो गमनं परिचुम्बनादि, स्वमरणं आत्मनो मरणं शिखिलाभो मयूरप्राप्तिः सस्यानां धान्यादिराशिनां सन्दर्शनमात्रं एते परिणतराज्यप्रदाः प्रदिष्टा इति सम्बन्धः॥ २२ ॥

## अथान्यत्सुस्वप्नान्याह–

[२]सितसुरभिमनोज्ञा लेपमाल्याम्बराणां

---

१, यो मानुषीयमामिषमात्मीयं चापि मानुषैः सार्धम्।
स्वेच्छं स्वप्ने खादति साम्राज्यं प्राज्यमाप्नोति ॥

२, स्वप्ने मानवमृगपतितुरङ्गमातङ्गमृगसुरभिभिः।
युक्तं रथमारूढो याति स भूम्याः पति र्भवति ॥

१, छर्दिपुरीषे पुरुषः स्वादितुंनिच्छु र्जुगुप्सितयो र्येन।
दर्शनमनुलेपो वा यस्य तयोऽस्तु लाभः स्यात् ॥

२, नलिनीदले निषण्णो मध्ये शलिलाशयस्य परमान्नम्।

द्विजसुरगुरुराज्ञां दर्शनान्याशिषश्च ।
मणिरजतसुवर्णाम्भोजपात्रेषु भुङ्क्ते
यदि दधिपरमान्नं मज्जतेऽसृक् ह्रदे वा ॥२३॥

सितानां श्वेतवर्णानां केषांचित्सुरभीनां सुगन्धानां मनोज्ञानां चित्ताह्लाददानां लेपनानां माल्यानां अम्बराणां वस्त्राणां सितानामिति सर्वत्र योज्यम् । तथा द्विजानां ब्राह्मणानां गुरूणां सुराणां देवानां नृपाणाञ्च दर्शनानि तथा एषामाशिषः आशीर्वादाः । तथा मणिमये स्फाटिके पात्रे नानारत्नपरिस्कृते वा पात्रे रजते रौप्ये सौवर्णे पात्रे अम्भोजपात्रे शङ्ख-शुक्ति–कमल–पात्रे वा यदि दधिपरमान्नं वा तदुभयं वा भुङ्क्तेऽश्नाति । दधिक्षीरविकारः परमान्नं पायसम् । अथवा असृक्ह्रदे रुधिरसरसि मज्जते डुबते ॥ २३ ॥

## अथान्यदपि सत्स्वप्नान्याह–

[2]सिततुरगफलध्वजातपत्रव्यजनसरोजमणिद्विपेन्द्रलाभाः ।
अभयजयभुक् वचेति शब्दाः परिणतराज्यफलप्रदाः प्रदिष्टाः ॥२४॥

सित श्वेतवर्णस्य तुरगस्य फलस्य नारिकेलादेः श्वेतवर्णस्य ध्वजस्य चिन्हस्य श्वेतवर्णस्यातपत्रस्य छत्रस्य श्वेतवर्णस्य व्यजनस्य चामरस्य श्वेतस्य सरोजस्य कमलस्य कुमुदिन्या वा मणीनां रत्नानां नीलेतराणां द्विपेन्द्रस्य हस्तीन एतेषां लाभान् पश्यति । तथा च, अभयजयभुङ्क्ष्व शब्दाश्च एते सर्वे परिणतराज्यफलप्रदाः । परिणतं निष्कण्टकं च तद्राज्यफलं तत्प्रददातीति एते राज्यप्रदाः स्वप्ना उक्ताः ॥ २३ ॥

घृतखण्डयुतं भुङ्क्ते पूज्यः स च राज्यमाप्नोति ॥
रुधिरनदीषु निमज्जनं पानञ्च यस्य रुधिरेण ।
रुधिरस्राव गात्रं तस्यस्याद्धनवृद्धिः ॥
सुरभिप्रसूनमालामम्लानां वीक्षते चाथ ।
लभते वा निःक्षिपति कण्टपीठे वृणुते तं नरपतेः लक्ष्मी ॥
२, सितविहगं सिततुरगं सितमातङ्गं सितानि भवनानि ।
यः पश्यत्यधिरोहति लभते राज्यं च साम्राज्यम् ॥



## अथ स्त्रीपुत्रदानाह–

मुद्रा दृषदञ्जनीविपञ्चीस्त्रीसञ्ज्ञाप्तिमुदाङ्गनाभिरुक्ता ।
लब्धे मरकेऽथ दर्पणे वा भृङ्गारादिषु चोद्भवः सुतस्य ॥२४॥

मुद्राः प्रसिद्धा वस्तुरूप प्रतिबिम्बं दृषत् पाषाणं अञ्जनी शलाकायाञ्जनं दीयते विपञ्ची वीणा अन्ये च ये स्त्रीसञ्ज्ञादयः स्त्रीनाम्ना ये उच्यन्ते, कर्तरी छुरिका मोचनी स्थाली प्रभृतयः, एतेषु लब्धेषु सदङ्गनाप्राप्तिः । मरकश्चषक संज्ञा 'मृण्मयं पानपात्रं यत्तन्मरक उच्यते इति ॥ दर्पणमादर्शः भृङ्गारः सुवर्णालुकः, एषु लब्धेषु उपलक्षणत्वात्पूर्णघटादय श्चेत्येतेषु लब्धेषु सुतस्योद्भवः पुत्रोत्पत्ति र्भवतीति ॥ २४ ॥

## अथान्यत्सुस्वप्नानाह–

[1]क्रैमिण्यं धनलब्धिरम्बुतरणे दुःखस्य नाशो भवे–
द्धर्षोरोदितशोचितादिषु तथा देहे विवृद्धिः स्मृताः ।
गोलिङ्गीद्विजदेवतापितृसुहृद्भूपाश्च संसन्ति यत्
स्वप्ने तन्नियमाद्भवत्यवितथं नेष्टं शुभं वा फलम् ॥२५॥

कृमिणा कृतमिदं क्रैमिण्यं शङ्खशुक्त्यादिश्वेतं तस्य लब्वे धनस्य वित्तस्य लब्धिर्लाभः, अम्बुतरणे पानीयोत्तरणे दुःखस्य क्लेशस्य नाशः । रोदनेऽश्रुमोचणे तथा शोचने प्रलापकरणे आदिग्रहणात्स्वदेहकुट्टनादौ दृष्टे हर्षः चित्ततुष्टिर्ज्ञेया । स्वदेहगृहादावग्निदाहे दृष्टे सति विवृद्धिरर्थादीनां विशेष वृद्धिः स्मृता उक्ता । तथा गावः लिङ्गिनः शैवा वैष्णवाः द्विजा ब्राह्मणाः देवता देवाः पितरः पित्रादय उपरताः सुहृदो मित्राणि भूताः राजानः, एते स्वप्ने यत्कथयन्ति शुभमशुभमं वा तादृगेव फलं सत्यरूपं भवति ॥ २५ ॥

१ भूपा विप्रा गावो देवाः पितरश्च लिङ्गिनः स्वप्ने ।
यथा वदन्ति पुरुषं पुंस स्तत्तस्य तथैव स्यात् ॥
पानं जलधिनदीनां तरणं चलनं फलप्रसूनानाम् ।
पचनं पूपादीनां यः कुरुते तस्य भवति शिवम् ॥

### एवं शुभस्वप्नानुक्त्वाऽधुनान्यानशुभानाह–

[1]नाभेरन्यत्रगात्रे तृणतरुकुसुमप्रोद्भवस्नेहपानं
क्रीड़ायानोपभोगाः खरकरभकपिव्यालरूपैश्च सत्त्वैः ।
कायस्यालेपनं वा कलुषजलमषीगोमयस्नेहपङ्कै–
र्दृग्जिह्वादन्तदोष्णोर्निपतनमथवाऽनर्थशोकप्रदानि ॥२६॥

नाभिं वर्जयित्वाऽन्यत्र गात्रे तृणस्य तरोर्वृक्षस्य कुसुमस्य वा प्रोद्भव उत्पत्तिः स्नेहस्य तैलादेः पानं खरैः गर्धभैः करभैरुष्ट्रैः कपिभिर्वानरैः व्यालरूपैः सर्पपक्षिरूपैर्वा सत्त्वैः प्राणिभिरेतैः सह क्रीडनं यानं गमनं उपभोगश्चर्वणादि चुम्बनादिकं वा। तथा कलुषजलेन अनिर्मलेन पानीयेन गोमयेन गोशकृता स्नेहेन तैलघृतवसादिन्यः पङ्केन कर्दमेन वा कायस्य शरीरस्यालेपनं तथा दृग्दृशोः जिह्वायाः दन्तस्य दोष्णोर्भुजयोश्च निपतनं वा यदि भवति तदाऽनर्थः द्रव्यनाशः शोको दुःखं च प्रकर्षेण ददन्तीत्येतानि ॥२६॥

### अथान्यानप्याह–

[2]गीताक्रीड़ित भूषितप्रहसित प्रेङ्खोलितास्फोटिता
व्यर्केन्दुध्वजतारका निपतनं स्रोतो वहाऽधोगमः ।
रज्जुछेद्यचितिप्रयातजननी गात्रप्रवेश स्तथा
स्वप्नेकाँस्य विचूर्णनं च शिरसि क्लेशामयानर्थदम् ॥ २७ ॥

सर्वत्रैतत्क्लेशामयानर्थदमिति सम्बध्यते। गीतं गानं आक्रीडीतं क्रीडनं भूषितं अलङ्कृतं प्रहसितं उपहसतं प्रेङ्खोल्लितं यद्वृक्षादावुपरि रज्जुं बध्वाऽधोऽवासिकां दत्वा तस्यां पीठीकायां स्थित्वा दोलायनेन क्रीडन्ति तत्प्रेङ्खोलितमिति प्रसिद्धम्। आस्फोटितं करास्फोटनं करतालेनोपहसनं वक्षस्थवाहा रपरहस्तेन ताडनं तथा, अर्कस्यादित्यस्येन्दोश्चन्द्रस्य ध्वजस्य देवादिचिह्नस्य तोरणानां वा नक्षत्राणां तारकानां च निपतनं अधः पतनं स्रोतो वहा नदी तस्यां अधोगमनं प्रवहाभिमुखवहनं शोषणं वा तथा रज्जुच्छेदो येन रज्जुनावलम्बितस्तद्रज्जुच्छेदनम्। चितिप्रपातः निर्मितचत्वरादीनां विदरणेन पतनं जनन्या मातुर्देहे प्रवेशनं, स्वप्ने स्वप्नावस्थायां शिरसि मूर्द्धनि कांस्यस्य पञ्चलोहादेश्चूर्णनं खण्डनं कांस्यादिनिर्मितपात्राणां स्फोटनं एतत्प्रत्येकं क्लेशं अनर्थदं कायक्लेशं आमय रोगं अनर्थं वित्तनाशं ददाति ॥ २७ ॥

### अथान्यानपि दुष्टानाह–

[1]श्मश्रुकेशनखदैर्घ्यकल्पना
वानरी विकृतनार्युपासना ।
रक्तवस्त्रमनुजाङ्गमर्दनं
रोगमृत्यु–भयशोक–तापदम् ॥ २८ ॥

श्मश्रुनः कूर्चस्य केशानां शिरोरुहाणां नखानां करपादजातानां दीर्घस्य दीर्घत्वस्य कल्पनं छेदनं। तथा वानर्याः कपिपत्न्याः विकृतनार्याः भीषणीयायाः स्त्रिय उपासनं उपसमीपे संस्थानं रक्तवस्त्रवता मनुजेन स्वकीयाङ्गमर्दनम्। रोगं व्याधिं मृत्युं मरणं भयं दरं शोकं दुःखं तापः संतापं च ददाति ॥ २८ ॥

### अथान्यानप्याह–

स्थलमृगपशुकीटानूपचार्यंपुजानां
प्लवनमुदकराशौ स्याद्विवाहोत्सवो वा ।
सरसिज–जतुभाण्ड–क्रोडनं नर्तनं वा
मलिन निवसनत्वं चाशु शोकप्रदानि ॥ २९ ॥

---

१ यः स्वप्ने कलुषेऽम्भसि विनिमज्जति कृच्छ्रतोऽपि चोच्चलनि ।
दक्षिणदिशं प्रयाति स म्रियते राक्षसदोषेण ॥

२ स्वप्ने जननीयोन्यामथवाऽन्यस्यां यो नरो विशति ।
पञ्चाह प्राणा न स जीवति निश्चितं ततः पश्चात् ॥
हसने शोचनमचिरात्प्रवर्तते नर्तने बध बन्धः ।
पठने कलिश्च नृणामेतद्विज्ञेन विज्ञेयम् ॥

१ बपनं परितोऽपि स्याच्छिरसः कुर्चस्य यच्छरीरस्य ।
आधिव्याधिपरितः प्रयाति न चिरेण पञ्चत्वम् ॥

स्थलजाः सिंहादयः मृगाः कृष्णरौरवादयः पशवः छागादयः कीटः वृश्चिकादयोऽनूपचारिणः अविगवादयः अण्डजः पक्षिणः एतेउदकराशौ प्रभूतजलमध्ये प्लवनं उत्प्लवनं स्यात् भवेत्। अथ विवाहः पाणिग्रहणं उत्सवो वर्धनवापनादि तथा सरसिजाः शङ्खशुक्ति-पद्मादय जतुः लाक्षानिर्यासः। एतन्मयैर्भाण्डैः क्रीडनं क्रीडा तथा नर्तनं मलिनं मलीमसं वस्त्रं च एतानि स्वप्नसंदर्शनानि क्षिप्रमेव शोकं प्रकर्षेण ददाति ॥ २६ ॥

## अथान्यानशुभानाह–

[1]पुंद्रव्यनाशो सुहृदां वियोग-
रछेदश्च पाण्योः कमला[2]पहारे ।
प्रसाद–वेश्मादि–शिरोवतारा:
स्वप्नेष्वनिष्ठा इति संप्रदिष्टा ॥ ३० ॥

पुंलिङ्गस्य द्रव्यस्य वस्तुनो नाशेऽपहरणे सुहृदा मित्रेण सह वियोगः पाण्यो हस्तयोः छेदः कमलं पद्मं तस्यापहरणं। प्रासादाद्देवालयाद्वेश्मनो गृहात् अद्रेः पर्वतात् शिरोवतारः येषां शिरस श्चूडादेऽवतारोऽधः पतनं स्वप्नेषु स्वप्नावस्थासु तेऽनिष्टा अशुभफलाः संप्रदिष्टा उक्ता ॥ ३० ॥

## अथान्यानप्याह–

[3]मित्रप्राप्तिः स्याद्विकोशासिलाभो
वश्यं गच्छेद्भूपति श्वासनं च ।
सर्पे कर्णं नासिकां वा प्रविष्टेऽ–
ण्डछेदः स्याद्वेष्टने चाशु बन्धः ॥ ३१ ॥

१ करचरणानां छेदो मातापित्रो र्युगेव भवति मरणम् ।
कर्तनमखिलनखानां कूर्चकचानां चतुरस्तटीलोम्नान् ॥
२ त्सरुजोपहारे इतिपाठः ।
त्सरुः खड्गमुष्टिः त्सरुजः खड्गादिस्तदपहारे।
३ गृहगोधिभुजङ्गाः खर्जूरादिकाः कीटकास्फुटं यस्य।
स्वप्ने विशन्तिकर्णे स विनश्यति कर्ण रोगेण ॥



विकोशासिलाभे कोषाद्बहि र्निस्सारित खड्गलाभे कोशान्निसृते केवले खड्गे दृष्टे वा मित्राप्तिः सुहृल्लाभः स्यात्। आसनस्य पीठस्यास्तरणस्य पट्टिकादेराप्तौ लाभे दृष्टे भूयो राजा वश्यभावं गच्छेत्। सर्पे उरगे कर्णं श्रोत्रं प्रविष्टे ऽ थवा नासिकां प्रविष्टेऽण्ड च्छेदः स्यात्। वेष्टने सर्पवेष्टने ऽ वश्यं बन्धनं भवेत्। एवं स्वप्नलक्षणमुक्त्वा ॥ ३१ ॥

## अधुना पाकलक्षणान्याह–

[2]आद्ये वर्षाद्वत्सरार्द्धाद्द्वितीये
यामे पाको वर्षपादात्तृतीये
मासात्पाकः शर्वरी पश्चिमांशे
सद्यः पाको गोविसर्गे च दृष्टे ॥३२॥

शर्वरी रात्री स्तस्या आद्ये प्रथमे यामे दृष्टो यः स्वप्नः तस्य वर्षात्संवत्सरेण पाकः फलनं, द्वितीये यामे दृष्टे वत्सरार्द्धात षड्भिर्मासैः फलति। तृतीये यामे वर्षपादात् त्रिभिर्मासैः। पश्चिमांशे चतुर्थप्रहरे मासात् त्रिंशद्दिनात्फलम्। गोविसर्गे गवां किरणानां विसर्गकाले प्रभातसमये सूर्योदयकाले दृष्टे स्वप्ने सद्य स्तस्मिन्नेवाहनि वा सप्तदिनाभ्यन्तरे फलमिति ॥३२॥

## अधुना शोभने स्वप्ने दृष्टे ततः कर्तव्यविधानमाह–

[1]नोर्द्ध्वं सुप्याच्छोभने स्वप्नदृष्टे
पश्चाद्दृष्टो यः सपाकं विधत्ते।

२ स्वप्नः प्रथमे यामे स संवत्सरैक फलदः स्यात् ।
संवत्सरार्द्ध फलदो द्वितीययामे त्रियामायाः ॥
मासत्रयेण तृतीये यामे नृणां स्फुटं फलदः ।
मासैकफलो दृष्ट श्चतुर्थयामे भवेत्स्वप्नः ॥
चरमनिशाघटिकाद्वयसमये फलति ध्रुवं दशाहेन ।
सूर्योदये तु दृष्टः सद्यः फलदायको भवति ॥

शंसे दृष्टं तच्च साधु द्विजेभ्य-

स्ते चामीभिः पूजयेयु नरेन्द्रम् ॥३३॥

शोभने शुभे स्वप्ने दृष्टे सति उद्‌र्ध्वं तदनन्तरं नस्वप्यात निद्रां नकारयेत। सुप्ते किं स्यात पश्चादनन्तरं यो दृष्टः स्वप्नः स पाकं विधत्ते फलं ददाति। लब्धनिद्रस्य कदाचित्स्वप्नदर्शनं भवति तदा स एव फलप्रदः प्रथमो निःफलः स्यात् । दृष्टं च यत्स्वप्नं तज्ज्ञा ये स्वप्नलक्षणज्ञाः साधवः सज्जनाः ज्योतिर्विद्वराः कश्यपगोत्र - कौशिक–गोत्रेतराः द्विजा ब्राह्मणा स्तेभ्यः शंसेत्कथयेत । ते च तज्ज्ञाः नरेन्द्रं राजानं पूजयेयु, अनुमोदयेयुः ॥३३॥

## अधुना दुःस्वप्ने दृष्टे कर्तव्यमाह-

[2]भूयः प्रस्वपनं नचास्य कथनं गङ्गाभिषेको जपः

शान्तिः स्वस्त्ययनं निषेवणमपि प्रातर्गवाश्वत्थयोः ।

विप्रेभ्यश्च तिलान्न होमकुसुमैः पूजा यथा शक्तितः

पुण्यं भारतकीर्तनं च कथितं दुःस्वप्नविच्छित्तये ॥३४॥

दुःस्वप्नस्य विच्छित्तये छेदनाय तद्विघाताय इदं भवेत्। भूयः पुनः स्वयनं निद्राकरणं नचास्याशोभन-स्वप्नस्य कथनं वर्णनम् । गङ्गाभिषेको गङ्गायां स्नानं तत्सिन्निधौ गङ्गाजलेनाभिषेकः, उपक्षणादन्यस्यां वा पुण्यनद्यां स्नानं तज्जलाभिषेको जपःपुण्य मन्त्राणां शकुन

---

१ इष्टं दृष्ट्वा स्वप्नं यः स्वप्यान्नश्यति फलं तस्य ।
नेया निशापि सुधिया प्रियदेव स्तवनदर्शनध्यानैः ॥
देवगुरुपूजनरतो ध्यातः प्राभातिकः प्राप्तः ।
नवफलतण्डुलहस्त कथयेत्तद् भूमिदेवानाम् ॥

२ स्वप्नमनिष्टं दृष्ट्वा पुनरपि स्वप्यान्निशावसानञ्च ।
नक्तं कथमपि न वदेत् केषाञ्चित् फलति न स यस्मात् ॥
उत्थाय नतः प्राततर्ध्यायति यः केशवं जगत्बन्द्यम् ।
बृद्धं नमति स्तुति युक्तो बृथा स करोति दुःस्वप्नम् ॥



सूक्ताद्यमर्षण शान्ति सूक्तानां शान्तिरुत्पातःप्रतिघातकृदनुष्ठानं स्वस्त्ययनं स्वस्तिवाचनं पुण्याहवाचनं प्रातः प्रभाते गवाश्वत्थयोः, गोरश्वत्थवृक्षस्य निषेवणं गोग्रासदानं अश्वत्थसेचनं बन्दनं तथा विप्रेभ्यो ब्राह्मणेभ्यः तिलैः कृष्णतिलैरन्नेन हेम्ना सुवर्णेन कुसुमैश्च पूजाऽर्चनं यथा शक्ति स्वविचानुसारेणेत्यर्थः, पुण्यं पापापहं भारतस्य कीर्तनं पठनं पाठश्रवणं गजेन्द्रमोक्षणादि पुण्यस्तवपठनं च दुःस्वप्नानां विच्छित्तये निवारणाय भवतीति ॥ ३४ ॥

इति भट्टोत्पलविरचितायां यच्येऽश्वमेधीययात्राविवृतौ स्वप्नाध्यायोऽष्टादशः ॥१८॥



# अथातो विजयस्नानाऽध्यायो व्याख्यायते ।

प्रागुक्तं त्र्यहमथ विजयस्नानमिति । आदावेव दिनत्रयं गुह्यकपूजां कृत्वा ततस्त्र्यहं विजयस्नानं कार्यं. तत्रादावेव स्नानप्रदेशानाह–

क्षीरैकतरुनगार्णवकूलनदीसङ्गमाः सरोऽशोष्यम् ।
गोस्थानवनहरालयरुचिराः स्नानप्रदेशाः स्युः ॥ १ ॥

क्षीरतरुः अर्कबटपिप्पलक्रमुकादिकः, एकतरुरेकोवृक्षः, यद्वा क्षीरवृक्षाणामेकद्वित्रादीनां मिलित्वैक वृक्ष इत्यर्थः, शङ्खः पिप्पलः शङ्खबट इत्यादि शब्देन लोके प्रसिद्धो वृक्षः, अथवैक वृक्षो यद्ग्रामे यत्पत्तने यद्वृक्षनाम्ना प्रसिद्धिः स एकवृक्षोऽर्थान्मुख्य-वृक्ष इत्यर्थः । नगः पर्वतोऽर्णवकूलः समुद्रतीरो नदीसङ्गमो द्वयोर्नद्योर्यत्र सङ्गमोऽशोष्यं सरो न कदाचिच्छोष्यते तादृशो देवखातो मनुष्यनिर्मितो वा गोस्थानं गोष्ठं वनं समृद्धोद्यानं अरण्यस्थं हरालयं शिवालयं, हरग्रहणमुपलक्षणार्थं विष्णुगणेशशक्त्याद्युपासितदेवालयं एते रुचिराः शोभनाः स्थानाः प्रदेशाः, एषामन्यतमे स्थाने कारयेत् ॥ १ ॥

## तत्र किं भूतायां भूमौ किं कुर्यादित्याह–

समगंभीरानुपरसाद्वलभूमौ प्रदक्षिणजलायाम् ।
अष्टारत्निप्रमितं वास्तु लिखेत्सर्वतोभद्रम् ॥ २ ॥

तत्र या भूमिः समा श्वभ्रोत्तुङ्गवर्जिता गंभीरा हन्यमाना अपि निः शब्दाः गम्भीरशब्दा वा अनुषराः सिकता शर्करा कङ्करादिदोषरहिता, शाड्वलसहिता दूर्वादिहरितसत्तृणोपेता । प्रादक्षिण्ये यस्यां जलं वहति, उत्तरभागादागत्य पूर्वस्यां वहति, प्राङ्मुखस्थस्य वामहस्तभागादागत्य पृष्ठतो गत्वा दक्षिणहस्तप्रदेशात्पूर्वतो वहतीत्यर्थः । तस्यां भूमौ अष्टारत्निप्रमितं अरत्निरकनि-



ष्टहस्तः, तत्प्रमितं तावत्प्रमाणं सर्वतोभद्र वास्तु लिखेत् । सर्वतोभद्रलक्षणं संहितायामुक्तं । अप्रतिसिद्धालिन्दं समन्दतो वास्तु भद्रमिति । निषिद्धालिन्दरहितं सर्वतः समं भद्रं यस्येत्यर्थः ॥ २ ॥

## अधुना तत्र विधानमाह–

सर्वैर्धान्यैस्तिलमुद्गमाषचणकाऽतसी परिशिष्टैः ।
अच्छिन्नाग्राऽगर्भितकुशैः समन्तात्परिस्तीर्णम् ॥ ३ ॥

सर्वै निः शेषैर्धान्यैः सप्तधान्यैः परिगणितै रष्टादश धान्यैर्वा समन्तान्सर्वतो दिशं परिस्तीर्णं वास्तु लिखेदिति । किं भूतैः तिलमाषमुद्गचणकाऽतसी परिशिष्टैः तिलैर्मुद्गैर्माषैश्चणकैः क्षुमाभिः परिशिष्टैः संयुक्तै र्वाज्यैः तथा कुशैर्दर्भैः समन्तान् सर्वतोदिशं परिस्तीर्णं किं भूतैरच्छिन्नान्यग्राणि अग्रभागः प्रान्तानि येषां अगर्भैर्गर्भस्थसूक्ष्मकुशकलिकारहितैर्वहिर्निः सारितैः ॥ ३ ॥

## अन्यदपि तत्र विधानमाह–

रजतमणिहेमगर्भैः सक्षीरैस्तरुप्रवालसितसूत्रैः ।
कलशैरकालमूलैश्चतुर्दिशं शोभितद्वारम् ॥ ४ ॥

शोभितान्यलङ्कृतानि चतुर्दिशं चतसृदिक्षु द्वाराणि यस्मिन् तैः कलशैः किं भूतैः रजतमणिहेमगर्भैः, रजतं रुप्यं मणयो रत्नानि च हेम सुवर्णं एतानि गर्भेऽभ्यन्तरे येषां, क्षीरतरवोऽर्कादयः स क्षीरवृक्षा स्तेषां यानि प्रवालानि पल्लवाः सितं श्वेतं सूत्रं कार्पासिकं एतैः सह ये वर्तन्ते तै स्तथा भूतैः क्षीरतरुप्रबालाऽऽछन्नैः सितसूत्रवेष्टितग्रीवैः तैश्च किं भूतैरकामूलैरविद्यमानं कालं कृष्णवर्णं मूले तले येषां तै स्तथा भूतैः ॥ ४ ॥

## अथान्यत्कर्तव्यमाह–

तन्मध्ये ब्राह्मीगृह्यसोमदूर्वाऽग्रशङ्खपुष्पः स्युः ।
दिङ्मुखमरत्नितुङ्गं स्थाप्यं पीठं स पुत्रदषत् ॥ ५ ॥

तन्मध्ये सर्वतोभद्रमध्ये ब्राह्मी सप्तपर्णी गृह्यसोमा सोमं यत् पीडयन्ते सोमलतेत्यर्थः ।

दूर्वाग्राणि शङ्खपुष्पी एता औषधयः तन्मध्ये स्यु र्भवेयुः स्थापयेयुः, तथा पीठमध्ये स्थाप्य भद्रासनाख्यं किं भूतं दिङ्मुखं स्पष्टादिकृत्थं दिशिसुखस्थितं यस्य नविदिशि, अरत्नि तुङ्ग अकनिष्ट हस्तोच्छ्रितं सपुत्रदृष घृषत् पाषाणः स च सपुत्रः पुत्रसहितः सूक्ष्मपाषाणसहितोऽस्मात् तत्र स्थापयेदित्यर्थः ॥ ५ ॥

## अन्यदपि विधानमाह–

तस्य ग्रहानुलोम्यं कालं केचिज्जगु र्निषेवेत ।
पूर्वोक्त बलिपुरोधो षष्टिकयवपायसाऽऽहारः ॥ ६ ॥

केचिद्वसिष्ठप्रभृतयः एवं जगुरुक्तवन्तो यथा तस्य भद्रासनत्यग्र हानुलोम्यं कालं प्रतिशुक्र प्रतिबुध वर्जितं समयं निषेवेत स्थापयेत्, यथा प्रतिशुक्र प्रतिबुधादिकं न भवति ।

तथा च भगवान् वसिष्ठः—

तत्तत्काले शुभे तत्र प्रति शुक्रादि वर्जिते ।
भद्रासनन्तु दातव्यं मध्ये दिक् संमुखस्थितम् ॥ इति ॥

पूर्वोक्त बलिपुरोधाः, पुरोधाः प्रागुक्तेन गुह्यकयागविहितेन बलिं दद्यात् । "पक्वाममांसदधिकुसुमासवफलपायसप्रतिसराभि" रित्यादिकः, किं भूतः पुरोधाः षष्टिकः शालिविशेषः षष्टिरात्रेण पच्यते षाष्टिकान्नं यत्रान्नं पायसं चाऽऽहारो भोजनं यस्य राजा च षाष्टिक यवपायसाहारः स्यादिति ॥ ६ ॥

## अथान्यदप्याह–

अभिमतदेवकृतमनाः पूर्वद्वारेण पार्थिवः प्रविशेत् ।
भद्रासनं प्रदक्षिणमध्यासीतःऽथ तस्य विधिः ॥ ७ ॥

तत स्तत्र सर्वतो भद्रे पार्थिवो राजा पूर्वद्वारेण प्रागदिशि यद्द्वारं तेन प्रविशेत्, किं भूतः अभिमतदेवकृतमनाः अभिमतेष्टदेवाकृता मनसि येन तत स्तत्र भद्रासनं प्रदक्षिणं प्रादक्षिण्येनागत्या ध्यासीत तत्रोपविशेत् । अथ तस्यविधिः ॥ ७ ॥



## अथानन्तरं तस्य नृपस्य विधिर्भवति तद्विधानमाह–

प्रियङ्गुसिद्धार्थकनागदान–
गोरोचनाक्षौद्रघृतैः समेतैः ।
प्रागात्मरक्षा प्रतिचक्रपूतैः
स्नानोन्मुखस्यावनिपस्य कार्याः ॥ ८ ॥

तत्र प्राक् प्रथमं अवनिपस्य राज्ञः स्नानोन्मुख स्नानेच्छा आत्मरक्षा, शरीररक्षा कर्तव्या, प्रियङ्गु स्पृक्वा सिद्धार्थका गौरसर्षपा नागदानं हस्तिमदो गोरोचना गवांपित्तोद्भवा क्षौद्रं माक्षिकं घृतं आज्यं एतैः समेतै रेकीकृतैः किं विशिष्टैः प्रतिचक्रपूतैः प्रतिचक्र मन्त्रः आथर्वणशाखायां विहित स्तेन पूतैः परिजप्तैः ॥८॥

## अथ तत्रास्तरणमाह–

श्वेतस्य बभ्रोरथवा वृषस्य
चर्मास्तरेत् व्याघ्रमृगेन्द्रयोश्च
स्थितस्य कुर्यात्मनुजेश्वरस्य
जयाभिषेकं विधिवत्पुरोधाः ॥९॥

तत्र भद्रपीठे चर्मास्तरेत्, श्वेतस्य शुभ्रस्याथवा बभ्रोः कपिलस्यादौ चर्मास्तरेत । तत्रार्थान्तरमपि श्वेतस्येति विशेषणं बभ्रो र्वृषभस्य तेन श्वेतबभ्रोर्नकुलस्य वा श्वेतवृषभस्य तदुपरि व्याघ्रस्य तदुपरि मृगेन्द्रस्य सिंहस्य तेषु पृष्ठस्थितस्य मनुजेश्वरस्य राज्ञः जयाभिषेकं जयार्थमभिषेकं विधिवद्वक्ष्यमाणविधानेन पुरोधाः पुरोहितः कुर्यात् ॥९॥

## अथ विधानमाह–

क्रमात्महीरौप्यसुवर्णकुम्भैः
क्षीरस्य दध्नो हविषश्च पूर्णैः ।

स्नायाच्च तौयैः सममष्टमृद्भिः

पश्चाच्च सर्वौषधिगन्धतोयैः ॥१०॥

क्रमात्क्रमेण परिपाट्या महिरत्नसुवर्णकुम्भै र्यथाक्रमं क्षीरस्य दध्नो हविषश्च पूर्णैः स्नायात् महीमयै र्मृण्मयैः क्षीरपूर्णैरादौ स्नायात्, तदनन्तरं रौप्यैर्दधिपूर्णैः तदनन्तरं सौवर्णैर्हविर्घृतपूर्णैरेतत् क्रमेण स्नायात्, ततस्तोयैर्जलैः समृद्भिर्मृत्तिकाभिः सहितैर्वल्मीकतडागपर्वतसरित्सङ्गमगोगजविषाणोद्भवाभिर्मृत्तिकाभिः सर्वतीर्थानीतपुण्यतोयैश्च पश्चादनन्तरं सर्वौषधिगन्धयुक्तैः स्तोयैर्जलैः स्नायात्, सर्वौषधियुक्तै र्जलै स्तदनन्तरं गन्धयुक्तैर्जलैः स्नायात्। गन्धान्यत्र यक्षकर्दमाख्यानि।

कस्तूरीकायाद्द्वौ भागौ द्वौ भागौ केशरस्य च।

चन्दनस्य त्रयो भागाः शशिनस्त्वेक एव ही॥

यक्षकर्दममित्युक्तं प्रोक्तं वाऽथ चतुःसमम् ॥१०॥ इति

## तत्र जप्यमन्त्रानप्याह–

परिजप्य महारौहिण कु[१]ष्माण्ड–कुवेर–भद्रगणैः।

अभिषिञ्चेन्मनुजेन्द्रं पुरोहितो ऽस्मिन्समृद्ध्या च ॥११॥

---

१. यद्देवा देवहेडनं देवाश्च कृता वयम्।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः॥
यदि दिवा यदि नक्तमेनांसि च कृमा वयम्।
वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः
यदि जाग्रद्यदिस्वप्नएनांसि च कृमा वयम्।
सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः॥
यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये।
यच्छूद्रे यदर्ये यदेन श्च कृमा वयम्॥
यदेकस्याधि कर्माणि तस्या वयजनमसि।
शुक्लयजुर्वेद संहिता अ. २० मं १४-१७[१]



महारौहिणं महारौहिणमन्त्रेण, कुष्माण्डै र्यजुर्वेदोक्तैर्मन्त्रैः कुवेर – हृदयेनाथर्वणमन्त्रेण भद्रगणै र्भगवतोक्तै श्च मन्त्रैः परिजप्य तैः कुम्भैः पुरोहितः, आचार्यो राजानं नृपं अभिषिञ्चेत् अस्मिन्नेव पीठे तथा समृद्ध्यामत्र विशेषेण राज्याभिषेकोदितेन चाभिषेचयेत् ॥११॥

## अधुना ऽभिषेकघटप्रमाणमाह–

द्वात्रिंशतः षोड़श वा तथाष्टौ घटमाणं मुनिभिः प्रदिष्टम्।

स्नातोप्यलङ्कारमपास्य पूर्वं नवं विदध्याद्द्विजमन्त्रपूतम् ॥१२॥

परिजप्य महारौहिणिमिति यो ऽभिषेक स्तत्र घटप्रमाणं मुनिभि र्गर्गादिभिः प्रदिष्टम्।

तथा च गर्गः—

द्वात्रिंशत्कलशाः कार्याः षोडशाष्टौ च राजताः।

सौवर्णान् मृण्मया वापि क्षीराज्यदधिपूरिताः॥

स्नातो ऽपीति, स्नातो राजा पूर्वं प्राक्कृतमलङ्कारमाभरणं वस्त्रादिकं अपास्य विहाय नवं अभिनवं अलङ्कारं वस्त्रं विदध्याद्धारयेत्। कीदृशं द्विजमन्त्रपूतं ब्राह्मणोदितमन्त्रपूतं "यदश्वा यति वस्त्रपरिधाने" 'स्वर्ण धर्मे' त्यादि स्वर्णाद्यलङ्करणे ॥१२॥

## अभिषेको ( षिक्तो ) नृपतिः किं कुर्यादित्याह–

मागधवन्दि सुहृद्द्विजसूतै–

रभिमतवाक्कृतमङ्गल इष्टः।

चर्मसुपविशेदभिषिक्तः

पृषत-गवेन्द्र-विडाल-वृकानाम् ॥१३॥

मागधाः नामश्रावका बन्दिन श्चाटुकारिणः सुहृदोः मित्राणि द्विजाः ब्राह्मणाः सूता

रथवाहकाः कथाश्रावका वा एतैरभिमताभिरिष्टकृद्भि रभिमताभिः कृतानि मङ्गलानि यस्य स तथा भूतः दृष्टाः साधुजनाः बल्लभाः एवं विधः चर्मोपर्य्युपविशेत्, अभिषिक्तः सन् चर्मसूपविशेत् । पृषतो मृगजातिः गवेन्द्रो वृषः विडालो मार्जार वृकः, अरण्यजः श्वापदविशेषः एषां यथाक्रमपठितानां चर्मणामुपरि कृताभिषेकः उपविशेदिति ॥१३॥

## अथाधुना कर्तव्यमाह-

गृहीतधूपाम्बरमाल्यगन्ध-

स्त्रिर्भ्रामयित्वोपरितौषधीश्च ।

वामेप्यपार्श्वे ऽगृत आस्थितो वा

प्रतीपवातं जुहुयाद्धुताशम् ॥१४॥

गृहीतं धूपं अम्बरं वस्त्रं माल्यं स्रजं गन्धाश्च सुगन्ध–द्रव्याणि येन राजा स तथोक्तः । पुरोहित आचार्य औषधीः प्रागुक्ताः 'प्रियङ्गु - सिद्धार्थक–नागदानेत्याद्याः' त्रिभ्रामयित्वा त्रीन् वारान् भ्रामयित्वा, अस्य राज्ञः वामपार्श्वे वामभागे समवस्थित आस्थितो ऽग्रतः पुरतो वा स्थितो हुताशं अग्निं जुहुयात्, कीदृशं हुताशं प्रतीप वातां यथा हुताज्य धूमो नृपाभिमुखो याति, ऋग्भिरग्निलिङ्गादिभिरन्यस्या चोदनादिति ॥१४॥

## अथान्यदप्याह–

गोरोचना हेमफलानि सर्पि

ब्राह्मी सदूर्वा सितसर्षपश्च ।

आसेव्य सर्वाणि यथोपदेशं

भक्तान् द्विजान् स्वस्ति च वाचयित्वा ॥१५॥

सौम्येन यायात्फलपुष्पपाणि–

द्वारेण पश्यद्दिश पौरुहूतम् ।



प्रागुद्धरेद्दक्षिणपादमेवं

कुर्वन्नृपः सर्वरिपून् प्रशास्ति ॥१६॥

गोरोचना गोपित्तजाः हेम–सुवर्ण–फलानि श्रीफलादीनि सर्पि घृतं ब्राम्ही सप्तपर्णी दूर्वा हरिताः, सितसर्षपा गौरसर्षपाश्च शब्दःसमुच्चये एतानि सर्वाण्यासेव्य यथोपदेशं यथा येन प्रकारेण पुरोधा उपदिशति तथा क्रमेण एकैकमासेव्य, केषांचिद्वन्दनं केषांचिद्ग्रहणं केषांचिच्छिरसि प्रक्षेपः कार्य स्ततो भक्त्या श्रद्धया द्विजान् ब्राम्हणानभ्यर्च्याभिष्टं फलादिना संभोज्य स्वस्ति च वाचयित्वा पुण्याहं वाचयित्वा दक्षिणादिभिः संतोष्य तेभ्यः सकाशादाशिषो गृहीत्वा ज्योतिर्विदं वस्त्रालङ्करणैः संतोष्य तदनुमत्या सौम्येनोत्तरेण द्वारेण नृपो यायाद्गच्छेत । किं भूतो राजा फलपुष्पाणिः फलानि जातीफलपूगफलादीनि पुष्पाणि मालतीकमलादीनि श्वेतपुष्पाणि पाणौ हस्ते यस्य तथा गच्छेत् । यथा पौरुहूतं पूर्वद्वारं न पश्येत् । गच्छंश्च प्राक् प्रथमं दक्षिणं पादं सव्यचरणं उद्धरेत् क्षिपेत् । एवमुक्तप्रकारेण कुर्वन्नृपः राजा सर्वरिपून् अशेषशत्रून् प्रशास्ति जयति । एवं गुह्यकपूजां विजयस्नानं च त्र्यहं कार्यमिति ॥१२–१६॥

वराहमिहिराचार्यकृते ऽस्मिन्मतसागरे ।

अर्थिनामुत्पलञ्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यत्त्ये ऽश्वमेधीययात्राविवृतौ विजयस्नानाऽध्याय एकोनविंशः ॥१६॥



# अथ ग्रहयज्ञाऽध्यायो व्याख्यायते

## यदुक्तं प्राक् ग्रहयज्ञः सप्तमे दिवसे इति। तत्रादावेव वेदीलक्षणमाह–

गृहयज्ञमतो वक्ष्ये तत्र निमित्तानि लक्षयेद्धाम्।
भङ्गो मानोनायां दिग्भ्रष्टायामसिद्धिञ्च ॥१॥

अतोऽस्मादनन्तरं ग्रहाणां यागं वक्ष्ये कथयिष्ये। तत्र च तस्मिन् यज्ञे प्रथमत एव वेद्यां निमित्तानि शुभाशुभानि लक्षयेद्विचारयेत्।

तत्राचार्येण वेद्याः प्रमाणेनोक्तमस्माभिरन्यशास्त्राल्लिख्यते–

यज्ञे चतुः षष्टिकरा विवाहे
वेदी द्विजानां द्विनरप्रमाणा।
कुर्याद्ततोऽष्टांशमपक्रमेण
राजन्यवैश्यवृषलात्मजानाम् ॥

तथा च–

सप्तहस्ता ब्राह्मणानां वेदी यज्ञे प्रकीर्तिताः।
षड्भिः करैः क्षत्रियाणां वैश्यानां पञ्चभिः स्मृता ॥
चतुर्हस्ता तु शूद्राणां विवाहेऽपि विनिश्चितः।
अलाभे सर्ववर्णानां चतुर्हस्ता प्रकीर्तिता ॥
व्यन्तराणां ततो न्यूना निर्दिष्टा मुनिभिः सदा।
अतो हीनाऽधिका वेदी यजमानस्य मृत्युदा ॥



तथा च–

यज्ञे विवाहे वक्ष्यामि वेदीमानं समासतः।
त्रिहस्तसप्तविस्ताराः ब्राह्मणानां प्रकीर्तिता ॥
क्षत्रियाणां पञ्चदश वैश्यानां नवसम्मिता।
कराः सप्त च शूद्राणां शिल्पिनां संप्रकीर्तिता ॥
त्रिहस्त व्यन्तराणान्तु वेदी क्षेत्रमुदाहृतम्।
भुवोप्यलाभे मर्त्यानां चतुर्वर्णप्रदर्शिता ॥
पञ्चहस्तकृता वेदी समा मङ्गलदायिका ॥ इति ॥

एवमस्यां वेद्यां निमित्तानि लक्षयेत्। मानेनोक्तेन प्रमाणेनोनायां भङ्गः पलायनं करोति, दिग्भ्रष्टायां वेद्यामसिद्धि र्यदर्थं शान्तिकर्म तन्न सिद्ध्यति।

उक्तञ्च–

वेदी शुभा शुल्वविधानदृष्टा
दिग्स्थानमानाऽभ्यधिका न हीना।
भ्रष्टा प्रमाणेन करोति भङ्गं
दिग्वक्रसंस्था च न सिद्धिदा स्यात् ॥१॥

## अथान्यादप्याह–

नगरपुरोहित-देवी-सेनापतिपार्थिव-क्षयं कुरुते।
प्राग्दक्षिणपरोत्तरमध्यभागेषु या विकला ॥ २ ॥

प्राग्दक्षिणपरोत्तरमध्यभागेषु या विकला वेदी यथासंख्यं नगर-पुरोहित-देवी-सेनापति-पार्थिव-क्षयं कुरुते पूर्वस्यां दिशि मानोना वेदी नगरस्य क्षयं नाशं कुरुते, एवं दक्षिणभागहीना पुरोधसः पश्चिमहीना देव्या राजमहिष्या उत्तर-भागहीना सेनापते श्चमूनाथस्य मध्यभागहीना पार्थिवस्य राज्ञः क्षयं कुरुते, इति।

उक्तञ्च-

प्राग्भागहीना नगरस्य नेष्टा
पुरोधसो दक्षिणभागवक्रा ।
नरेन्द्रपत्न्या मृतिदा परास्या
उदग्बले सस्य नृपस्य मध्ये ॥२॥

## अधुना ग्रहाणां प्रतिमाद्यखिलद्रव्याण्याह–

### तत्रादावर्कस्याह–

१ तत्रार्चा ताम्रमयी सवितुः पालाशिका समित् स्रुक् च ।
आकृष्णेति च मन्त्रो रक्तागन्धाः सहागुरुणा ॥३॥

माषा ऽतसीतिलात्वक्समुद्गचणकान् विहाय भोज्यविधिः ।
वकुलार्कागस्त्यपलासशल्यकिकुसुमपूजा च ॥४॥
अष्टशतसम्मितेभ्यो विप्रेभ्यो दक्षिणा ऽऽहिताग्निभ्यः ।
देया वृषकनकमही सहस्रकिरणं समुद्दिश्य ॥५॥

तत्र तस्मिन् ग्रहयज्ञे सवितुरादित्यस्य अर्चा प्रतिमा ताम्रमयी पूजार्थं कार्या, पालाशिकाः पलाशभवाः समिधः स्रुक् च पलाशनिर्मिता । मन्त्रञ्च आकृष्णेति "आकृष्णेन रजसा" इत्यादिको मन्त्रः, गन्धाः सुगन्धद्रव्याणि रक्ता लोहितवर्णा स्ते च गुग्गुलुना सह । भाषा प्रसिद्धा अतसी च प्रसिद्धा तिलः प्रसिद्धः त्वक्सहितमुद्गाः त्वक्सहित-

---

१. रव्यारौ ताम्रजौ कार्यौ जीवज्ञौ स्वर्णसन्निभौ ।
रौप्यौ चन्द्र सितौ कार्यौ शेषा लोहमया ग्रहाः ॥
इति स्वरोदये ।

सूर्यस्य

वेदीमध्ये ललितकमले कर्णिकायां रथस्थः ।
सप्तश्वा ऽर्को ऽरुणरुचिरवपुः सप्तरज्जु द्विबाहुः ॥



चणकाः एतान् विहाय त्यक्त्वा ऽन्यच्छालिगोधूमादि भोज्यविधि भोजनविधानम् । कुसुमानि च बकुलपुष्पाणि अर्कपुष्पाणि अगस्त्यपुष्पाणि पलाशपुष्पाणि शल्यकि पुष्पाणि एतैः पूजार्चनम् , अष्टशतमित्येभ्यः । सहस्रकिरणमादित्यं उद्दिश्य, अष्टशतमितेभ्यो विप्रेभ्यः आहिताग्नेभ्यो भोजनं दक्षिणा देयाः, दक्षिणा च वृषो दान्तः कनकं सुवर्णं मही भूरिति ॥३-५॥

### अथ चन्द्रस्याह–

१ न्यग्रोधात्स्रुक् समिधः स्फटिकादर्चा च शीतगोः कार्या ।
शैलेयकनखवर्ज्या गन्धाः कुसुमानि च सितानि ॥
गोधूमशालियवखण्डगोपयः पूर्वमशनमथ मन्त्रः ।
आप्यायस्वेति भवेच्चातुर्विप्राय दद्याच्च ॥६॥

---

गोत्रेरम्ये बहुविधगुणे काश्यपाख्ये प्रसूतः ।
कालिङ्गाख्ये ।वजयजनितः प्राङ्मुखः पद्महस्तः ॥

मन्त्रः

ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्येन सविता रथेन देवो याति भुवनानि पश्यन् ॥

स्नानम्

मनःशिलैलासुरदारुकुङ्कुमैरुशीरयष्टीमधुपद्मकान्वितैः ।
सताम्रपुष्पैर्विषमे स्थिते रवौ शुभावहं स्नानमुदाहृतं बुधैः ॥

दानम्

कौशुम्भवस्त्रं गुडहेमताम्रं माणिक्यगोधूमसुवर्णं वस्त्रम् ।
सवत्सगोदानमिति प्रणीतं दुष्टार्यमा ऽऽतिंघ्नमसूरिकाश्च ॥

१. चन्द्रस्य

आग्नेयभागे सरथोदशाश्व श्चात्रेयजो यामुनदेशजश्च ।

मणिमुक्ता क्षौमहिरण्यसहितां श्वेततुल्यसवत्सां गाम् ।
रजतसफविषाणां क्षीरिणीं च तुहिनांशुमुद्दिश्य ॥७॥

शीतगो श्चन्द्रस्य न्यग्रोधात बटवृक्षात् स्रुक् समिधश्च कार्या । स्फटिकात्स्फटिकोपला च्चन्द्रकान्ते रर्चा प्रतिमा कार्या शैलेयकं गन्ध – द्रव्यं शिल्हकाख्यं नखं शङ्खोद्भवं नखमित्युच्यते, आभ्यां वर्जिताः गन्धाः कुसुमानि पुष्पाणि सितानि शुक्लवर्णानि कुमुदादीनि । अशनं भोज्यं गोधूमाः शालयः यवाः तथा खण्डं इक्षुविकारः सितादि गोपयः गोक्षीरं एतत्पूर्वं क्षीरदधि तक्र-कीलाट-कुर्चिकादि, एतदशनं अथ मन्त्रो हवनार्चनादावाप्यायस्वेति भवेत्स्यात् । "आप्यायस्वसमे तु ते" इत्याद्यं पदं यस्य, दक्षिणार्थं दद्याच्च गां चातुर्विद्याय अन्तर्वेदपाठकाय किं भूतां गां मणिभिः, रत्नैर्मुक्ताभिर्मुक्ताफलैः क्षौमेन वस्त्रेण हिरण्येन सुवर्णेन आदिना रजतेन समेतां श्वेततुल्यवत्सां श्वेतवर्णतुल्येन श्वेतवर्णेनैव वत्सेन अपत्येन संयुतां मातापुत्रावेकवर्णावित्यर्थः रजत शफविषाणं रजते रुप्यं खुरेषु विषाणयोः शृङ्गयोश्च यस्याः रजतवेष्टितखुराणि शृङ्गौ चेत्यर्थः क्षीरिणी प्रभूतक्षीरां एवं तुहिनांशुमुद्दिश्य अभिसंधाय दद्यादिति ॥६–७॥

---

प्रत्यङ्मुखस्थ श्चतुरस्रपीठे गदाधरो ऽ भूद् द्विमुखः शशाङ्कः ॥

मन्त्रः

ॐ इमं देवा ऽ सपत्नं सुध्वं महते क्षत्राय महते ज्यैष्ठाय महते जानराज्यायेन्द्रस्येद्रियाय । इमं : मुख्यपुत्रममुष्यै पुत्रमस्यै विश ऽ एष वोऽमी राजा सोमो ऽ स्माकं ब्राह्मणाना राजा ।

स्नानम्

पञ्चगव्यगजदानविमिश्रैः शङ्खशुक्तिकुमुदस्फटिकैश्च ।
शीतरश्मिकृतवैकृतहन्तृ स्नानमेतदुदितं नृपतीनाम् ॥

दानम्

घृतकलशं सितवस्त्रं दधिशङ्खौ चैव मौक्तिकसुवर्णं ।



## अथाङ्गारकस्याह–

१ रक्तकरवीरसमिधो रक्ता गन्धाः कुचन्दनप्रमिता ।
मन्त्रश्चाग्निमूर्द्धा त्वशनं गुडपाष्टिकं प्रायम् ॥८॥

ताम्रकनकप्रवालकौर्णिकानि देयानि ।
उद्देश्य धरातनयं छन्दोगेभ्यो ब्रतस्थेभ्यः ॥९॥

धरातनयस्य अङ्गारकस्य रक्तकरवीरवृक्षोद्भवाः समिधः स्रुक् करवीरकृतैव रक्तालोहितवर्णा गन्धा कुचन्दनं रक्त चन्दनं तेन निर्मिता प्रतिमा, "मन्त्र श्चाग्निमूर्द्धादिवककुत्पतिरिति" अशनं भोजनं ब्राह्मणानां गुडषाष्टिकप्रायं गुडसहितं षाष्टिकान्नं प्रायं षाष्टिका बहुलम् तत्सदृशं चेत्यर्थाद्गोधूमं वा । अङ्गारकस्य दक्षिणा ताम्रं प्रसिद्धं कनकं सुवर्णं प्रवालं विद्रुमं और्णिकं उर्णानिर्मितं वस्त्रं तदपि रक्तवर्णं, धरातनयमंगारकमुद्दिश्य ब्रतस्थेभ्यो ब्रह्मचारिभ्य च्छन्दोगेभ्यः सामवेदिभ्यो दद्यात्प्रतिपादयेत् ।

---

रजतं च सम्प्रदद्याच्चन्द्रारिष्टोपशमनाय ॥

भौमस्य

१. याम्ये जगच्छक्तिगदासशूलो वरप्रदो याम्यमुखो ऽ तिरक्तः ।
कुजस्त्ववन्ति विषयस्त्रिकोणस्तस्मिन् भरद्वाजकुले प्रसूतः ॥

मन्त्रः

ॐ अग्निमुर्द्धा दिवः ककुत्पतिः पृथिव्या ऽ अयम् । अपां रेतां सि जिन्वति ॥

स्नानम्

बिल्वचम्पकबलारुणपुष्पैर्हिङ्गु कल्कफलिनीबकुलैश्च ।
स्नानमद्भिरिह मांसियुताभि र्भौमदौस्थ्यविनिवारणमाह ॥

दानम्

प्रबालगोधूममसूरिकाश्च वृषश्च ताम्रकरबीरपुष्पम् ।
आरक्तबस्त्रं गुडहेमताम्रं दुष्टाय भौमाय सचन्दनं हि ॥

## बुधस्याह

२ मन्त्रश्चोद्बुध्यतस्वेति स्यात्प्रतिमा युक्तिलोहमयी स्रुक् समिधश्च मधुकात् ।
अथवापमार्गात्समिधः स्रुक् च पञ्चलोहमयम् ॥१०॥

युक्तिप्रायागन्धा कालीयक-कुंकुम-प्रियङ्ग्वाद्याः ।
कुसुमानि मालतीतिलकबकुलमदयन्तिकादीनि ॥११॥

भोज्यं मसूरतिलशालिमुद्गचणकादि ।
रजतमणिसहितो ऽश्वतरो दद्यादथर्वणवरेभ्यः ॥१२॥

बुधस्य उद्बुध्यतश्चेति मन्त्रः प्रतिमा च युक्तिलोहमयी । युक्ति लोहमयी युक्तिलोहं पञ्चलोहं स्वर्णरजतताम्रकांस्यलोहं च पञ्चलोहाख्यं तन्मयी प्रतिमा । मधुकान्मधुकवृक्षात् स्रुक समिधः अथवा तदलब्धौ अपामार्गस्य स्रुक् समिच्च, तदप्यलब्धौ स्रुक पञ्च-लोहमयं कार्यम् । समिच्च लोहपरिस्कृता वा । गन्धाश्च युक्ति प्रायाः बहुभिर्द्रव्यैर्योगेन ये गन्धा उत्पद्यन्ते ते युक्ति प्रायाः युक्ति बहुला, तथा कालीयककुंकुमप्रियङ्ग्वाद्याः कालीयकं कृष्णहरिद्रा कुंकुमं काश्मीरं प्रियङ्गु गन्धप्रियङ्गुः एता आदिर्येषां ते आदि-ग्रहणात् पुस्तनखागुरुशैलेयक – मांसिः । कुसुमानि पुष्पाणि मालति तिलक बकुल मद-यन्तिका एतानि प्रसिद्धानि आदिशब्दादन्यान्यपि पीतपुष्पाणिः भोज्यं भोजनं ब्राह्मणानां मसूराः तिला शालयः मुद्गा चणकाः आदिग्रहणात्कलायमयुष्टकाश्च ग्राह्या । दक्षिणा अश्वतरः वेशरः गर्दभ्यां अश्वाज्जात स च गर्भविदारणान्निसृतो न च योनियन्त्र-निपीडनात्प्रसूतः स एव वेशराख्यः तदलब्धौ घोटको वा किं भूतः स रजतेन रौप्येण मणिभिः मरकत-मणिभि स्त्रिभिश्च सहितः । केचित्स रजतमणिप्रकृति श्चान्द्रे राथ-र्वणवरेभ्य इति पठन्ति न केवलमश्वतरो यावत्सरजतमणि-प्रकृतिः सह रजतेन रौ-प्येण मणिमयी रजतमयी प्रकृतिः रजतनिर्मितः पाचीपरिष्कृताश्वतर सदृश प्रतिकृतिरि-त्यर्थः । अश्वतरप्रतिमां कृत्वा ऽथर्वणप्रधानेभ्यः प्रतिपादयेत् ॥१०–१२॥

---

बुधस्य

२ उदङ्मुखो मागधजो हरिस्थ श्चात्रेयगोत्रः शरमण्डलस्थः ।



## अधुना बृहस्पतेराह–

१ अश्वत्था ऽर्जुनसमिधः स्रुक् कनकार्चात्वक्वर्जिता गन्धाः ।
पीतकुसुमानि च शुभा भोज्यं तिलमुद्गवटकादि ॥१३॥

बृहस्पते इति मन्त्रः पूजाहोमश्च तेनैव ।
बहुऋचभ्य एकवर्णं मध्यवयस्कं तुरङ्गमं दद्यात् ॥१४॥
स्वर्णावतंसयुक्तं जवाधिकं मण्डितं स्वर्णैः ॥१४½॥

अश्वत्थवृक्षादर्जुनवृक्षात्समिधः स्रुक् च कनकात्सुवर्णादर्चा प्रतिमा त्वग्वर्जिता गन्धाः त्वगङ्गं वर्जयित्वा ऽन्ये सर्वगन्धः पीतानि पीतवर्णानि कुसुमानि पुष्पाणि, भोज्यमशनं ब्राह्मणा-दीनां तिलमुद्गवटकादि तिलप्रधानमुद्गवटकं आदिग्रहणाच्छालिगोधूमादि । बहुऋचभ्यो ऋग्वेद पाठिभ्यः, एकवर्णं एक वर्णेनोपलक्षितं पीतवर्णं कपिलवर्णं स्वर्णसदृक्वर्णं मध्य-वयस्कं दशवर्षाद् द्वाविंशतिवर्षपर्यन्तवयस्कं तुरगं अश्वं स्वर्णनिर्मितावतंसेन शिरोभूषणेन मण्डितं वेगवत्तरं स्वर्णेनान्वितं पूजाहोमादौ बृहस्पते अति यदर्य इत्यादि मन्त्रः ॥१३–१४½॥

---

सखड्गचर्मोरुगदाधरोऽत्रीशानभागे वरदः सुपीठ ॥

मन्त्रः

ॐ उद्बुध्यातस्वाग्ने प्रतिजागृहित्वमिष्टापूर्ते स सृजेथामयं च ।
अस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत ॥

स्नानम्

गोमयाक्षतफलैः समरोजैः क्षौद्रशुक्तिनवमूलहेमभिः ।
स्नानमुक्तमिदमत्र भूभृतां बोधना ऽशुभविनाशनं बुधैः ॥

दानम्

नीलवस्त्रं मुद्गदानं बुधाय रत्नं पाची दासिका हेम सर्पिः ।
कांस्यं दन्तः कुञ्जरश्चाथ मेषो रोप्यं सर्वं पुष्पजात्यादिकञ्च ॥

१. गुरोः

सौम्ये च दीर्घे चतुरस्रपीठे रथे ऽङ्गिराः सौम्यमुखश्च पीतः ।

## अधुना शुक्रस्याह–

१ रजतार्चा मदनीया गन्धा कुसुमानि सुरभीनि ॥१५॥
पनसोदुम्बरसमिधो भोज्यं वृष्यं च भृगुसूनोः ।
अन्नात्परिस्रुताद्यो मन्त्रः स्त्रीकर्कशा स्वलङ्कारा ॥१६॥
अध्वर्युभ्यो देया सूताद् द्वात्रिंशदब्देभ्यः ।

भृगुसूनोः शुक्रस्य रजतात् रुप्यात् अर्चा प्रतिमा कार्या, मदनीया गन्धा ये मदं दर्पमुत्पादन्ति चन्दना गुरूप्रभृतयः कस्तुरी बिडालमदश्च-पुष्पाणि सुरभि नानागन्धीनि पनसवृक्षादुम्बरवृक्षाच्च समिधः स्रुक् च । वृष्यं यद्वीर्वमुत्पादयन्ति तदन्नं क्षीरपरिष्कृत माषवटकबादामगोस्तनीप्रभृति शुक्रवृद्धिकृत् पौष्टिकद्रव्ययुक्तमन्नं ब्राह्मणादिनामशनं अन्नात्परिस्रुताद्योमन्त्रः पूजा हवनादौ दक्षिणा, स्त्री योषा सा च कर्कशा च शोभनभूषणा अध्वर्युभ्यो यजुर्वेदविद्भ्यो देया दातव्या । सा स्त्री किं भूता प्रसूता किं भूतेभ्यः द्वात्रिंशद्वर्षेभ्यः शुक्रमुद्दिश्य दद्यात् अत्र केचित् अध्वर्युभ्यो देया रदसंखेभ्य स्तदब्देभ्य

दण्डाक्षमालाजलपात्रधारी सिन्ध्वाख्यदेशो वरदश्च जीवः ॥

मन्त्र.

ॐ बृहस्पते ऽ अति यदर्यो ऽ अर्हात् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दिदयच्छ्वस ऽ ऋतप्रजा तदस्मासु द्रविणं धेहि चित्रम् ॥

स्नानम्

मालतीकुसुमयुक्तसर्षपैः पल्लवैश्च मदयन्तिकोद्भवैः ।
क्षिप्रमम्बुमधुकेन च स्फुटं वैकृतं गुरुकृतं विनिहन्ति ॥

दानम्

अश्वः सुवर्णं शुकपीतवस्त्रं सपीतधान्यं लवणं सपुष्पम् ।
सशर्करं तद्रजनीप्रयुक्तं दुष्टाय शान्त्यै गुरवे प्रदेयम् ॥

१. शुक्रस्य

प्राच्यां भृगुर्भोजकटः प्रजातः सभार्गवः पूर्वमुखः सिताभः ।



इति पठन्ति । रदसंख्येभ्यो द्वात्रिंशत्संख्येभ्यो ब्राह्मणेभ्यः तदशक्तौ द्वात्रिंशद्वर्षेभ्यो वा देयेति ॥१५-१६॥

## अधुना शनैश्चरस्याह--

२ सालसमी स्रुक् समिधः शन्नोदेवीति भास्करेर्मन्त्रः ॥१७॥
लोहार्चा शैलेयकमुस्ता शुक्त्युत्कटा गन्धाः ।
गिरिकर्णिकातसीस्यन्दनाञ्जनादीनि कृष्णपुष्पाणि ॥१८॥
अशनानि कृष्णतिल-माषलवणनिष्यात्रमुख्यानि ।
प्रेष्यामतीतवयसामञ्जनशीसकृष्णलोहयुताम् ॥१९॥
दद्यादुद्दिश्यार्किं वृषलीपतिवृद्धमूर्खेभ्यः ॥१९॥

सालेति भास्करेः शनेः शालवृक्षात्समीवृक्षाच्च स्रुक् समिधः कार्याः शन्नोदेवीरभिष्टयः इत्यादिको मन्त्रः । पूजाहवनादौ लोहात्कृष्णलोहादर्चा प्रतिमा, शैलेयकं सुगन्धद्रव्यं मुस्ता तथा ये शुक्त्या नखेन युक्ता उत्कटगन्धाः गन्धतोऽधिकाः गिरिकर्णिका

स पञ्चकोणे स रथाधिरुढो -दण्डाक्षमालावरदाम्बुपत्रः ॥

मन्त्रः

ॐ अन्नात्परिस्रुतोरसं ब्रह्मणा व्यपिवत् क्षत्रं पयः सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस ऽ इन्द्रस्येन्द्रियमिदं पयो ऽ मृतं मधुः ॥

स्नानम्

एलया च शिलया समन्विते वारिभिः सकलमूलकुङ्कुमैः ।
स्नानतो भृगुसुतोपपादितं दुःखमेति विलयं न संशयः ॥

दानम्

चित्रवस्त्रमपि दानवार्चिते दुष्टगे मुनिवरैः परिगीतम् ।
तण्डुलं घृतसुवर्णरुप्यकं बज्रकं परिमलो धवल ऽ श्वः ॥

२. शनेः

चापाशनो गृध्ररथः सनील प्रत्यङ्मुख; कश्यपजः प्रतीच्याम् ।
सशूलचापेषु वरप्रदश्च सौराष्ट्रदेशप्रभवश्च सौरिः ।

प्रसिद्धा अतसी पुष्पाणि, स्पन्दनं स्पंदिकिंचिच्चलने ऽ र्थाच्चलद्दलं अश्वत्थपत्रं अञ्जनं सिग्रुएषां पुष्पाणि आदिग्रहणादन्यान्यपि श्यामपुष्पाणि कृष्णापराजिता प्रभृतीनि । अशनानि भोजनानि कृष्णतिलाः कृष्णमाषाः कृष्णचणकाः, निष्पावा कृष्णशालयः एवं मुख्याः प्रधाना येषां तानि भोज्यानि अन्यानि च वातबहुलानि वातवर्द्धकानि सर्वाण्येव । दक्षिणा च प्रेष्या दासी अतीता निष्क्रान्ता वयो यस्या स्तां अञ्जन-शीस-कृष्ण-लोह-युतां अञ्जनं कज्जलं सीसं लोहञ्च तैर्युतां नेत्रयोः कज्जलेन कर्णयोः सीसाभरणेव हस्तयोः कृष्णलोहनिर्मित-वलयेन युक्तां तां आर्कि शनैश्चर मुद्दिश्या ऽभिसंधाय वृषलिपतिं बृद्धमूर्खेभ्यो दद्यात्प्रतिपादयेत । वृषली शूद्रिणी तस्याः पति बृद्ध श्चतुः षष्ट्यधिकवयस्कः मूर्खो ऽनक्षरः ॥१७-१९½॥

## अथ राहोराह–

१ वैभीतक्यः समिधो राहो र्होमेना ऽथवा दूर्वा ॥२०॥
मंत्रः कयानश्चित्र स्तस्यार्चा च नागमयी ।

---

मन्त्रः

ॐ शन्नो देवीरभिष्टय ऽ आपो भवन्तु पीतये शंय्योरभिस्रवन्तु नः ।

स्नानम्

असित तिलाञ्जनलोध्रबलाभिः शतकुसुमान्वितलाजयुताभिः ।
रवितनये कथितं विषमस्थे दुरितहृदाप्लवनं मुनिमुख्यैः ॥

दानम्

नीलकं महिषं कृष्णं वस्त्रं लौहं सदक्षिणम् ।
दद्याच्च दक्षिणायुक्तं शनिदौष्ट्यप्रशान्तये ॥

१. राहोः

पैठिनसौ वर्वरदेशजातः सूर्यासनः सिंहगमः सध्रूम्रः ।
याम्याननोः नैर्ऋतिगः करालो वरप्रदः शूलसचर्मखड्गः ॥

मन्त्रः

ॐ कयानश्चित्र ऽ आभूव दूती सदा वृद्धः सखा । कया शचिष्ठया वृता ॥

स्नानम्, राहुकेत्वोः

लोध्रगर्भतिलपत्रकमुक्ता हस्तिदानमृगनाभिपयोभिः ।



उद्दिश्य सैंहिकेयं महिषं प्रतिपादयेत्सुवृद्धेभ्यः ॥२१॥
विप्रेभ्य इति यदन्य त्तत्सर्वं सूर्यपुत्रसमम् ॥२१½॥

सैंहिकेयस्य राहोः विभीतकीवृक्षात्समिधः स्रुक् च अथवा दूर्वा समिधः मन्त्रश्च "कयानश्चित्रपूर्वकः" प्रतिमा च नागमयी सीसमयी । सैंहिकेयं राहुमुद्दिश्य महिषं सुवृद्धेभ्यो ऽतिवृद्धेभ्य श्चतुरसीत्यधिकाब्देभ्यः प्रतिपादयेत् दद्यात् । अन्यत् परिशिष्टं यन्नोक्तं तत्सर्वं निरवशेषं सूर्यपुत्रेण समं तुल्यं, तेन शैलेयकं मुस्ता शुक्त्युत्कटा गन्धाः. गिरिकर्णि-कातसी स्पन्दनाञ्जनादीनि कृष्ण-पुष्पाणि अशनानि कृष्णतिलमाषचणकनिष्पावमुख्यानि महिषं च कृष्णवर्णं कज्जल-सीश-लोह-भूषितं दद्यात् इति ॥२०-२१½॥

## अथ केतोराह–

२ केतोः कांसी प्रतिमा केतुं कृण्वन्न केतवे मन्त्रः ॥२२॥
अरण्यकुसुमपूजा स्रुक् समिधः खादिराः कुशमय्यः ॥

मांसोदनमशमं ब्रह्मबन्धुवर्गस्य दक्षिणा देया ॥२३॥
प्रहरणफल्गुद्रव्याण्यन्यदपि केतुमुद्दिश्य ॥२३½॥

केतोः शिखिनः कांसी कांसमयी प्रतिमा कार्या, मन्त्रश्च पूजाहवनादौ केतुं कृण्वन्न केतवे इत्यादिकः । अरण्यभवैः कुसुमैः पूजा स्रुक् समिधो यथाक्रमं खदिरः कुशमय्यः ।

---

स्नानमार्त्तिमिह कृन्तति राहोः साजनूत्रमिदमेव च केत्वोः ॥

दानम्

राहोर्दानमिदं मेषो गोमेदं लौहकम्बलौ ।
सुवर्णं नागरुप्यञ्च सतिलं ताम्रभाजनम् ॥

२. केतोः

ध्वजासनो जैमिनिगोत्रजातो ऽन्तर्वेदिदेशः सुविचित्रवर्णः ।
याम्याननो वायुदिशी प्रखड्गचर्मा शिखी चाष्टसतोत्तटेकः ॥

मांसेनामिषेण सहितमोदनं भक्तं, अशनं भोजनं दक्षिणा च ब्राह्मणा बान्धवा येषां स्वत श्वाब्राह्मणाः तद्वर्गस्य तत्समूहस्येत्यनेन. कुण्डगोलकाद्यवलोटसंज्ञकायेत्यर्थः । दक्षिणा देया दातव्या केतुं समुद्दिश्याभिसंधाय, किं तत् प्रहरण-फल्गुद्रव्याणि प्रहरणान्यायुधानि खड्ग कटहारकासिपुत्रि वङ्कपासतोमरगदादीनि फल्गुन्यन्यसाराणि च द्रव्याणि लोहसीसकांस्या-द्यल्पमूल्यानि देयानीत्यर्थः ॥२२-२३½॥

वराहमिहिराचार्यकृते ऽस्मिन्नतसागरे ।
अर्थिनामुत्पल श्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यक्ष्ये ऽश्वमेधीययात्राविवृत्तौ ग्रहयज्ञाध्यायो विंशः ॥२०॥

मन्त्र:

ॐ केतुं कृण्वन्न केतवे येशो मर्या ऽ अपेशसे । समुषद्भिरजा यथा ॥

दानम्

केतौ वैदूर्यममलं तैलं मृगमकस्तथा ।
ऊर्णा स्तिलाश्च संयुक्ता दद्यात्क्लेशापनुत्तये ॥

# अधुना ऽग्निलक्षणा ऽध्यायो व्याख्यायते

## तत्रादावेवाग्निहवनमाह–

कृत्वैवं ग्रहपूजामृचा ततश्चाग्निलिङ्गया जुहुयात् ।
श्लोकां स्तस्मिन्नर्थे काश्यपमुनिचोदितान् वक्ष्ये ॥१॥

एवं मुक्तेन प्रकारेण ग्रहाणां पूजामर्चां कृत्वा ततो ऽनन्तरं अग्निलिङ्गया अग्नेर्लिङ्गं चिन्हं यस्यास्तादृशया ऋचा मन्त्रेणेत्यर्थः । तथा ऽग्निलिङ्गयार्चा ऽग्निं जुहुयात्, पुरोधा । अस्मिन्नर्थे हवनार्थे ऽहं काश्यपमुनिचोदिताः काश्यपेन मुनिना स्वसंहितायां चोदितान् वक्ष्ये कथयिष्ये ॥१॥

## ताँश्चाह–

ततो ऽप्रति[१] रथं कृत्स्नं यात्रालिङ्गं च यद्भवेत् ।

१. आमन्द्रैरा । द्रहरिभाइर्या हि मयूरा ३ रोमाभा ३ इः ।
मात्वाकाइचीत् । निमयू २३४ रीत् । नपाशिनाः ।
अतिधान्वे २ । वता २३ । आ २ इहा २३४ औहोवा ।
वा २३४ याः ॥
आमन्द्रैरिन्द्र । हा ५ रिभाइ । याहिमयूररोमभाईः ।
मात्वाका २३ इचीत् । नाइयेमूरित् । नपाशा २३ इनाः ।
अताइधा २३ न्वे । वता २३ः । आ २ इहा २३४ औहोवा ।
बयो ३ भी २३४५ः ॥

आयुष्यमरभयं चैव सर्वं चैवापरा ३ जितम् ॥२॥

आमन्द्रैरिन्द्र । हा ५ रिभीः । याहिमयूररोभाउ ।
वा २ । मात्वा २ । केचिन्नियेमुरिन्नपाशिना ओ ।
वा २ । आनी २ धन्वेवता ३१ ओवा २३ । ई २३४ हो ॥

सामवेद प्र. ३, २, १, ४

इति अप्रतिरथ मन्त्राः ।

२. ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये सामं प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये । वागोजः सहौजो मयि प्राणापानौ ॥
यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृणं बृहस्पतिर्मे तद्दधातु ।
शन्नो भवतु भुवनस्य यस्पतिः ॥

भुर्भुवः स्वः । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥
कया नश्चित्र आभुवदूती सदावृधः सखा । कयाशचिष्ठया वृता ॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः दृढा चिदारुजे वसु ॥
अभीषुणः सखीनामविता जरितृणाम् । शतं भवास्यूतिभिः ॥
कया त्वन्न ऊत्याभि प्रमन्दसे वृषन् । कया स्तोतृभ्य आभर ॥
इन्द्रो विश्वस्य राजति । शं नो अस्तु द्विपदे शं चतुष्पदे ॥
शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा शंन ऽ, इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥

शं नो वातः पवतां शं नस्तपतु सूर्यः । शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥
अहानि शं भवन्तु न शं रात्री प्रति धीयताम् । शं न ऽ इन्द्राग्नि भवतामवो भिः शं न इन्द्रावरुणा रात हव्या । शं न इन्द्रापूषणा वाजसातौ शमिन्द्रा सोमा सुविताय शं योः ॥

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥
स्योना पृथिवी नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥
आपोहिष्ठा मयो भुवस्ता न ऊर्जे दधातन । महेरणाय चक्षसे ॥



यो वः शिवतमो रसस्तस्य
भाजयतेह नः । उशती रिवमातरः ॥
तस्मा अरङ्गमामवो यस्य क्षयाय
जिन्वथ । आपो जनयथा च नः ॥

द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्ति ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्ति सामा शान्ति रेधि ॥

दृते दृंह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ॥
दृते दृंह मा । ज्योक्ते संदृशि जीव्यासम् ॥ ज्योक्ते संदृशि जीव्यासम्
नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवोभव ॥

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे । नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥

यतो यतः समीहसे ततो नो अभयं कुरु । शं नः कुरु प्रजाभ्यो ऽभयं नः पशुभ्यः ॥
सुमित्रिया नः आप ओषधय. सन्तु दुर्मित्रियस्तस्मै सन्तु यो ऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥

अभयगणः

शु. य. सं. अ. ३६

३ उत्वामदन्तुसोहोमाः । कृणौ हो । घ्वरौहो धा अद्रिवाः । अ । वब्रा २३ ह्म । द्विषा २ः । ह । २ इ । औ ३ हो १ ये ३ । जा २ हा २३४ औहोवा ए । ३ । ययू २३४५ः ॥

अपराजितमन्त्रः

सामवेद उत्तरार्चिकस्य ६, १, ३, १

४ शर्म ⁵वर्म गणं चैव तथा स्वस्त्य⁶यनं गणम् ।
एतान् पञ्चगणान् हुत्वा संस्थाप्यग्निं यथाविधि ॥३॥
भूत ७ भूतेति च गणो यत्ते ८ चन्द्र स्तथैव च ।

---

४. वाङ्मनः प्राणः प्राणः, इत्यादयः १७ मन्त्राः

शर्ममन्त्राः ।

सामन्यरण्यगाने षष्ठप्रपाठके द्वितीयाध्यायस्य ।

५. मर्माणिते वर्मणाच्छादयामि सोमस्त्वा राजामृते नानुवस्ताम् ॥
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वा नुदेवा मदन्तु ॥

वर्ममन्त्रः ।

शुक्ल यजुर्वेद संहिता अ. १७ मन्त्रः ४६॥

६. स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पति र्दधातु ॥
विश्वानि देव सवितुर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ॥
एतत्त देव सवित यज्ञं प्राहुबृहस्पतये ब्रह्मणे यज्ञभव तेन यज्ञपतिं तेन मामव ॥
शन्नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शन्न ऽ इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥
अहानि शंभवन्तु नः शं रात्रीः प्रतिधीयताम् ।
शन्न ऽ इन्द्राग्नी भवतामवोभिः शन्न ऽ इन्द्रावरुणारातहव्या शन्न ऽ इन्द्रापूषणा वाज-
सातौ शमिन्द्रा स्तोमा सुविता शँय्योः ॥

स्वस्त्ययन मन्त्राः ।

शु. य. सं

७ हाउ हाउ हाउ भूता ओवा । इत्यादि

भूत मन्त्रः ।

सामन्यरण्य गाने ६ प्रपाठके २३ मन्त्रः

८. यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे ।



ऐन्द्रो ९ गण स्तथा चान्द्रो-१० मंत्रा ११ शीः सूक्तमेव च ॥४॥

---

तेनास्मै यजमानायो राये कृध्यधिदात्रे वोचः ॥

शुक्ल सं. अ. ६, मं. ३३।

९. यो जात एव प्रथमो मनस्वान्देवो देवानक्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मन्हा स जनास इन्द्रः ॥

यः पृथिवीं व्यथमानाम दृं हद्यः पर्वतात्प्रकुपितां अरम्णात् ।
यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात्स जनास इन्द्रः ॥

यो हत्वा हिमरिणात्सप्त सिन्धून्यो गा उदाजपधा बलस्य ॥
यो अश्मनोरन्तरग्निं जेजान संवृक्समत्सु स जनास इन्द्रः ॥

य स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम् ।
येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः ।

श्वघ्नीव यो जिगीवां लक्षतादर्दयः पुष्टानि स जनासः इन्द्रः ।
सो अर्यः पुष्टीर्विज इवामिनाति श्रदस्मै धत्त स जनास इन्द्रः ॥

इन्द्रगण मन्त्रः ।

ऋग्वेद सं. अ, २ वर्गः ७ ।

१० चन्द्रमा आउवा । प्सवान्ता उवा । सुपर्णोधा उवा । वदेदिवि ।
नवो हिरा उवा । ण्यनाइमाया उवा । पदंविन्दाउवा । तिविद्युताः ।
वित्तम्मा आउवा । स्यरोदा २३ सा ३४३ इ । ओ २३४५ इ । डा ॥

चन्द्रमा आ । प्स ३ आन्ता ३ रा । सुपर्णोधाव । ता २३ इ । दिविया नवो २ हिरण्य-
नेमयः पदं विन्द । तिविद्युतो २३४ हाइ । वित्त होई । म आ २३ हो । स्यरोदा
२३ सा २३ सा ३४ इ । ओ २३४५ इ । डा ॥

चन्द्रामा ३ आप्सुवन्तरा । सुपर्णोधा । वताइदा १ इवी २ । नवो २ हिरण्यनेमयः पदं

भूयो भूयस्तथा ज्वालां संस्पृष्याथ पुरोहितः ।
स्पृशेच्च नृपतिं मन्त्रै रुच्चै र्भूयात् पुनः पुनः ॥५॥

ततो ऽप्रतिरथं नाम मन्त्रं, आशुः शिशान इत्येतत्पूर्वकं कृत्स्नं निरवशेषं जुहूयात्। तत्रैव यात्रालिङ्गं यत्र पठ्यते, येन यात्रा लिङ्ग्यते चिन्ह्यते तदपि जुहूयात् । तथा द्वितीयं गणं आयुष्यं अभयं तत्रैव पठ्यते तं च जुहूयात्। तथा तेनैव प्रकारेण तृतीयं अपराजितं सर्वं निःशेषं जुहूयात्। चतुर्थं शर्म वर्म गणं जुहूयात्। तथा तेनैव प्रकारेण पञ्चमं स्वस्त्ययनं नाम मन्त्रगणं जुहूयात्।

उक्तञ्च--

अथातिरथः समस्तो यात्रालिङ्गस्तथा भयस्य गणः ।
स्वस्त्ययनशर्मवर्मापराजितायुष्यसंज्ञाश्च ॥

एवमेतानुक्तान् पञ्चगणान् हुत्वा यथाविधिर्यथाविधानेनाग्निं संस्थाप्य प्रज्वाल्य एतान् मन्त्रगणान् जपेत् कानित्याह। भूतं चेति च गणं जपेत्, यत्ते चन्द्र इत्यादिकं

---

विन्द। तिविद्यूता २३ः। वित्त होइ। म आ २३ हो। स्यरोदा २३ सा ३४३ इ । ओ २३-४५ इ ॥डा॥

चन्द्रमा अप्सुवा । तारा। सुपर्णो धावतेदा २३ इवी। नवो २३ होइ। हिरण्यनेमयः पदं विन्द। तिविद्यूता २३ः। वित्त होइ। म आ २३ इहो। स्यरो २३। दा २ सा २३४ औ होवा । ऊ ३२-३४ पा ॥

चन्द्रगः

सामवेद संहिता ११, १, ३२–३४

११. आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्यो ऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णूरथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे नः पर्जन्यो वर्षतु फलवत्यो न ऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

आशीर्वाद मत्रं

शुक्ल. सं. अ. २२ मं. २२



अन्यं जपेत्, तथेन्द्रोगण श्चान्द्रश्च मन्त्रगणो जपेत्, अन्यं आशीः सूक्तं मन्त्रं जपेत्।

उक्तञ्च--

यत्ते चन्द्रेति गणो यत्त चन्द्राश्च भूत भूतेति ।
सूक्तमहाव्याहृतयो मन्त्राशी वैष्णवा मन्त्राः ॥

भूयो भूय इति एतान् मन्त्रगणान् जप्त्वा हुत्वा च भूयो भूयः पुनरग्निज्वालां पुरोहितः संस्पृश्याथानान्तरं पुरोहित आचार्यो नृपतिं राजानं एतैर्मन्त्रैः स्पृशेत । उच्चैरुच्चतरं कृत्वा वक्ष्यमाणो मन्त्रगण पुनः पुनः ब्रूयात्, वहुवारान् पठेत ॥२–५॥

## अधुना तमेव मन्त्रगणमाह–

१ चक्षुर्दः प्राणदश्चापि वर्चोदश्च भवत्प्रभवत्प्रभो ।
अनाधृष्यतमश्चासि यथा त्वं हव्यवाहनः ॥६॥

शात्रवाणां तथा राजाप्यना धृष्यो भवत्ययम् ।
हूयमान निमित्तानि वक्ष्याम्यह मतः परम् ॥७॥

चक्षुर्द इति। हे हव्यवाहन अग्ने राज्ञः, असि त्वं चक्षुर्दो नेत्रदो भव, प्राणदो भव बलदो भव, वर्चोद स्तेजःप्रदो भव, प्रभो ? स्वामिन् ? यथा त्वं अनाधृष्यः अन्येनाभिभवनीयः मत्तश्चासि भवसि न केनचिदभिभवं कर्तुमशक्यस्तथाऽयं राजा शात्रवाणां शत्रुसमूहानां अनाधृष्यतमो भवतु, एवं पुनः पुनः उच्चैः पठित्वा समापयेत्। अतोऽस्मात् परं अहं हूयमाने ऽग्नौ निमित्तानि शुभाशुभानि वक्ष्यामि कथयिष्यामीत्याचार्यो वक्तिः। द्विविधो ऽग्निहूयमानो हुतश्च। तत्राग्न्युपसमाधानादूर्ध्वं प्रधानाऽऽहुतिं यावद्धूयमानः प्रधा–

---

१. तनूपा ऽ अग्नेसि तन्वम्मे पाह्यायुर्दा ऽ अग्नेस्यायुर्मे देहि वर्चोदा ऽ अग्नेसि वर्चो मे देहि । अग्ने यन्मे तन्वाऽऊनन्तम ऽ आपृण ॥

शुक्ल. सं. अ. ३। मं. १७

नाऽऽहुतिदानात्परतो हुतः । हूयमानकाले निमित्तविचारः कर्तव्य इत्युक्तं भवति ॥६-७॥

## अथ निमित्तान्याह–

कम्पोत्कासविजृंभणप्रचलनस्वेदस्रुपातक्षुतं
गाद्गद्यं च पुरोधसः स्मृतिविपच्चानिष्टमन्यच्छुभम् ।
आज्यं केशपिपीलिकामलयुतं सत्त्वावलीढं च यत्
तन्नेष्टं शुभमन्यथोपकरणं द्रव्याण्यनूनानि च ॥८॥

पुरोहितस्य यदि अनिमित्तं अकारणं कम्पोऽङ्गस्य सकलस्य कम्पः, उत्कासः कफशून्यः केवलं कासबाहुल्यं, विजृंभणं जृंभा, प्रचलनं पश्चाद् विसर्पणं पश्चाद्गमनं, एकस्मिन् विरुद्धेऽङ्गे वा स्वेदो धर्मजलविन्द्वाधिक्यं, अस्रुपातो नेत्रस्राव, क्षुतं नासाशब्दः छिक्केति । केचित् क्षुवमिति पठन्ति, क्षुत् बुभुक्षा यद्यनिमित्तमुत्पद्यते, गाद्गद्यं वचनस्याऽस्फुटता स्मृतिविपत् स्मरणस्य विस्मृतिः, एताश्चानिष्टं अशुभम् । अतोऽन्यत्परिशिष्टं शुभम् । अकम्पोऽनुत्कासोऽविजृंभणं अचलनमस्वेदोऽनस्रुपातोऽक्षुतमनगाद्गद्यं क्रमादुत्तरकर्म-मृतिश्चेच्छोभनमित्यर्थः । तथाऽऽज्यं घृतं केशैः कचैः पिपीलिकाभिः सरिसृपैर्मलेन च युक्तं सत्वैः प्राणिभिर्मार्जारविहगादिभिर्यच्चावलीढमास्वादितं तन्नेष्टं अशुभम् । अथान्येन प्रकारान्तरेणोक्तलक्षणवर्ज्यं शुभफलदं । तथोपकरणद्रव्याणि हवनीयाक्षतचरुगन्धाक्षतपुष्पधूपदीपलोपिकादीन्यन्यूनानि परिपूर्णानि शोभनानि हूयमाननिमित्तानि यानि ॥८॥

## तान्याह–

उत्थाय स्वयमुज्ज्वलार्चिरनलः स्वाहावसाने हवि –
र्भुङ्क्ते देहसुखः प्रदक्षिणगतिः स्निग्धो महान् संहतः ।
निर्धूमः स्वगतिः स्फुलिङ्गरहितो यात्रानुलोमो मृदु–
र्मुक्तेन्दीवरकाञ्चनद्युतिश्चरो यातुर्जयं शंसति ॥९॥

अनलोऽग्निः स्वयमचोदित उत्थाय ज्वलितो ज्वलार्चिः स्वाहावसाने स्वाहाकार समाप्तौ पूर्णाहुतिदानकाले हविर्हुतं भुङ्क्ते ज्वलयति, देहसुखः देहे शरीरे सुखोत्पादकः



प्रदक्षिणगतिः प्रदक्षिणावर्तज्वालः स्निग्धः पारुष्यरहितः महान् बृहत्समृद्धः संहतो घनः, निर्धूमो धूमरहितो गतिरकुटिलं कृत्वा ज्वलति केचित सुरभिः सुगन्ध इति वर्णयन्ति, स्फुलिङ्गरहितः कणवर्जितः यात्राऽनुलोमो यात्रा दिग्गति ज्वालः मृदुरकठिनो नाऽतितीव्रप्रतापः मुक्ताफलानां इन्दीवरस्य नीलोत्पलस्य काञ्चनस्य शदृशीं द्युतिं कान्ति धारयति, एवं विधोऽग्निर्यातुर्गच्छतः जयं शंसति कथयति ॥९॥

## अधुना ऽऽकारलक्षणान्याह–

इष्टद्रव्यघटातपत्रतुरगश्रीवृक्षशैलाकृति –
र्भेर्यब्धोदधिदुन्दुभीभशकटस्निग्धस्वनः पूजितः ।
नेष्टः प्रोक्त विपर्यये हुतवहः स्निग्धेऽन्यथापीष्टदः
साष्टाङ्गो नृपति दहन्नभिहितः शेषश्च लोकाद्वदेत् ॥१०॥

इष्टद्रव्याकारः शोभनद्रव्याणां चामरध्वजाङ्कुशसदृशाकारः तथा घटस्य कुम्भस्य आतपपत्रस्य छत्रस्य, तुरगस्याश्वस्य, श्रीवृक्षस्य विल्ववृक्षस्य, शैलस्य पर्वतस्य सदृशी आकृतिर्यस्य तथा भेर्यादि वादित्रस्य, मेघस्य उदधेः समुद्रस्य दुन्दुभेर्वादित्रस्य इभस्य गजस्य शकटस्य रथस्य एषां समस्वनः तुल्यशब्दः तथा स्निग्धशब्दश्च पूजितः शोभनः । नेष्ट प्रोक्त विपर्यय इति हुतवहोऽग्निः प्रोक्तात्कथिताद्विपर्यये विपरीतलक्षणे नेष्टो न शुभः । स्निग्धोऽन्यथापीष्टदोऽन्यथा विरुद्धलक्षणोऽपि स्निग्धश्चेत्तदपि इष्टः शुभफलप्रद इति स्निग्धत्वप्रशंसा । तथा सव्ये दक्षिणेऽङ्गे नृपतिं राजानं दहन् अभिहितोऽभिशोभनः शेषके लोकात शास्त्रात् वदेत कथयेत ।

तथा च योगयात्रायाम्––

कृतेऽपि यत्नेऽति कृशः कृशानु–
र्यातव्यकाग्रा विमुखो नतार्चिः ।
वामीकृतावर्त्तशिखोऽति धूमो–
विच्छिन्न सा कम्पविलीनमूर्त्तिः ॥

सिमिसिमायत चास्य हविर्हुतं
सुरधनुः सदृशः कपिसोऽथवा ।
सुखिरपीतकबभ्रु हरिच्छविः
परुषमूर्तिरनिष्टफलोऽनलः ॥

स्वकर-करभ-वानरानुरूपो
निगडविभीषणशस्त्ररूपभृद्वा ।
शशरुधिरवसास्थिवस्तगन्धो
हुतभुगनिष्टफलः स्फुलिङ्गकृच्च ॥

चर्मविपाटनतुल्य - निनादो
जर्जरमर्मविरुद्धरवो वा ।
आकुलयञ्च पुरोहितसभ्यान्
धूमखवैर्न शिवाय हुताशः ॥

हारकुन्दकुमुदेन्दुसन्निभः
संहतोऽङ्गसुखदो महोदयः ।
अङ्कुशातपनिवारणाकृति-
र्हूयतेऽल्पतपसां न हव्यभुक् ।

स्वाहावसानसमये स्वयमुज्ज्वलार्चिः
स्निग्धप्रदक्षिणशिखो हुतभुक् नृपश्च ।
खड्गादिवारकसुतां जलचारुहारां
धात्रीं समुद्ररसनां वशगां करोति ॥

चामीकराशोककुरण्डवाब्ज
वैडूर्यनीलोत्पलसन्निभेऽग्नौ ।
न ध्वान्तमन्तर्भवने शशाङ्कं
करोति रत्नांशुहतो नृपस्य ॥

येषां रथौघार्णवमोघदन्तिनां



समस्वरोऽग्नि र्यदि वापि दुन्दुभेः ।
तेषां मदान्धे घटवद्विघट्टिता
भवन्ति याने तिमिरोपमादिशः ॥

ध्वजकुम्भहयेभ-भूभृता -
मनुरूपे वशमेति भूभृताम् ।
उदयास्तमया धराधरा
हिमवद्विन्ध्यपयोधरा धराः ॥

द्विरदमदमहीसरोजलाजै -
र्घृतमधुरा च हुताशने सगन्धे ।
प्रणतनृपशिरोमणिप्रभाभि -
र्भवति पुरच्छुरितेव भूनृपस्य ॥

वराहमिहिराचार्यकृतेऽस्मिन् मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥१०॥

इति भट्टोत्पलविरचितायां यत्येऽश्वमेधीययात्राविवृतौ वह्निलक्षणाऽध्याय एकविंशः ॥ २१ ॥

# अधुना प्रस्थानिकं व्याख्यायते

## तत्रादावेव विधानमाह—

१ व्रजेद्दिगीशं हृदये निवेश्य
यथेन्द्रमैन्द्र्या मपरांश्च तद्वत् ।
सुशुक्लमाल्याम्बरभृन्नरेन्द्रो
विसर्जयेद्दक्षिणपादमादौ ॥१॥

नरेन्द्रो राजा दिगीशं दिक्पतिं हृदये निवेश्य मनसि सञ्चिन्त्य व्रजेत यायात् । तत्र

वसिष्ठः

१ दिगिश्वराकृतिं कृत्वा सुवर्णेन स्वमन्त्रकैः ।
स्वस्ववर्णैः स्वगन्धाद्यै धूपैर्दीपैर्मनोरमैः ॥
तद्वर्णवस्त्रनैवेद्यै र्भक्त्या सम्यक् प्रपूजयेत् ।
दिगीशं च सुसम्पूज्य तिलहेमञ्च कारयेत् ॥
दैवज्ञाय ततो दद्यात्प्रतिमां भूषणान्विताम् ।
देवान्गुरुन्पितृन्विप्रान्स्वस्तिवाचनपूर्वकान् ॥
नत्वा तुष्टः प्रतिमना व्रजेन्मङ्गलनिःस्वनैः ।

नारदोऽपि

हुताशनं तिलैर्हुत्वा पूजयेत्तु दिगीश्वरम् ।
तथा प्रणम्य देवभूदेवानाशीर्वादैर्नृपो व्रजेत् ॥



कस्यां दिशि को दिक्पतिरिति तदर्थमाह–। यथेन्द्रमैन्द्र्यामिति । यथा येन प्रकारेण इन्द्रं शतक्रतुं ऐन्द्र्यां पूर्वस्यां दिशि अधिपतिः, अपरान् अन्यान् अग्न्यादींश्च तद्वत्तेनैव प्रकारेण । एवं पूर्वस्यामिन्द्रादित्यौ, आग्नेयामग्निशुक्रौ, दक्षिणस्यां यमाङ्गारकौ, नैर्ऋत्यां राहुरक्षसौ, पश्चिमायां वरुणसौरी, वायव्यामिन्दुवायू, उत्तरस्यां कुबेरबुधौ, ऐशान्यां रुद्रजीवौ, इति एवं दिक्पतिं ध्यात्वा व्रजेत् । किं भूतो राजा सुशुक्लमाल्याम्बरभृत् । सुशुक्लानि माल्यानि स्रजोऽम्बराणि बिभर्ति धारयति तथा भूतः, आदौ प्रथमं दक्षिणं सव्यं पादं चरणं विसर्जयेत् दद्यात् ॥१॥

## पुनरप्याह—

सितातपत्रो मणिरत्नशोभः
प्रधूयमानैः सितचामरैश्च ।
जयस्वना पूरितराजमार्गो
द्विजेन्द्रमन्त्राभिविवृद्धतेजाः ॥२॥

सितातपत्रः श्वेतछत्रः मणिरत्नैः प्रधानरत्नैः मरकतपद्मरागेन्द्रनीलप्रभृतिभिः शोभा यस्य तथा भूतस्तथा प्रधूयमानैश्चाल्यमानैः सितचामरैः श्वेतबालव्यजनैश्च युक्तः शोभितः ।

दिगीश्वरचक्रम्

| | | |
|---|---|---|
| ई. रुद्र बृहस्पति | पू. इन्द्र सूर्य | अ. अग्नी, शुक्र |
| उ. कुबेर बुध | | द. यम, मंगल |
| वा. चन्द्र वायु | प. वरुण, शनि | नै. राहु, राक्षस |

तथा वन्दिजनेन यो जय जय शब्द उद्घोषित स्तेन ऽऽपूरितो राजमार्गो नृपवीथिर्यस्य तथा द्विजेन्द्रै ब्राह्मणश्रेष्ठैर्ये मन्त्राः पठ्यन्ते, तैरभिवृद्धं तेजो यस्य स तथा भूतः ॥२॥

## पुनरपि विशेषेण प्रस्थानविधानमाह–

१कल्याणनाम सचिवाप्तजना ऽऽयुधीय
दैवज्ञविप्रजनकञ्चुकि मध्यसंस्थः।
द्वात्रिंशतं समुपगत्य पदानि भूमौ
प्रागादिनागरथवाजिनरैः प्रयायात् ॥३॥

कल्याणनाम येषां सचिवानां मन्त्रिणां यथा जयराज सङ्ग्रामराज व्याघ्रराज रणसिंह जयसिंह इत्यादि' एवं विधानां मन्त्रिणां वा युवास्वरो येन नाम्ना तन्नामवतां तथा ऽऽप्तजनानां बान्धवानां आयुधीयाना आयुधं राजकीयं ये धारयन्ति तेषां तथा दैवज्ञानां कालविदां सिद्धान्तविदां विप्रजनानां ब्राह्मणानां कञ्चुकीनां कवचधारिणामन्तःपुराधिपतिनां

---

लल्लः

१ स्वनिकेताद्देवगृहात्प्रधानदाराश्रयाद्गुरुगृहाद्वा।
यायात्कृताग्निकार्यः प्राश्यहविश्यं द्विजानुमतः॥
द्विजो विष्णुक्रमाद्भूपं मन्त्रेणानेन चालयेत्।
इदं विष्णुर्विचक्रमं इत्येवं पादमुद्धरेत्॥
मङ्गलानि ततः पश्यन् स्पृशञ्छृण्वन्नृपो व्रजेत्।

चण्डेश्वरः

क्रोशं वा यदि वाप्यर्द्धं प्रथमे ऽहनि शस्यते।
द्वितीये योजनं गत्वा निवसेत् महीपतिः॥
तृतीये योजनं सार्द्धं वसेदाक्रम्य दूरतः।
ततः परं यथेष्टं तु मार्गे यायान्महीपतिः॥



मध्यस्थितो यायात्। हस्तिनमारुह्य पूर्वस्यां गच्छेत्, एवं दक्षिणस्यां रथेन, पश्चिमां वाजिना उत्तरां नरैर्मनुष्यैरर्थात्सिविकया।

उक्तञ्च योगयात्रायाम्–

सर्पिस्तिलौदनमयैः पयसा च भुक्त्वा
पूर्वादिवारणरथाश्वनरै र्गतस्य।
सोढुं प्रतापमरयो न नृपस्य सक्ता
गन्धद्विपस्य कलभा इव दानगन्धम्॥

अधुना वाहनारोहणसमये यात्राकालनिर्णयकर्तृदैवज्ञं संपूज्य स्वर्णायुपेतं तिलघृतपूर्णपात्रं तस्मै दत्वा तदनुमत्या वाहनमारुह्य गच्छेदित्युक्तं कश्यपेन।

तद्यथा–

दैवज्ञं पूजयित्वा तु तिलाज्यस्वर्णसंयुतम्।
दत्वा ताम्रमयं पात्रं दिश्य यानेन वै व्रजेत ॥३॥

## अथा ऽधुना गजाश्वलक्षणानि वक्तुमिच्छुराह–

माभूत्प्रसङ्गादतिविस्तरो ऽत्र
गजाश्वपुंलक्षण-दर्शनेषु।
निमित्तमात्रं कथयाम्यतो ऽहं
प्रयाणकालोपयिकं नृपाणाम् ॥४॥

अतो ऽस्मादनन्तरं अहं गजानां हस्तिनां अश्वानां वाजिनां पुरुषाणां लक्षणेषु शुभाशुभेषु तथा दर्शनेषु आलोकनेषु च निमित्तमात्रं शकुनमात्रं प्रयाणकाले यात्रायामुपज्यते नृपाणां राज्ञां तन्मात्रं कथयामि। प्रसङ्गात्प्रसक्ततया विस्तरो ऽत्र माभूत् संक्षेपेणैव कथयिष्यामि ॥४॥

अत्र आचार्यो गजाश्वलक्षणानि वक्ष्यति संहितायां उक्तत्वात् ।

तथा च –

श्रान्तस्य यानमशनञ्च बुभुक्षितस्य
पानं तृषा परिगतस्य भवेषु रक्षा ।
एतानि यस्य पुरुषस्य भवन्ति काले
धन्यं वदन्ति हि नरं नरलक्षणज्ञाः ॥५॥

एवं विधं नरमारुह्योत्तरां दिशं राजा गच्छेदिति ॥५॥

इति भट्टोत्पलविरचितायां यज्ये ऽश्वमेधीययात्राविवृत्तौ प्रस्थानिकनामा ऽध्यायो द्वाविंशः ॥२२॥

# अधुना गजलक्षणा ऽध्यायो व्याख्यायते

## तत्रादावेव गजानां शुभलक्षणान्याह–

१ ताम्रोष्ठतालुवदनाः कलविङ्कनेत्राः
स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः ।
चापोन्नतायतनिगूढनिमग्नवंशा –
स्तन्वेकरोमचितकूर्मसमानकुम्भाः ॥१॥

विस्तीर्णकर्णहनुनाभिललाटगुह्याः
कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च ।

१. यदाह पराशरः

विंशत्यष्टौ दश नखाः स्थिराः कूर्मसमाहिताः ।
गजानां पूजिताः पादा ये च खुरकचाविलाः ॥

परिणाहो दशसमो नवायामः स उच्छ्रयः ।
सप्त ज्येष्ठप्रमाणस्य नागस्य समुदाहृतः ॥

ज्येष्ठात् सप्तमभागोनो मध्यमो मध्यमाद्गजः ।
अन्त्य षड्भागहीनः स्यादतो ऽन्यो न स पूजितः ।

मुखादापेचकं दैर्घ्यं पृथु पार्श्वोदरान्तरम् ।
आनाह उच्छ्रयः पादाद्विज्ञेयो यावदासनम् ॥

रेखात्रयोपचितवृत्तकराः सुबाला
धन्याः सुगन्धमदपुष्करमारुता श्च ॥२॥

दीर्घाङ्गुलिरक्तपुष्कराः सजलाम्भोदनिनादबृंहिताः ।
बृहदायतवृत्तकन्धरा धन्या भूमिपतेर्मतङ्गजाः ॥३॥

भूपते राज्ञः एवं विधा मतङ्गजा हस्तिनो धन्याः शोभना इत्यर्थः । कीदृशाः ताम्रवर्णानि लोहितानि ओष्ठतालुवदनानि एषां ओष्ठं अधरं, तालुः आस्य पृष्ठभागः वदनं आस्यं कलविङ्कनेत्राः कलविङ्काः ग्रामचटका तन्नेत्रतुल्ये नेत्रे चक्षुषी येषां स्निग्धाः चिक्कणा उदूर्ध्वं नता प्राताः दशना दन्ता येषां । पृथुलं विस्तीर्णं आयतं दीर्घं चास्यं मुखं येषां । चापं धनुः शक्षेपावसरचापवत् क्रमेणोन्नत उच्च आयतो दीर्घ निगूढो ऽनुल्वणो निमग्नो नाभ्युन्नतो वंशः पृष्ठास्थिर्येषां । तनुभि रघनैरेकरोमचितैरेककूपस्थैरर्थात, एकरोमकूपे द्वित्रिरोमरहितैः, संयुक्तौ कूर्मसदृशौ कूर्माकारौ कुम्भौ कटौ येषां ते धन्याः मध्योन्नतौ कुम्भावित्यर्थः। विस्तीर्णौ पृथुलौ कर्णौ श्रोत्रे हनुनि प्रसिद्धे विस्तीर्णे नाभितुंदं ललाटं मुखं पृष्ठभागौ गुह्यं अपानस्थानं च विस्तीर्णं येषां कूर्मवदुन्नतौ द्विनवकैरष्टादशभिः विंशतिभिश्च नखै उपलक्षिताः । रेखात्रयेण दैर्घ्यस्थितेन मध्ये पार्श्वद्वयेन च तेनोपचितो युक्तो वृत्तो वर्तुलः करो हस्तः शुण्डादण्डो येषाम् । सुबालाः शोभना बालस्तनुरुहाः । तथा सुगन्धः शोभनगन्धो मदा दानाम्बुः पुष्करमारुतवत्प्रान्नवातो येषां ते धन्याः । गजानां करप्रान्ते मांसपेशी अङ्गुलिं वा करप्रान्तं सकलपुस्करमुच्यते । तयाऽङ्गुलिदीर्घा रक्तश्च पुष्करं येषां. सजल घनस्य यो निनादः शब्दः, तत्तुल्यं बृहणं गर्जितं येषां बृहती विस्तीर्णा आयता दीर्घा वृत्ता वर्तुला कन्धरा शिरोधरा ग्रीवा येषां ते मतङ्गजाः गजा धन्या इति ॥१-३॥

## अधुना ऽशुभलक्षणान् गजानाह–

निर्मदा ऽभ्यधिकहीननखाङ्गान्
कुब्जवामनकमेषविषाणान् १ ।

१. विषाणं बूयते शृङ्गं विषाणं दन्त उच्यते ।



दृश्यकोशफलपुस्करहीनान्
शावनीलशबलासिततालून् ॥४॥

स्वल्पवक्त्र रुहम त्कुण २ शुण्डान्
हस्तिनीं च गजलक्षणयुक्तान् ।

गर्भिणीं च नृपतिः परदेशं
प्रापयेदतिविरूपफलास्ते ॥५॥

ये गजा निर्मदा मदरहिताः न कदाचित्प्रमत्ता दृश्यन्ते, तान् गजान तथा अभ्यधिका हीना वा नखाः अङ्गानि अवयवानि च येषां अष्टादशेभ्यो नखेम्य ऽउना विंशतेरधिकानखाः अङ्गानां हीनाधिकत्वं च ज्ञायते एव सामान्यावयवेभ्यः स्थूलत्वे कृशत्वे चेत्यर्थः । तथा ये च गजाः, कुब्जाः कुब्जस्य लक्षणम् –

संक्षिप्तवक्षोजघनः पृष्ठ समुन्नतः ।
प्रमाणहीन उनाभिः स कुब्जो वारणाधमः ॥इति॥

एवं विधा ये कुब्जा तथा, वामनकस्य लक्षणम्–

अनाहार्यामसंपूर्णो यो ऽतिह्रस्वो भवेद्गजः ।
स वामनः समाख्यातो भर्तुर्नार्थ यशः प्रदः ॥

एवं विधा ये वामनकाः तथा मेषस्य बिषाणे शृङ्गे तत्सदृशे विषाणे दन्तौ येषां, दृश्यदृश्यमाने कोषफले बृषणौ येषां. अथवा कोशाल्लिङ्गचर्मणः फलं मणिलिङ्गाग्र–

२. सर्वलक्षण सम्पूर्णो दन्तैस्तु परिवर्जितः ।
मत्कुणः स समाख्यातः सङ्ग्रामे प्राणघातकः ॥

अनन्त्या ऽभ्यधिकं यस्य विस्तारेण स्तनान्तरम् ।
विकटः स च निर्दिष्टो दुर्गति निन्दितो गजः ॥

भागं दृश्यो येषां पुस्करं करप्रान्तं पद्माकारं तेन हीनं रहितं, श्यामं श्यामवर्णं मलिनं सत्त्वं नीलं नीलाकारं शबलं शुक्ल कृष्ण वर्णं बहुवर्णं वा असितं कृष्ण तालुमुखपृष्ठं येषां स्वल्पानि वक्ररुहा दन्तामुखं लोमानि च येषां।

मत्कुणो निर्दन्तः। तल्लक्षणम्-

सर्वावयव सम्पूर्णो दशनैः परिवर्जितः।
मत्कुणः सगजः प्रोक्तः सङ्ग्रामे स्वामिघातकः॥

तथा च यश्च शण्ढः। शण्ढलक्षणम्-

पादयोः सन्निकर्षः स्याद्यस्य नागस्य गच्छतः।
स शण्ठो ध्वनि युद्धे च लक्षणज्ञै र्न पूजितः॥

एवं विधान् दुष्टलक्षणोपेतान्, गजान्, नृपतिः, राजा परदेशं अन्यदेशं प्रापयेत् स्वदेशान्निर्वासये दित्यर्थः। तथा हस्तिनीं करिणीं दुष्टगजलक्षणोपेतां गर्भिणीं च गर्भयुक्तां च परदेशं प्रापयेत्स्वदेशान्निर्वासयेत्, यतो ऽस्मात् ते गजाः, अतिविरूपफला दुष्टफला इति हस्तिलक्षणम् ॥४-५॥

## अधुना गजानां निमित्ताश्रयं शुभाशुभमाह-

दन्तमूलपरिणाहदीर्घतां
द्विप्रमुच्य परतो ऽस्य कल्पयेत्।
श्याव-पूति-पलरक्त-दर्शनं
पापसत्वसदृशं च पापदम् ॥६॥

गजानां दन्तमूले यः परिणाहः परिधिः तस्य दीर्घतां द्विः प्रमुच्य द्विगुणं कृत्वा तत्प्रमाणं दन्तमूलात्परित्यज्य परतो ऽनन्तरं अग्रतः स्थितस्य दन्तिनो दन्तं कल्पयेत् छिन्द्यात्। तत्र श्यावः कपिशरूपो गन्धवान् पलसदृशो मांससदृशो वा रक्तं वा पापसत्त्वाः श्वख-



रकरभगृद्ध्रमार्जाराः तत्सदृशा दृश्यन्ते कल्पिते कर्तिते रदे सर्वं तत्पापफलदं दुष्टफलदमिति ॥६॥

## तत्रैव शुभनिमित्तान्याह-

पार्थिवोपकरणाकृतिं यदा
चिह्नमुद्वहति कल्पिते रदे।
श्रीजयार्थ बहुलं प्रवृद्धये
स्निग्धशुक्लरुचिराश्च शोभनाः ॥७॥

पार्थिवो राजा तस्योपकरणानि छत्रचामरगजाश्वखड्ग चर्म प्रभृतिनि तदा कृतिं सचिन्हं उद्वहति धारयति तच्चिन्हं कल्पिते छिन्ने रदे दन्ते सति श्रीर्लक्ष्मीर्जयः सङ्ग्रामविजयः अर्थो धनं बलं सेना वीर्यं येषां वृद्धये उपचयाय भवति। स्निग्धाः सस्नेहाः, शुक्लाः श्वेतवर्णाः रुचिरा दीप्तिमन्त श्चकारात् उक्ता ये पूर्वं ते ऽतीव शोभनाः ॥७॥

## अथान्यदपि चेष्टितमाह-

पापमप्यति विरूपमन्यतो
यादृशं भवति तद्विपर्यये।
दक्षवामरदयो विभेदतो
विस्तरो ऽन्यमुनिभिः प्रकीर्तितः ॥८॥

दक्षिणे सव्ये रदे कल्पिते छिन्ने पार्थिवोपकरणादि यदा शुभमुत्पद्यते, तदा ऽतीवात्यर्थः शोभनं श्रेष्ठम्। अन्यतो वामे यदा पाप सत्त्वाकृति दृश्यते तदा तदपि विरूपं अतीवा ऽशोभनम्। तद्विपर्यये विस्तरो ऽन्यमुनिभिः प्रकीर्तितः, वामे शोभनोत्पत्ति दक्षिणेत्वशोभनोत्पत्तिः तदा याप्यता अल्पफलता, शोभना ऽशोभनमुपरतेर्मध्यं फलम्। अन्यः

मुनिभिः पराशरादिभिः विस्तरः प्रकीर्तितः। अस्य गजस्य मुनिभि हस्तिवैद्यकर्त्तृभिः विस्तर उक्त इति ॥८॥

## अथ स्वतोदन्तभङ्गलक्षणमाह–

मूलमध्यदशनाग्रसंस्थिता
देवदैत्यमनुजाः क्रमात्ततः।
फीतमध्यपरिपेलवं फलं
शीघ्रमध्यचिरकालसभवम् ॥९॥

यथाक्रमं गजस्य दन्तमूले दन्तमध्ये दन्ताग्रे च देवदैत्यमनुजाः क्रमात् स्थिता, तद्यथा दन्तमूले देवा व्यवस्थिताः दन्तमध्ये दैत्याः दन्ताग्रे मनुजाः। ततः तस्माद्भागत्रयात्परिकल्पनया फलनिर्देशः। तत्र मूले वक्ष्यमाणं फलं फीतं परिपुष्टं मध्ये मध्यमं नात्यल्पं न च बहु, प्रान्ते परिपेलवं स्वल्पं तथा मूले वक्ष्यमाणं फलं शीघ्रकालेन स्तोकेनैव संभवति, सप्ताहमध्ये मध्यमेन कालेन सप्ताहात्परतः, अन्ते चिरेण कालेन मासान्ते मासात्परतः ॥९॥

## पुनरपि विशेषफलमाह–

दन्तभङ्गफलमत्र दक्षिणं
भूपदेशबलविप्लवप्रदम्।
वामतः सुतपुरोहिते भयान्
हन्ति साटविकदारनायकान् ॥१०॥

अत्र अस्मिन् भागत्रये दक्षिणदन्तभङ्गे यथाक्रमं दक्षिणे रदे मूलाद्भग्ने फुटिते च भूपस्य राज्ञो विद्रवः पलायनं, मध्याद्भग्ने देशस्य विद्रवः, प्रान्ते भग्ने बलस्य सेनाया विद्रवः। वामे अपसव्ये रदे मूलात् सुतं राजपुत्रं हन्ति, मध्ये पुरोहितं हन्ति, अग्रे उभयं हस्तिसादिनं हन्ति तथा न केवलं तानेव हन्ति, यावदेतानेव, आटविकदारनायकान्,



क्रमेण वामदन्ते मूलाद्भग्ने आटविकंबलं हन्ति, मध्याद्भग्ने दारान् राजकलत्रान् हन्ति अग्रभग्ने नायकान् प्रधाननृपपुरुषान् हन्ति मारयतीत्यर्थः ॥१०॥

## अथ पुनरप्यत्र विशेषमाह–

आदिशेदुभयभङ्गदर्शनात्
पार्थिवस्य सकलं कुलक्षयम्।
सौम्यलग्नतिथिभादिभिः शुभं
वर्द्धते ऽशुभमतो ऽन्यथा भवेत् ॥११॥

उभयोर्द्वयोर्दन्तयोर्भङ्गदर्शनात् भङ्गं स्फोटं वा यदि दृश्यते तदा पार्थिवस्य नृपतेः सकलं निरवशेषं कुलक्षयं वंशनाशं आदिशेद्वदेत्। सौम्यलग्नतिथिभादिभिः सौम्यस्य शुभग्रहस्य लग्ने शुभग्रहलग्नाः "वृषमिथुन-कर्कटकन्या-धन्विमीनाः" येषां शुक्रबुधपूर्णेन्दुजीवा अधिपतयः, एव सौम्यलग्ने सौम्येन तिथिना रिक्ता वर्जिताः नन्दाभद्राजयापूर्णाः तिथयः सौम्यं भं दारुणोग्रवर्ज्यं आदिग्रहणात् सौम्यस्थित्या सौम्यदृष्ट्या पापादृष्ट्या शुभचिन्हं वर्द्धते, अशुभत्वन्तु अस्मादुक्तादन्यथा पापलग्ने पापान्विते पापदृष्टे रिक्तायां दारुणोग्रनक्षत्रे अशुभं पापचिन्हं वर्द्धते मिश्रे मिश्रफलम्। अशुभं चिन्हं शुभकाले शुभचिन्हमशुभकाले चेन्मिश्रं फलम्, शुभचिन्हं शुभे काले सति अतीव शुभम्, तदुभयोरशुभत्वे ऽतीवाशुभमिति ॥११॥

## अधुनादन्तभङ्गस्य विशेषमाह–

क्षीरमिष्टफलपुष्पपादपे–
ष्वापगातटविघट्टनेन वा।
वाममध्यरदभङ्गखण्डनं
शत्रुनाशकृदतो ऽन्यथा परम् ॥१२॥

तत्र वामस्य मध्यात् भङ्गः स्फोटनं वा यदि क्षीरवृक्षस्या ऽर्कादेर्घट्टनेन चालनेन भवति तथा मिष्टफलस्य आम्रादेपुष्पपादपस्य च घट्टने, आपगा नदी तस्यास्तटविघट्टनेन वा दृश्य

ते, तथापि रिपुनाशनं करोति, अतो ऽन्यथा ऽस्मादुक्तप्रकारादन्यथा ऽनिष्ट वृक्षादेः घट्टनेन वामस्य वा मूलाग्रयोः भङ्गः खण्डनं वा तदा शत्रुवृद्धिमित्यर्थः । दक्षिणस्य मूलमध्याग्रश्चापि क्षीरवृक्षाद्यवघट्टनेन भङ्गे नतादृगशुभमित्यर्थः । अशुभाश्च वृक्षाः विभीतकादयो ऽन्येपि निःफलवृक्षाः ॥१२॥

## अधुना गजेङ्गितमाह–

स्खलितगतिरकस्मात्त्रस्य कर्णोऽतिदीनं
श्वसिति मृदुसुदीर्घं न्यस्तहस्तः पृथिव्याम् ।
द्रुतमुकुलितदृष्टिः स्वप्नशीलोरुनासो–
भयकृदहितभक्षी नैकशो स्रुक्सकृच्च ॥१३॥

अकस्मान्निमित्तं विना स्खलितगति स्खलिता विस्मृता गतिर्यस्य, अकस्मात्त्रस्तकर्णः चकित श्रोत्रः, अतिदीन अतिदैन्यं प्राप्तः अतीव पृथिव्यां न्यस्तहस्तः मृदुकृत्वा सुदीर्घं अति प्रभूतं स्वसिति श्वासं मुञ्चति, द्रुतमुकुलितदृष्टिः द्रुता भीता मुकुलिता दृष्टि श्चक्षूपी यस्मात् स्वप्न शीलः बहुकालं स्वपिति, विलोमा विपरीता गतिः एवं कृतोभयकृत् भयं करोति अहितभक्षी अहितं अपथ्यं भक्षयति, अनेकशो बहून वारान् स्रवति मूत्रं करोति, सकृत विष्टां च करोति ॥१३॥

## अन्यदप्येङ्गितमाह–

वल्मीकस्थाणुगुल्मक्षुपतरुमथनस्वेच्छया हृष्टदृष्टि–
र्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्रमुन्नम्य चोच्चैः ।
कक्षासन्नाहकाले जनयति च मुहुः सीकरं बृंहितं वा
तत्कोलं वा मदाप्तिर्जयकृदथ रदं वेष्टयन् दक्षिणं च ॥१४॥

एवं विधो गजो भर्तुर्जयं करोति, यदि वल्मीककृतं मृत्कुड्यं मथ्नाति तथा स्थाणु



शाखाछिन्नं वृक्षं स्थाणु शुष्कवृक्षं वा गुल्मः एकमूलः शाखासमूहः, क्षुपं शल्यं तृणसमूह गुल्मं, तरुवृक्षः एतान् यदि स्वेच्छया आत्मेच्छया अश्नाति, तथा हृष्टदृष्टिः हृष्टपरितुष्टा दृष्टिः चक्षुषी यस्य तथा त्वरितपदगतिः शीघ्रगामी वक्रं मुखं उच्चैः कुर्वन् उत्क्षिप्य यात्रानुलोमं यात्रादिशं यायाद्गच्छेत्, तथा कक्षासन्नाहकाले मध्यबन्धनप्रतिबन्धनवेलायां मुहुर्मुहुः पुनः पुनः शीकरं जनयति उत्पादयति वक्त्रादुदकं मुञ्चति, बृंहति बलबृंहन् उपगर्जनं करोति तत्कालमभिव्याप्य मदस्य प्राप्तिश्च, अथ शुण्डेन दक्षदन्तवेष्टनं च करोति स गजो गन्तुः जयदो भवतीत्यर्थः ॥१४॥

वराहमिहिराचार्यकृते ऽस्मिन् मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यज्ञे ऽश्वमेधीययात्राविवृतौ गजेङ्गिताध्यायस्त्रयोविंशः ॥२३॥

# अथाश्वलक्षणाध्यायो व्याख्यायते

## तत्रादावेव प्रयोजनप्रदर्शनार्थमाह—

आवर्तसत्वद्युतिवर्णजाति
यानं तुरंगादिगुणोपपन्नाः ।
संक्षेपतो ऽश्वाः विजयाय राज्ञा—
मावर्तलेशोपनयो यतो ऽयम् ॥१॥

राज्ञां नृपाणां अश्वाः तुरगाः आवर्तादिगुणोपपन्नाः विजयाय भवन्ति । आवर्तो रोमावर्तः सत्वः शूरता द्युतिः कान्ति श्चाकचिक्यं वर्णो रक्त-श्वेत-पीत-हरित कृष्णादि जाति वेशरादि यानं गति एभिः षड्भिर्दुष्टावर्तस्योपनयः । अतो ऽयं आवर्तलेशोपनय इति । अत्र किञ्चित्त्रुटितम् । — — — — — —
— — — — — — — — — — —
— — — — — — — — — — —
— — — — — — — — — — —

## अथाश्वलक्षणमाह—

१ दीर्घग्रीवाक्षिकूटस्त्रिकहृदयपृथुस्ताम्रताल्वोष्ठ जिह्वः
सूक्ष्मत्वक्केशवालः सुशफगतिमुखो ह्रस्वकर्णोष्ठपुच्छः ।

---

यदाह भगवान् पराशरः

१. जघन्यमध्यज्येष्ठानामश्वानामायतिर्भवेत् ।
अङ्गुलानां शतं ज्ञेयं विंशत्या दशभिस्त्रिभिः ॥



जङ्घाजानूरुवृत्तः समसितदशन श्चारुसंस्थानरूपो
वाजी सर्वाङ्गशुद्धो भवति नरपतेः शत्रुनाशाय नित्यम् ॥२॥

दीर्घ ग्रीवाक्षिकूटः । दीर्घा ग्रीवा शिरोधरा यस्या तथा दीर्घाक्षिकूटः अक्षिकूटं दृगाश्रयः । त्रिकहृदयपृथुः त्रिकं कटिभारः हृदयं हृत्स्थानं एते पृथुनी विस्तीर्णे यस्य । ताम्र ताल्वोष्ठजिव्हः ताम्रवर्णावोष्ठावधरौ यस्य । ताल्वास्यपृष्ठं जिव्हा रचना च यस्य । सूक्ष्मत्वक्केशवालः त्वक् चर्म केशा मूर्धजाः बालः पुच्छबालः एते सूक्ष्मा यस्य । सुसफगतिमुखः शफाः खुराः, गतिर्गमनं मुखं वक्रमेतानि सुप्रमाणेन गतिलक्षणेन युक्तानि यस्य सुशोभनत्वात् । ह्रस्वकर्णोष्ठपुच्छ कर्णौ श्रोत्रे ओष्ठ उत्तरोष्ठः पुच्छं पुच्छमूलं यत्रास्थिवालालग्ना भवन्ति एतानि ह्रस्वान्यदीर्घाणि यस्य । जङ्घाजानूरुवृत्तः जङ्घे सुप्रसिद्धे जानुनी ऊरु च एतानि वृत्तानि परिवर्तुलानि यस्य । समसितदशनः समा स्तुल्याः सिताः श्वेतवर्णा दशना, दन्ता यस्य । चारु संस्थानरूपः चारु दर्शनीयं संस्थानमाकारो रूपं शरीरशोभा यस्य । एवं विधो वाजी अश्वः सर्वाङ्गशुद्धः सर्वावयव लक्षणैर्निर्दोषै र्युक्तो नरपते राज्ञो नित्यं सर्व कालं शत्रुनाशाय रिपुवधाय भवतीत्यर्थः ॥

यदाह वररुचिः--

ज्ञानं त्रैलोक्यविद्भिर्मुनिभिरभिहितं लक्षणं यद्विशालं
दुर्ज्ञेयं तद्बहुत्वादपि विमलधिया किं पुन र्बुद्धिहीनैः ।
तस्मादेतत् समासा त्स्फुटमधुरपदं श्रूयतामश्वसंस्थं
वर्णावर्त्त प्रभाङ्गस्वरगतिसहितैः सत्त्वगन्धैरुपेतम् ॥

---

परिणाहाङ्गुलानि स्यात् सप्ततिः सप्तसप्ततिः ।
एकाशीतिः समासेन त्रिविधः स्याद्यथाक्रमम् ॥
तथा षष्टि श्चतुः षष्टिरष्टषष्टिः समुच्छ्रयः ।
द्विपञ्च सप्तकयुता विंशतिः स्यान्मुखायतिः ॥
श्मश्रुहीनं मुखं कान्तं प्रगल्भं तुङ्गनासिकम् ।
ह्रस्वप्रोथं तनुश्रोत्रं रक्तगम्भीरतालुकम् ॥

रोमत्वक्केशवालैरसितहरिसितैस्तप्तहेमप्रभैश्च
कृष्णशोणोपलक्ष हरिरिति कथिता मूलवर्णा स्तुरङ्गाः ।
ते चान्योऽन्यानुषङ्गात् पवनवशगता यान्ति भूयो बहुत्वं
निर्देशस्तेषु वाच्यो विमलपटुधिया द्रव्यसत्वानुरूपः ॥

## अथाऽशुभाऽऽवर्तानाह—

**अश्रुपातहनुगण्डहृद्गलप्रोथशंखकटिबस्तिजानुनी ।**
**मुष्कनाभिककुदे तथा गुदे सव्यकुक्षिचरणे तथा शुभाः ॥३॥**

अश्रुणः पातो यत्र सोऽश्रुपातः चक्षुषोरधोभागः । हनुनी प्रसिद्धे । गण्डौ मुखगण्डौ। हृद् हृदयम् । गलो हृत्कण्ठसन्धिः प्रोथोनासाधोभागः शङ्खौ कर्णनिकटे कटिः प्रसिद्धा। वस्तिर्नाभिलिङ्गयोरन्तरम् । जानुर्जङ्घासन्धिः एष्ववयवेषु स्थिता आवर्ताः तथा मुष्कौ वृषणौ नाभिः प्रसिद्धाः ककुदं बाहुपृष्ठभागे कृकाटिका निकटम् । गुदमपानस्थानम् । अन्ये अलुम इति पठन्ति । अलुमं जत्रुगलसन्धिः । सव्यकुक्षि दक्षिणकुक्षिः। चरणाः सर्व एव पादाः एषु स्थानेषु ये आवर्ता गता स्ते सर्व एवाशुभाः ॥ अत्र प्राण्यवयवत्वात् सर्वत्र समहारः ॥

यदाह वररुचिः-

शङ्खभ्रूगण्डनासाहनुकटिककुदक्रोडकक्षासनस्थै-
र्मन्याहृज्जानुकुर्चश्रवणगलगुदप्रोथकुक्ष्यश्रुपातैः ।

---

षडब्दमाद्वादशकं मृदुनासापुटं दृढम् ।
दीर्घोद्धतमुखं ग्रीव ह्रस्वकुक्षिखुरं तथा ॥
विवशं चण्डवेगं च हंसमेघसमस्वनम् ।
हरितं शुकवर्णं वा श्वेतं कृष्णसमण्डलम् ॥
अश्वमीदृशमारोहेद्धस्तेन श्रवणेन वा ।
आश्विने नोदना भिक्षा वाहयेयु द्विजातयः ॥
तथा च वर्णैनैकेन स्निग्धवर्णा भवेद्यदि ।
सहन्या द्वर्णजान् दोषान् देहः सर्वत्र शस्यते ॥इति॥



स्थूरास्फिक्काकसाधस्त्रिकवृषणवहस्कन्धनाभ्यूरुजातै-
रावर्त्तैरेवमेतैरशुभफलकरैर्वर्जनीयास्तुरङ्गाः ॥

## अथ शुभाऽऽवर्तानाह—

**ये प्रापणगलकर्णसंस्थिताः**
**पृष्ठमध्यनयनोपरिस्थिताः ।**
**ओष्ठसक्थिभुजकुक्षिपार्श्वगा-**
**स्ते ललाटसहिताः सुशोभनाः ॥४॥**

प्रपाण उत्तरोष्ठतलम् । गलः कण्ठं निगालाधः । कर्णौ श्रवणौ एतेष्ववयवेषु संस्थिताः । पृष्ठमध्यं पर्याणस्थानम् नयनोपरि भ्रुवोः समीपे । ओष्ठौ दशनाच्छादनौ। सक्थिनी पश्चाद्भागः । खुरोपरि भुजौ प्राग्भागे। जानूपरि कुक्षिर्वामभागे यतः सव्यस्य गर्हितत्वमुक्तम् । पार्श्वौ प्रसिद्धौ एतेष्वपि ये गता आवर्ता स्ते ललाटसहिताः सुशोभना अतिशुभफलदा इत्यर्थः । ललाटं भ्रूमध्यभागः ।

यदाह वररुचिः—

सक्थिप्रपाणश्रुवबाहुकण्ठकेशान्तवक्षः श्रवणोपरन्ध्रे ।
रन्ध्रे निगाले च ललाटदेशे ये रोमजास्ते श्रियमावहन्ति ॥

तथा च विशेषलक्षणानि-

## अथ कान्तिलक्षणम्

बालार्काग्निप्रवालद्रुतकनकनिभा वह्निजैश्वर्यवृद्ध्यै--
नीलाम्भोजाभ्रवर्णा भवति सलिलजा सर्वदुःखापहर्त्री।
गम्भीरानेकवर्णा दिशति च तुरगे पार्थिवी सर्वकामान्
वायव्य रुक्षवर्णा त्वशुभफलकरी निन्दिता व्योमजा च ॥

## अथ स्वरलक्षणम्

भेरीशङ्खाब्दसिंहद्विपपणववृषस्निग्धगम्भीरनादा
वीणापुंस्कोकिलानां मधुरपटुरवा वाजिनो राजवाहाः ।
काकोलूकोष्ट्रभास श्वखरवृषरवा रूक्षविच्छिन्नघोषा
अन्ये चेत्थंप्रकारास्त्वशुभफलकरा हानिशोकप्रदाश्च ॥

## अथ गतिलक्षणम्

त्वरितगतिविलासैर्विक्षिपन् पादमुच्चै-
र्व्रजति नकुलगामी कम्पयन् कं शिखाग्रम् ।
अथ विकटखुराग्रैर्दह्यमानां यथोर्वीं
स्पृशति चरणपातैस्तैश्चिरं तस्य यातम् ॥

स्थिरपदविततांशो दूरमुन्नम्य वक्त्रं
व्रजति हि सुविलासैर्बर्हिवद्बर्हिगामी ।
सुगतमथ तुरङ्गं यो ऽधिरुह्यात् तदैव
स भवति सुखगामी शत्रुनाशं च कुर्यात् ॥

अजमहिषवराहश्चोष्ट्रमार्जारगामी
कपिवृषभशृगालैस्तुल्यगामी च यो ऽश्वः ।
सदिशति धननाशं शत्रुवृद्धिं च कुर्यात
भवति च न सुखाय स्वामिनः शोकदाता ॥

## अथ सत्त्वगन्धलक्षणमाह

वर्णावर्त्तप्रभाडस्वरगति सहितः सत्त्वगन्धैरुपेतः
शौचाचाराभिजातिः स्मृतिविनयगुणैरन्वितो देवसत्त्वः ।
गन्धर्वैर्यातुधानैर्मुनिवरपतिभिस्तुल्यसत्त्वाः प्रशस्ता ।
ये चान्ये हीनसत्त्वा स्त्वशुचिमलरता भीरवस्ते विवर्ज्याः ॥



मैरेयाम्भोजसर्पिः क्षितिमधुमदिरा चन्दनोशीरलाजा-
कल्हाराशोकजाती वरतरुकुसुमैस्तुल्यगंधाः प्रशस्ताः ।
ये चान्ये क्षारमूत्रक्षतजमलवसाबस्तिनिर्मोकगन्धाः
सन्त्याज्यास्ते ऽपि नित्यं त्वशुभफलकरा हानिशोकप्रदाश्च ॥

उरो विस्तीर्णं पृथु च जघनं नेत्रयुग्मं सुबद्धं
ग्रीवा वाच्या सुदीर्घा समुजयुगलकं कण्ठपृष्ठं च ह्रस्वम् ।
स्वरो गम्भीरस्तनुरविरलं चेष्टितं चारु नित्यं
शोभा शारीरिकी स्याद्यदि च तुरगे दीर्घमायुः स जीवेत् ॥

व्यूढोरस्कध्रुवाङ्कस्तनपृथुजघना दीर्घरूक्षाक्षिघोषा
दुर्गन्धाः सर्वगात्रैस्तनुगतिविषमा लम्बकर्णाः ष्टपुच्छाः ।
दुर्गन्धा दुष्टशाला विनिपतितमना भीरवो नष्टसञ्ज्ञाः
सर्वाचारैश्च हीना यदि खलु तुरगाः सन्ति ह्रस्वायुषस्ते ॥

## १ अश्वानां वयोज्ञानमाह वररुचिः

संदंशं मध्यमब्दं दशनयुगपदः सोत्तरं वर्षजाते
स्फीतं द्वचदे कषायं पतितसमुदितं त्रिचतुष्पञ्चकेषु ।
त्रींस्त्रीनेकैकमब्दा नसितहरिसिता काचमाक्षीकशङ्खा
छिद्रं चालं च्युति श्च स भवति तुरगे लक्षणं वकत्रज्ञानम् ॥

## अत्र संदेहव्युदासाय प्रदेशाध्यायो लिख्यते-

तथा च राजपुत्र सिंहदत्तः-

अविज्ञाय प्रदेशांस्तु भिषक् कर्मसु मुह्यति ।

---

१, षडिभर्दन्तैः सिताभैर्भवति हयशिशुस्तै कषायैर्द्विवर्षः
संदंशैर्मध्यमान्त्यैः पतितसमुदितैस्त्र्यब्धिपञ्चाब्दिकाश्वः ।
संदंशानुक्रमेण त्रिकपरिगणिताः कालिका पीतशुक्लाः
काचा माक्षीकशङ्खावटचलनमतो दन्तपातञ्च विद्धि ॥
इति संहितायाम् ।

प्रदेशोद्देशविज्ञानमतो यत्नेन वाजिनाम् ॥
वक्ष्यते तेष्वधीना हि सिद्धिः कर्मसु सर्वदा ।
जिह्वा कण्ठे निबद्धा हि गलनालं च तत्स्मृतम् ॥
सूनाधस्तात्तु जिह्वायास्तालुस्तस्यास्तथोपरि ।
पीठ्योहनुर्निबद्धा हि दंष्ट्रे तासामथाग्रजे ॥
ततो द्विजा व्यञ्जिजानस्ते तेषामुपरि चोत्तराः ।
अधस्ताद् द्विज दंष्ट्राणां मध्ये तु चिबुकं मतम् ॥
दशनाच्छादनावोष्ठौ तयोः पार्श्वे च सृक्किणी ।
प्रपाणमुत्तरौष्ठस्य स्यादूर्ध्वं प्रोथमेव च ॥
नासापुटौ प्रोथपार्श्वे घोणा प्रोथाक्षि मध्यतः ।
नासावंशोद्भवौगल्लौ क्षीरिके च तथोपरि ॥
घाणाहन्वन्तरे गण्डौ तयोर्मध्ये ऽश्रुपातनम् ।
नेत्रे तथोपरि स्यातां तयोः प्रच्छादनं ततः ॥
अभ्यन्तरं सितं कृष्णं दृष्टिमण्डलमेव च ।
कनीनिके चान्तकोणे तथा पाङ्गौ च व्याहृतः ॥
वर्त्मोपरि च पक्ष्माणि अक्षिकूटे तथोपरि ।
भ्रुवौ तथोपरिष्टात्तु ललाटं भ्रुश्रुवान्तरम् ॥
श्रुवं ललाटोपरि च शिरः कर्णान्तरं भवेत् ।
तदाश्रितो मस्तकश्च कर्णौ तस्यैव पार्श्वयोः ।
कर्णमूले श-लास्यात्कर्ण शङ्खान्तरे कटः ।
कटा ऽपाङ्गान्तरे शङ्खो घटोनाह्ये च शङ्खयोः ॥
चिबुकस्योपरि हनू गण्डावुपरि चैतयोः ।
हन्वोश्च गलनाड्योश्च निगालो मध्य उच्यते ॥
निगालाधो गलः कण्ठो वक्षः क्रोडो ऽथ हृत्ततः ।
विन्दुर्मन्द विदुश्चैव कर्णस्याधः षडङ्गुले ॥
बिन्द्वोरुभयतो ऽधस्तान्मध्ये कण्ठनिबन्धनम् ।
शिरो वाहान्तरे ग्रीवा जत्रु ग्रीवान्तरे वहः ॥
स्कन्धस्य चोपरि ग्रीवा तस्याश्चोपरि केशरम् ।



वाहतो जत्रुतश्चोक्ताः काकसं ककुदं ततः ॥
आसनं चैव पृष्ठञ्च पृष्ठवंशस्ततः परम् ।
ककुदावस्थितावंशौ वाहू चांशनिबन्धनौ ॥
क्रोडाधस्तात्तथा वाहूर्वाह्वोर्वाह्ये षडङ्गुले ।
वाह्वोरभ्यन्तरे कक्ष्या पार्श्वतस्तौ च वक्षसः ॥
कीणौ चाभ्यन्तरे बिन्द्यादधस्ताज्जानुनी मते ।
जान्वोः कपालिके चाधो मन्दिरं जानुपृष्ठतः ॥
जङ्घे च जानुनो ऽधस्तात्पृष्ठतश्च कलेमते ।
जङ्घाकलान्तरे शेषे परिहस्तस्तथाग्रतः ।
पृष्ठतः परिहस्तस्य कूर्चौ तन्मध्यगौ किणौ ॥
कूर्चाधस्तात्कुष्टिके च खुरसंधिस्तथा खुरः ।
पृष्ठतः पार्ष्णिशीर्षं च पार्ष्णीनं स्वशिखातलम् ॥
तलमध्ये तु मण्डूक्यौ क्षीरिके च तलान्तरे ।
हृत्परो नाभिवंशस्तु नाभेस्तु जठरं परम् ॥
हृन्नाभिमूत्रकोशानां रोमराज्यान्तरे मता ।
तदधो मेहनं कोशस्ततो मुष्कफलं ततः ॥
अधस्तात्कटिसन्धेः स्यादूरुसंधिस्ततोपरि ।
सक्थिनि फलबन्धश्च ऊरुपाण्डुरिहोच्यते ॥
उर्वोरुर्ध्वं पाण्डुपिण्डौ वक्रसन्धी ततः स्थुरम् ।
स्थूराधो मन्दिरं प्रोक्तौ शङ्कू तन्मध्यजौ किणौ ॥
स्थूराधस्तात्पूर्वमुक्तं पृष्ठतश्च विभावयेत् ।
गात्रद्वयं शिरोग्रीवं पूर्वकायः स उच्यते ॥
जघनं त्रिकपुच्छं च गात्रे द्वे चापि पश्चिमे ।
प्रदेशा मध्यमा येन्ये सोन्तकायः स उच्यते ॥
शरीराख्यश्च षट् प्रोक्ता मुखं गात्राणि बालधी ।
नखरोमाणि बालाश्च केशाश्चावयवाः स्मृताः ।
बिन्यस्ता वक्त्रपुच्छान्तं मध्ये हीनाधिकं तथा ॥
अत्र नोक्तं तु यत्किञ्चिद्विन्द्यात्तदपि युक्तितः ।

इति प्रदेशा व्याख्याता वाजिनां देहसंभवाः ॥
तान्विज्ञाय भिषक्कर्म प्रयुञ्जनापराध्यति ॥इति॥

## अथाश्वेङ्गितमाह—

बालाग्रकिरणहेषितधूमज्वालादि चोद्यमे लक्ष्यम् ।
तुरगानामत्रार्याः प्रक्षिप्ता विष्णुगुप्तकृताः ॥५॥

बालानां पुच्छबालानां अग्रकिरणं विक्षेपणं हेषितं शब्दः. धूमो यो ऽङ्गेषु दृश्यते, ज्वाला वा तत्र आदिग्रहणादग्निकणसम्भवः । एतत्सर्वं उद्यमे उद्यमकाले यात्रा-समये तुरगानामश्वानां लक्ष्यं लक्षणं दैवज्ञेन वा ऽन्येन तज्ज्ञेन वा ॥५॥

## अत्रास्मिन्नर्थे विष्णुगुप्तरचिता आर्याः प्रक्षिप्ता लिखितास्तच्चाह—

अत्रोत्सर्गेणासनपश्चिमभागाश्रये ज्वलनमेषाम् ।
नेष्टमितरत्र शस्तं वामेतरपार्श्वयोस्तद्वत् ॥६॥

अत्रास्मिन् उद्यमकाले उत्सर्गेण सामान्येना ऽपवादं विना इदमुच्यते, आसनपश्चिमभागाश्रये देहमध्यात पल्याणस्थानात्पश्चिमभागसमाश्रये कटिमूलसन्निकृष्टभागे ऽश्वानां ज्वलनं ज्वालारूपं दृष्टं नेष्टं न शुभफलम् । रात्रिकाले ऽश्वानामङ्गेपूत्पातरूपं ज्वलनं दृश्यते तदितरत्र उक्ताद्भागादितरत्रान्यस्मिन् भागे शस्तं शुभफलप्रदं, आसनस्य पूर्वभागे प्रशस्तमित्यर्थः । वामेतरपार्श्वयोस्तद्वदिति, आसनस्य पश्चिमपूर्वभागापेक्षया वामेतरपार्श्वयोस्तद्वत्तेनैव प्रकारेण तद्वत् । आसनं वामपश्चिमभागं न शस्तं इतरत्र प्रशस्तमिति ।

उक्तञ्च -

उत्सर्गान्न शुभमासनापरसंस्थं वामेन ज्वलनमतो ऽपरं प्रशस्तमिति ॥६॥

## अधुनान्येष्वप्याह—

सममन्यत्पदकेशरपुच्छेषु च ज्वलनदहनकणधूमाः ।
राष्ट्रभयशोकसंभ्रमसपत्नचक्रापमर्दकराः ॥७॥



अन्ये दहनकणधूमादिकं उत्पातं समं न शुभं नाप्यशुभं । पदं पादाः केशरं मूर्द्धनि बालापुच्छं बालधिः एतेषु ज्वलनं ज्वालादहनकणं, अग्निविस्फुलिङ्गाः धूमः प्रसिद्धः एते यदा दृश्यन्ते तदा राष्ट्रभयं जनपदानां भङ्गः, रोगः संभ्रमः शस्त्रोद्योगः सपत्नचक्रेणारिवृन्देनापमर्दः एतान् कुर्वन्ति ॥७॥

## अथान्येष्वप्याह—

प्राक्फलतुल्यं पृष्ठे जघने बालेषु चैव निर्दिष्टम् ।
अन्तःपुरप्रकम्पो मेढ्रे ज्वलने स धूमे च ॥८॥

पृष्ठे ज्वलनं प्राक् फलेन तुल्यं समं, आसनप्राग्भागे यथा शोभनफलं, तथा पृष्ठे जघने कट्यां बालेषु चैवं निर्दिष्टमुक्तं प्रशस्तमित्यर्थः मेढ्रज्वलने लिङ्गप्रदीप्ते धूमे वा अन्तःपुरे प्रकोपः क्रोधो भवति ॥८॥

## अथान्येष्वप्याह—

नित्यश्च बालकिरणे दाहज्वालास्फुलिङ्गलवधूमाः ।
स्कन्धासनांशदेशे वधाय बन्धाय चरणेषु ॥९॥

बालकिरणं पुच्छबालाः तत्र नित्यं सर्वकालं दिवसे रात्रौ वा दाहो दृश्यते धूमोऽग्निज्वाला वा न केवलमेतेषु स्थानेषु यावत्स्कन्धासनांशदेशे स्कन्धयोः कृकटिकपूर्वभागयोः आसने पल्याणस्थाने अंशयोः स्कन्धाधोभागयोः एतेषु दाहादयो दृष्टाः वधाय स्वामिनो मरणाय भवति । एते एव चरणेषु दृष्टाः स्वामिनो बन्धाय भवन्ति बन्धनं कुर्वन्तीत्यर्थः ॥९॥

## अथान्येष्वप्याह—

वक्षो ऽक्षिललाटभुजे त्वश्वानां हेषतां च वदनेभ्यः ।
ज्वालोत्पत्तिर्जयदा धूमोत्पत्तिस्त्वभावाय ॥१०॥

वक्षः उदरः अक्षीणि नेत्रे ललाटं भुजः प्राग्भागे जान्वोरुपरि एतेष्वश्वानां तुरगाणां हेषतां शब्दं कुर्वतां वदनेभ्यो वक्त्रेभ्यः ज्वालोत्पत्तिः ज्वालासंभवो भवति तदा जयदा जयं ददाति स्वामिनः । अथैष्वेव स्थानेषु धूमोत्पत्तिर्धूमसम्भवो दृश्यते तदा स्वामिनो ऽभावाय नाशाय भवति ॥१०॥

## अथान्येष्वाप्याह–

नासापुटास्रुपातप्रोथशिरोलोचने च रजनीषु ।
विजयाय प्रज्वलनं ताम्रसितहरितशबलानाम् ॥११॥

नासापुटौ प्रसिद्धौ अस्रुपातः चक्षुषोरधोभागः, प्रोथो नासामध्यभागः ,शिरो मूर्द्धा लोचने नेत्रे एतेषु स्थानेषु तुरगानां रजनीषु रात्रिषु यदि ज्वलनं दृश्यते तदा स्वामिनो विजयाय भवति । किं सर्वेषां नेत्याह । ताम्रवर्णस्य लोहितस्य, असितस्य कृष्णवर्णस्य हरितस्य पीतवर्णस्य शबलस्य श्वेतकृष्णस्येति ॥११॥

## अथान्येष्वप्याह–

विजयाय सर्वदैव हि सुशुक्लशुकवर्णयोर्ज्वलनेषु ।
एवं च यथासंभवमन्येष्वपि वाहनेषु फलम् ॥१२॥

सुशुक्लस्यातिश्वेतवर्णस्य शुकवर्णस्य हरितपीतस्य एतयोरश्वयोः सर्वदैव हि सर्वस्मिन्काले दिने रात्रावपि नासापुटादिषु अङ्गेषु ज्वलनं स्वामिनो विजयाय भवति, एव हि इत्येतौ पादपूरणे, । एवमनेन प्रकारेण यथा संभवं यत्संभवं तदन्येष्वपि वाहनेषु गजोष्ट्रादिषु फलमूह्यम् । तेषां ज्वालाकिरणे दाह ज्वालादि न सम्भवति । यदि कदाचिद् दृश्यते तदा ऽश्ववच्चिन्त्यमिति ।

उक्तञ्च–

अन्तःपुरं नाशमुपैति मेढ्रे
कोशक्षयं यात्युदरे प्रदीप्ते ।



पायौ च पुच्छे च पराजयः स्या-
द्वक्त्रोत्तमाङ्गज्वलने जयश्च ॥
स्कन्धासनांशज्वलनं जयाय
बन्धाय पादज्वलने प्रदिष्टं ।
नासापुटं प्रोथशिरो ऽस्रुपात
नेत्रेषु रात्रौ ज्वलनं जयाय ॥
ललाट वक्षो ऽक्षिभुजेषु धूमः
पराभवाय ज्वलनं जयाय ।
पालासताम्रासितकर्बुराणां
नित्यं शुकाभस्य सितस्य चेष्टाम् ॥इति॥

## अधुना हेषितलक्षणमाह–

इष्टानिष्टकव्यञ्जकमतः परं हेषितं समवधार्यम् ।
तच्च प्रसारिताचलशिरोधरोद्भूतमिष्टफलम् ॥१३॥

अतो ऽस्मात् परं हेषितं अश्वानां शब्दं समवधार्य लक्षणीयं कीदृशं इष्टानिष्टव्यञ्जकं इष्टस्य शोभनस्य अनिष्टस्या ऽशोभनस्य प्रकाशकं तच्च प्रसारिताचलशिरोद्भूतं शिरोधरया ग्रीवाया प्रसारितया अचलया निश्चलया उद्भूतं उत्पन्नं इष्टफलं शुभफलम् ॥१३॥

## अथान्यदप्याह–

ग्रासान्तर्वक्त्राणामुच्चैः स्निग्धानुनादगम्भीरम् ।
द्विजपूर्णभाजनेष्टं द्रव्यसुगन्धसुरमूलैः ॥१४॥

खलिनान्नपानचर्मस्वास्युपकरणा ऽभिनन्दिता चैषाम् ।
सर्वार्थसिद्धये स्यादक्षिणपार्श्वं विलोकयताम् ॥१५॥

ग्रासः कवलः, अन्तवक्त्रे मुखमध्ये येषां तथा भूतानां उच्चैः कृत्वा स्निग्धं अरुक्षं अनुनादवत् घण्टादिशब्दवत् गंभीरं मृदङ्गध्वनितुल्यं यदनुवदति तदतीष्टफलम् । तथा द्विजो ब्राह्मणः पूर्णभाजनं येन केनापि वस्तुना पूर्णभाजनं इष्टं मङ्गलद्रव्यं स्रक् माला गन्धाः सुगन्धद्रव्याणि सुराः देवाः मूलानि प्रसिद्धानि, एतानि यत्र प्रदेशे तत्र यदि ह्रेषितं करोति, इत्थं भूतलक्षणे तृतीया । खलिनं काविका अन्नं पायशक्कसरादिपानं मध्वासवादि वर्मसन्नाह। स्वामिन उपकरणं छत्र-ध्वज--चामरादि एतानि दृष्ट्वा ह्रेषितं यदि कुर्वन्ति तदा एषां ह्रेषितं सर्वार्थसिद्धये सर्वेषामभीष्टानामर्थानां सिद्धये स्यात् । तथा दक्षिणं आत्मीय-सव्यं पार्श्वं विलोकयतां प्रेक्ष्यमाणानां ह्रेषितं तदपि सर्वार्थसिद्धये स्यात् ।

उक्तञ्च-

क्रौञ्चवद्रिपुवधाय ह्रेषितं
ग्रीवयात्वचलया च सोन्मुखम् ।
स्निग्ध - वदनुनादि हृष्टव -
द्ग्रास हृष्टवदनैश्च वाजिभिः ॥

पूर्णपात्र-दधि-विप्रदेवता
गन्धपुष्पफलकाञ्चनादि वा ॥
द्रव्यमिष्टमथवा ऽ परं भवे -
द्धेषतां यदि समीपतो जयः ॥

भृत्यमानखलिनाभिवन्दिनो -
पेत्युरौपायिकनन्दनो ऽ थवा ॥
सौम्यपार्श्वगतदृष्टयो ऽ थवा
वाञ्छितार्थफलदास्तुरङ्गमाः ॥१५॥

## अथ शुभनिमित्तान्याह-

**आरोहति क्षितिपतौ विनयोपपन्नो
यात्रानुगो ऽ न्यतुरगं प्रतिहेषितश्च ॥**



**वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं
सो ऽ श्वः सभर्तुरचिरात्प्रचिनोति लक्ष्मीम् ॥१६॥**

यो ऽ श्वस्तुरगः क्षितिपतौ राज्ञि आरोहति सति विनयोपपन्नः नीतियुक्तः तथा यात्रा-नुगः यां दिशं गन्तुमिच्छा प्रभोस्तस्यां गम्यते अन्यस्मिन् तुरगे ह्रेषां शब्दं कुर्वति प्रति-ह्रेषं करोति, अथवा वक्त्रेण मुखेन दक्षिणं आत्मपार्श्वं स्पृशति स भर्तुः प्रभोः, अचिरात् शीघ्रमेव लक्ष्मीं श्रियं चिनोति वृद्धिं नयति ॥१६॥

वराहमिहिराचार्यकृते ऽ स्मिन्मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यक्ष्ये ऽ श्वमेधीययात्राविवृतावश्वेङ्गिता ऽ ध्यायश्चतुर्विंशः ॥२४॥

****

# अथ शाकुनं व्याख्यायते

## तत्रादावेव तदारम्भप्रयोजनप्रदर्शनार्थमाह–

१ अन्यजन्मान्तरकृतं कर्म पुंसां शुभाशुभम् ।
यत्तस्य शकुनः पाकं निवेदयति गच्छताम् ॥१॥

पुंसां पुरुषाणां यच्छुभाशुभं शोभनमशोभनमशुभं वा कर्म अन्यजन्मजन्मनि जन्मान्तरे कृतं पूर्वादिजन्मन्यर्जितं तस्य कर्मणः पाकं फलपरिपाकं गच्छतां गमनकर्तॄणां शकुनः शुभाशुभसूचकः कश्चित्पक्षी प्राणी वा यानि निवेदयति कथयति तान्यस्मिन्नध्याये विवेचितमस्तीति ॥१॥

## अथात्रैव भेदान्तरदर्शनार्थमाह–

ग्रामारण्याम्बुभूव्योमद्यु निशोभयचारिणः ।
रुतयातेक्षितोक्तेषु ग्राह्या स्त्रीपुं नपुंसकाः ॥२॥

शकुनाश्च ग्राम्याः ग्रामेभवाः, अरण्याः वनचराः, अम्बुचराः जलचराः, भूचराः व्योम-

१ पूर्वजन्मकृतकर्मणः फलं पाकमेति नियमेन देहिनः ।
तत्प्रकाशयति देवनोदितः प्रस्थितस्य शकुनः स्थितस्य च ॥
तेन दुःखदमतिप्रयोजनं सत्वरं परिहरेदुपागतम् ।
बुद्धिमान् शकुनकोविदो जनः सन्निपत्य सुखदं समाश्रयेत् ॥
— वसंतराजशाकुने



चारिणः आकाशचारिणः । तत्र ग्राम्याः नरतुरगचतुष्पदादयः । अरण्याः सिंहव्याघ्रवराहादयः अम्बुचराः हंसप्रभृतयः, भूचराः श्वाविन्नकुलसर्पादयः, व्योमचराः नित्यमेवाऽऽकाशस्थाः दृश्यन्ते न कदाचिद्भूमौ श्लिष्यन्ते। द्युचराः दिवाचारिणः निशाचरा रात्रिचारिणः, उभयचराः दिवानिशयोश्चरन्ति ।

तथा च–

श्यामाश्येनशशघ्नवञ्जुलशिखिश्रीकर्णचक्राह्वया–
श्चापाडीरकखञ्जरीटकशुकध्वाङ्क्षाः कपोतादयः ।
भारद्वाजकुलालकुक्कुटखरा हारीतगृध्राः कपिः
फेण्टाकुक्कुटपूर्णकूटचटकाः प्रोक्ताः दिवासञ्चराः ॥

लोमासिकापिङ्गलछुप्पिकाख्यौ
वल्गुल्यलूकौ शशकञ्च रात्रौ ।
सर्वेष्वनूलोत्क्रमचारिणः स्यु–
र्देशस्य नाशाय नृपान्तकृद्वा ॥

हयनरभुजगेष्वदीपि सिंहर्ष गोधा
वृकनकुलतुरङ्गाः श्वाजवैयाघ्रहंसाः ।
पृषतमृगमृगालाः श्वाविधाख्यान्यपुष्टाः
द्युनिशमपि विडालः सारसः सूकरश्च ॥

रुतयातेक्षितोक्तेष्विति । रुतं शब्दः यातं गमनं ईक्षितं प्रेक्षणं दृष्टिविचारः, उक्तं तत्कालव्याहृतं, द्विपदादीनां यथा पुरुषशब्दश्रवणात्पुरुषवान् बोधव्याः, स्त्रीशब्दश्रवणात् स्त्रीनपुंसकव्याहरणेन नपुंसकः । एतत्संदेहे सति विचारणा, एवमेतेषु रुतयातेक्षितोक्तेषु पुंस्त्रीनपुंसका ज्ञातव्याः ।

वक्ष्यति च:–

क्लीबस्त्रीपुरुषाश्चैषां बलिनः स्युर्यथोत्तरम् ॥

## पुनरप्याह–

पृथक्जात्यनवस्थानादेषां व्यक्तिर्नलक्ष्यते ।
सामान्यलक्षणोद्देशश्लोकावृषिकृताविमौ ॥३॥

येषां शकुनानां पृथक् पृथक् जातिर्योनिविभागः, तस्याः नवस्थानं स्थितेरभावः अतिचञ्चलत्वात् अतो हेतोर्व्यक्तिस्फुटत्वं न लक्ष्यते न ज्ञायते, सामान्यं विशेपरहितं यच्च लक्षणं तस्य य उद्देशः कथनं तत्रेमौ वक्ष्यमाणौ ऋषिकृतौ मुनिप्रणीतौ श्लोकौ ज्ञापकौ तावेवाह –

पीनोन्नतविकृष्टांसाः पृथुग्रीवाः सुवक्षसः ।
स्वल्पगम्भीरविरुताः पुमांसः स्थिरविक्रमाः ॥४॥

तनुवक्षःशिरो ग्रीवाः सूक्ष्मास्यपदविक्रमाः ।
प्रशक्तमृदुभाषिण्यः स्त्रियो ऽतोऽन्यन्नपुंसकाः ॥५॥

पीनौ मांसौन्नतौ मांसोपचितौ उच्चौ विकृष्टौ विस्तीर्णौ अंसौ स्कन्धौ येषां, पृथुग्रीवा विस्तीर्णशिरोधराः सुवक्षसः विस्तीर्णोरसः स्वल्पं अल्पं गभीरं मधुरं मृदुस्वरसमं विरुतं शब्दो येषां ये च स्थिरविक्रमाः दृढपौरुषास्ते पुमांसः पुरुषाः । तनु अल्पं वक्षो वक्षस्थलं शिरो ग्रीवा मूर्धा कन्धरा च तन्वी यासां सूक्ष्मं अल्पं आस्यं मुखं पदं पादौ विक्रमः पौरुषश्च सूक्ष्मः प्रशक्तं संततं श्लिष्टं मृदु मधुरं भाषणं शब्दो यासां ताः स्त्रियस्तेपूक्तेष्वन्येषु वा व्यामिश्रैर्वा नपुंसकमिति ॥५॥

## अधुना तज्ज्ञानार्थमाह–

एवमादिदिशातुल्यं शुभं त्रैकाल्यमादिशेत् ।
ग्रामारण्यचराद्यन्तु लोकादेवोपलक्षयेत् ॥६॥
संक्षिप्य चात्र वक्ष्यामि यात्रामात्रप्रयोजनम् ।



एषां शकुनानां ग्रामारण्यप्रचारं लोकाल्लोकतो ऽन्यशास्त्राद्वोपलक्षयेत्, जानीयात्, आदिग्रहणाद्युनिशोभयचारित्वं ग्रामारण्यचारित्वं च लोके जायन्ते एव एतत् सर्वं लोकादुपलक्षयेत् । संक्षेपं कर्त्तुमिच्छुरहं यात्रामात्रप्रयोजनं यात्रायां यावन्मात्रमुपयुज्यते तावन्मात्रं वक्ष्यामि, इति हेतोर्विस्तरेण मया नोक्तं ग्रन्थगौरवभयादिति ॥६½॥

## अथा ऽधुना कथमधिकृत्यशाकुनं विचार्यमित्याह–

पथ्यात्मानं नृपं सैन्ये पुरे चोद्दिश्य देवताम् ॥७॥
अधुना कथयिष्यामि ... ... ... ... ... ...
सार्थे प्रधानं साम्ये स्यात् जाति विद्या वयो ऽधिकम् ॥८॥

पथिः गच्छतः पुंसः, आत्मानं उद्दिश्य शाकुनं शुभाशुभं लक्षयेत् । सैन्ये सेनायां नृपं राजानमुद्दिश्य, पुरे नगरे देवतां दैवत्यमुद्दिश्य पुरग्रहणमुपलक्षणार्थं तेन ग्रामे ऽपि ग्रामाधिपतिमुद्दिश्य, सार्थे वहुजनसमूहे प्रधानं सार्थपतिं उद्दिश्य यदा च वहवः प्रधाना भवन्ति, तद्साम्ये जातितो विद्याया वयसो यो ऽधिकः तं उद्दिश्योपलक्षयेत् । वहुषु सार्थपतिसु सत्सु यो जातितो ऽधिकस्तस्य शाकुनं शुभाशुभं, अथ यदि जाति साम्यं भवति तदाः यो विद्याधिकस्तस्य विद्यासाम्ये यो वयो ऽधिकस्तस्येति ॥७-८॥

## अधुना दिग्लक्षणमाह–

१ मुक्तप्राप्तैष्यदर्कासु फलं दिक्षु तथाविधम् ।
अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततो ऽपराः ॥९॥

---

१ एको निवृत्तावितरः प्रवृत्तौ यात्राविरुद्धं शकुनद्वयं तत् ।
ग्राह्योनयोर्यो बलवान् भवेद्वा प्रदीतशान्तादिनिरुपणेन ॥
दग्धादिगुक्ता दिननाथमुक्ता विवस्वताप्ता भवति प्रदीप्ता ।
सा धूमिता यां सविता प्रयाता शेषा दिगन्ताः किल पञ्च शान्ताः ॥
दग्धा दिगैशी जलिता दिगैन्द्री धूमान्विता चानलदिक्प्रभाते ।
प्रत्येकमेवं प्रहराष्टकेन भुङ्क्ते दिशो ऽष्टौ सविता क्रमेण ॥

अत्र तावदादित्यस्य भ्रमणवशेनाष्टासु दिक्ष्ववस्थितिर्भवति । तद्यथा सूर्योदयादारभ्य यावद्दिनस्य प्रथमप्रहरस्तावदैशानी दिक्मुक्ता प्राचीसूर्यप्राप्ता आग्नेयी एष्यत्, सूर्या- त्ततः प्रहरादूर्ध्वं यावत्प्रहरद्वयं तावत्प्राची, मुक्तसूर्या आग्नेयी प्राप्तसूर्या दक्षिणा एष्यत्सू- र्येति । ततः प्रहरद्वयादूर्ध्वं प्रहरत्रयं यावत् आग्नेयी मुक्तसूर्या दक्षिणा प्राप्तसूर्या नैर्ऋती एष्यत्सूर्या । ततः प्रहरत्रयादूर्ध्वं अस्तमयं यावत् दक्षिणा मुक्तसूर्या नैर्ऋती प्राप्तसूर्या पश्चिमा एष्यत्सूर्या ततोऽस्तमयादूर्ध्वं यावत् प्रथमरात्रिप्रहरं तावन्नैर्ऋती मुक्तसूर्या पश्चिमा मुक्तसूर्या वायव्या एष्यत्सूर्या । ततो रात्रिप्रहरादूर्ध्वं प्रहरद्वयं यावत् पश्चिमा मुक्तसूर्या वायव्या प्राप्तसूर्या उत्तरा एष्यत्सूर्या । ततोऽर्द्धरात्रादूर्ध्वं प्रहरत्रयं यावत् वायव्या मुक्त- सूर्या उत्तरा प्राप्तसूर्या ऐशानी एष्यत्सूर्या । ततः प्रहरत्रयादूर्ध्वं सूर्योदयं यावत् उत्तरा मुक्तसूर्या ऐशानी प्राप्तसूर्या पूर्वा एष्यत्सूर्या । एतासु मुक्तप्राप्तैष्यत्सूर्यासु फलं दिक्षु तथा- विधमिति । तासु दिक्षु तथाविधं नामानुरूपं शुभमशुभं वा फलं आदेश्यम् । फल- कथनचातुरी यथा मुक्तसूर्यायां दिशि यदशुभं शाकुनमुत्पन्नं तद्गतं तत्फलमतीतमि- त्यर्थः । प्राप्तसूर्यायां यदशुभं शाकुनं तदधुनैव भविष्यति, एष्यत्सूर्यायां यदपशकुनं तत्फलं पुरस्तात् भविष्यतीति । अङ्गारदीप्तधूमिन्यस्ताश्चेति । ताः दीशः मुक्तप्राप्तैष्य- दत्ख्या यथा क्रमेण अङ्गारदीप्तधूमिन्यः मुक्तसूर्याङ्गारिणी प्राप्तसूर्या दीप्ता एष्यत्सूर्या धूमिनी ताभ्योऽपराः पञ्च शान्ता दिश इति ।

उक्तञ्च—

अङ्गारिणी दिग्... विप्रयुक्ता
यस्यां रविस्तिष्ठति सा प्रदीप्ता ।
प्रधूमिता यास्यति यां दिनेशः
शेषाः प्रशान्ताः शुभदाश्च ताःस्युः ॥

अत्र केचिद्रात्रार्द्धप्रहरशेषादारभ्य यावद्दिनस्य प्रहरं तावत्प्राचीदिशं प्राप्तसूर्यां वर्ण- यन्ति, तत ऊर्ध्वं सार्द्धप्रहरं यावदाग्नेयीं एवं शेषास्वपि विज्ञेयं, अयुक्तमेतत् ।

यस्माद्भगवान् गर्गः—

उदये दीप्यते पूर्वा पूर्वाह्णे पूर्वदक्षिणा ।
मध्याह्ने दक्षिणा दीप्ता अपराह्णे तु नैर्ऋती ॥



पश्चिमा तत्त्रये दीप्ता वायव्यः पूर्वरात्रिके ।
सौम्ये तु मध्यरात्रे स्यादैशान्यपररात्रिके ॥

संप्राप्ता नागताऽतीता दीप्यन्तेऽत्र सदा दिशः ।
व्याहरन्ति मृगास्तासु वेदयन्ति महद्भयम् ॥

तच्च वृत्तमतीतायां दीप्तायां भासते मृगः ।
अनागतायामागामी दीप्तायां तद्दिनं स्मृतम् ॥ इति ॥

## अधुनाऽन्यासां दिशाफलनियममाह—

तत्पञ्चमदिशातुल्यं शुभं त्रैकाल्यमादिशेत् ।
परिशेष्यदिशोर्वाच्यं यथाऽसन्नं शुभाशुभम् ॥१०॥

तदित्यनेनाङ्गारितानां दिशां परामर्शः । ताभ्यः पञ्चमा तत्पञ्चमास्तत्पञ्चमदिशा- तुल्यं सदृशं त्रिकालभवं शुभं फलं आदिशेत् वदेत् । एतदुक्तं भवति-अङ्गारिणि या पञ्चमा दिक् शान्ता तस्यां सौम्यशकुने शुभं यत्फलं तस्यां, तस्यामेव पापे स्थिते शकुनेऽल्पं अनिष्टं यातम्, दीप्ताया या पञ्चमा दिक् तस्यां शुभे स्थिते शकुने यच्छु- भफलं तत्सांप्रतं ज्ञेयम्, तस्यामेव पापे स्थिते शकुने सांप्रतं अल्पमशुभं, धूमितायाः या पञ्चमा दिक् तस्यां शुभे स्थिते शकुने यच्छुभफलं तत्सांप्रतं ज्ञेयं, तस्यामेव पापे शकुने स्थिते अल्पमशुभं तच्चैष्यम् । अङ्गारिताद्यानामप्येवं शुभे शकुनेऽल्पं, अशुभशकुनेऽती- वाऽशुभफलमिति सर्वासामूह्यम् । परिशेषयो संगो दिशो यथा सर्वं येन प्रकारेण आसन्नं निकटवर्तिनं शुभाशुभं वाच्यम् । यस्यां या दिक् प्रत्यासन्ना निकटवर्तिनी दीप्ता वा शान्ता वा तस्यां यत्फलं तस्यामेव वाच्यम् । अनेनैतदुक्तं भवति, ते दिशो भागद्वयेन परिकल्प्य फलनिश्चयः कार्यः, तेनाङ्गारितः शान्तासन्ने भागे पापे शकुने यातमल्पमनिष्टं ज्ञेयम् । तस्मिन्नेव सौम्ये स्थिते शकुने शुभं यातम् । धूमितः शान्तासन्ने भागे स्थिते शकुने भावि बह्वनिष्टमिति ।

उक्तञ्च—

यातं मुक्त्वा सांप्रतं दीपितायां—
मेष्यं ज्ञेयं धूमितायामनिष्टम् ।

शान्ताष्वेवं दिक्षु तत्पञ्चमासु
प्रत्यासन्ने शेषयोः शान्तदीप्त इति ॥१०॥

## पुनरपि फलनियमार्थमाह–

**शीघ्रमासन्ननिम्नस्थैश्चिरादुन्नतदूरगैः ।**
**स्थानवृद्ध्युपघाताच्च तद्वद्ब्रूयात्फलं पुनः ॥११॥**

आसन्नैर्निकटवर्तिभिः शकुनैर्निम्नस्थैः निम्नस्थानगतैश्च आश्वेव शुभमशुभं फलं भवति । तत्र तैरुच्चप्रदेशस्थैः दूरस्थैरपि निकटवर्तिभिश्चिरात् बहुना कालेन शुभमशुभं वा फलं भवति ।

तथा च भगवान् पराशरः–

शिलष्टेषु तु भवेत्क्षिप्रं शुभं वा यदि चेतरत् ।
दूरस्थेषु तु सर्वेषु चिरात्संगृह्यते फलम् ॥

स्थानवृद्ध्युपघाताद्धेतोस्तद्वत्तेनैव प्रकारेण फलं ब्रूयात । वर्द्धमाने स्थाने यत्र प्रत्यहं वृद्धिर्दृश्यते तत्र स्थितः शुभः शकुनः, अर्थानां वृद्धिं करोति, पापं किञ्चिद्वृद्धिं उपघातस्तत्रस्थाने प्रत्यहं दृश्यते तत्रस्थो ऽशुभः शकुनः, उपघातः कार्याणां करोति, तत्र च शुभतः किञ्चित्करोति, एवं पुनर्भूयो निर्वाय शुभाशुभं फलं ब्रूयात् ।

तथा च पराशरः–

दग्धवक्रान्तरच्छिन्नशुष्ककण्टकिवृक्षगा ।
अस्थिनिम्नकपालास्थिसिकताकेशभस्मसु ॥
श्मशानाङ्गार वल्मीक विषमोम्बर पांशु च ।
जीर्णशीर्ण शुचि श्वभ्र देवस्था दीप्तसंज्ञिता ॥
मनोज्ञस्निग्धहरितक्षीरपुष्पतरुस्थिताः ।
समप्रशस्तभूमिस्थाः शान्ताः स्युर्मृगपक्षिणः ॥
अत्र च शुभाः शान्ता दीप्तास्त्वशुभा इति ॥११॥



## अथ दशविधस्य दीप्तस्य शकुनस्य लक्षणमाह–

**क्षणतिथ्युडुवातार्कदैवदीप्तो यथोत्तरम् ।**
**क्रियादीप्तो गतिस्थानभावस्वरविचेष्टितैः ॥१२॥**

क्षणो मुहूर्तः शिवादिकस्तत्र दारुणोग्राणां नक्षत्राणां ये मुहूर्तास्तेषु क्षणदीप्तः शकुनः तिथिर्नन्दादिकः तत्र चतुर्थी षष्ठ्यष्टमी नवमी द्वादशी चतुर्दश्योः दीप्ताः, पत्ररन्ध्रत्वात, एतासु तिथिषु तिथिदीप्तः, उडु उडूनि नक्षत्राणि दारुणोग्रनक्षत्रेषु नक्षत्रदीप्त, चण्डखरपरुषरुक्षः प्रतिलोममारुतो वातदीप्तः, आदित्याभिमुखदिक्स्थश्चार्कदीप्तः, एवं यथोत्तरं शकुनः पञ्चप्रकारो दैवदीप्तः । अनेनैतदुक्तं भवति क्षणदीप्तो ऽधिकः, तस्मान्नक्षत्रदीप्तो ऽधिकः, तस्माद्वातदीप्तो ऽधिकस्तस्मादर्कदीप्तो ऽधिक इति । क्रियादीप्त इत्यादि विद्युत उल्का, अर्कः, मारुतः, एषामभिमुख क्रियादीप्तः, छिन्नो भिन्नो वक्रो दग्धः प्राणिनः स्वशीर्ण ऽशुचिस्थानगस्थानदीप्तः, सत्ता सत्त्वादि हीनो भावदीप्तः, विषमो विप्लुताक्षरः क्षामजर्जरस्वरदीप्तः पक्षवाततुण्ड–विधूनन–निपात–परावघातकुट्टनैः चेष्टादीप्त । एषो ऽपि यथोत्तरं दीप्तः । तथा चात्र ऋषिपुत्रोक्तैर्वाक्यैर्निश्चयः । तद्यथा । चतुर्थी षष्ठ्यष्टमी नवमी द्वादशी चतुर्दशीति तिथि दीप्तः । करणे विष्टिकरणदीप्तः मूलेन्द्राद्रश्लेषाग्नेय–याम्य–पित्र्यपुर्वासु नक्षत्र दीप्तः, मुहूर्तेष्वपि तेषामेव, मुहूर्तदीप्तः । विसञ्ज्ञाः स्वल्पसंज्ञा भावदीप्ताः । स्वरपरुषभिन्नभैरवान्तोद्वेजनीय – विषम–विप्लुताक्षर – क्षाम – जर्जराः स्वनदीप्ताः । अशनिहतपतित छिन्न भिन्न भग्नोन्मूलितदलितोत्सृष्ट शुष्क व्याधित पत्रफलाक्षीर सुषिर जीर्ण त्वित्वचासारविरसकटुम्ललवणतिक्तकथित – विषम संश्रित–सङ्घ–द्वित–पीडित–लतावृतानावनित–विरोधान्य–क्रान्त–कटाग्नि–दग्धेषु तरुषु प्राकारगोपुराट्टालककुभूमिस्थाः स्थानदीप्ताः । ये च वीरण–विषय–निम्न–सङ्कर–केशास्थि–कपाल–वल्मीकाङ्गारक–पलाल–काष्ठाग्न्य–गारकलहसन्द–विद्युदुल्कार्कमारुतायुधाग्नि–संमुखगमा गतिदीप्ताः । पक्षपात – वितुण्ड – विधूनन – निपात परावघातकुट्टनैश्च चेष्टा दीप्ताः । चण्डपरुषप्रतिलोममारुता वातदीप्ताः । अर्काभिमुखा दीप्तदिक्स्थाः स्थानदीप्ताः । इत्याह भगवानिन्द्र इति ॥१२॥

## अत्रैव विशेषमाह–

**दशधैवं प्रशान्तो ऽपि सौम्यतृणफलाशनः ।**
**मांसामेध्याशनो रौद्रो विमिश्रो ऽन्नाशनः स्मृतः ॥१३॥**

एवमनेनप्रकारेण दशधा शकुनोदीप्तः । पञ्चविधो दैवदीप्तः, पञ्चविधः क्रियादीप्तः। यदि च दशधा दशभिः प्रकारैरपि शान्तः शकुनो भवति तथापि यदि तृणाशी तृणभक्षः फलाशी फलान्यश्नाति तदा सौम्यः शुभफलः । मांसाऽमिषं अमेध्यं विष्टादि वा अश्नान्ति तदा रौद्रो दीप्तः, अत्रापि मिश्रभोजी विमिश्रः शान्तो दीप्तश्च स्मृत उक्तः।

उक्तञ्च–

पिशिताऽशुचिभोजिनः प्रदीप्त-
स्तृणफलभुक् निसर्गतः प्रशान्तः।
उभयः कथितस्तथान्नभोजी
दिक्स्थानोदयकालतश्च चिन्त्या ॥१३॥

## अथान्यदप्याह--

हर्म्यप्रासादमाङ्गल्यमनोज्ञस्थानसंश्रिताः ।
श्रेष्ठाः मधुरसक्षीरफलपुष्पद्रुमेषु च ॥१४॥

हर्म्यं गृहं प्रासादो देवप्रसादः मङ्गल्यस्थानानि देवब्राह्मणगोभिरध्यासितानि मनोज्ञ-पुष्पप्राकारहरितशाद्वलद्रुमच्छायाफलसंयुक्तानि, एतेषु स्थानेषु ये स्थिताः शकुनास्ते श्रेष्ठाः शुभफलाः, तथा मधुरेषु सुस्वादुफलेषु वृक्षेषु तथा सक्षीरेषु वटार्कादिषु फलद्रुमेषु फल-वृक्षेषु बीजपूरनारङ्गादिषु पुष्पवृक्षेष्ववस्थिताः श्रेष्ठा एव ॥१४॥

## अधुना शकुनानां बलविचारमाह--

स्वकाले गिरितोयस्था बलिनः स्युर्निशाचराः ।
क्लीबस्त्रीपुरुषाश्चैवं बलिनः स्युर्यथोत्तरम् ॥१५॥

स्वकाले आत्मीयसमये गिरितोयस्थाः पर्वतजलस्थाः यथा संख्यं द्युनिशाचराः बलिनः वीर्यवन्तो भवन्ति । द्युचरादि वा गिरिस्था बलिनो भवन्ति । गिरिशब्द उच्च-प्रदेशोपलक्षणार्थः। तद्वत्तोयग्रहणमनूपलक्षणार्थम्।



तथोक्तं मनुना–

गिरौ दिवा दिवाचारी निश्यनूपे निशाचराः ।
बलवान् शकुनो ज्ञेयो विभजेद्बलमन्यथा ॥
क्लीबस्त्रीपुरुषश्चैषां शकुनानां यथोत्तरम् ।
क्लीबेभ्यः स्त्रीयो बलिन्यः स्त्रिभ्यः पुरुषाः बलिनः ॥

उक्तञ्च–

द्युनिशोभयचारिणः पुरवनमिश्रचराः स्वभूमिसंस्थाः।
स्वफलविफला विपर्ययस्था गमनेप्सोः पुरपार्थिवाः शुभास्ते ॥१४॥

## अन्यदप्याह–

जवजातिबलस्थानहर्षसत्वस्वरान्विताः ।
स्वभूमावनुलोमाश्च तदूनाः स्युर्विवर्जिताः ॥१५॥

जवो वेगः जातिर्योनिविभागः बलं प्रमाणं स्थानं स्थितिः हर्षश्चित्तहर्षः सत्त्वं औदार्यं निर्भयत्वमित्यर्थः, स्वरः शब्दः एतैर्ये अन्विता युक्ताः तथा स्वभूमौ स्वकीय-भूमौ प्रागुक्तायां अनुलोमाः क्रमेण स्थिताः, एते जवादिगुणैर्युक्ता बलिनः वक्ष्यति च ग्राह्यो यो बलवत्तर इति' तत्र ज्ञायते शकुनानां बलं तदर्थमुक्तं द्वयोर्मध्ये यः शकुनो जवेन जायतेऽधिकः यश्च स्थाने शोभने स्थितः यश्च हर्षयुक्तः यश्च शोभनस्वरान्वितः यश्च स्वभूमावानुलोम्येन स्थितः स एव बलीति, तदूनास्तैरुत्साहरहिता बलवर्जिः स्युः ॥१५॥

## अधुना तेषां दिग्बलमाह--

१ कुक्कुटेभपिरिल्यश्च शिखिवञ्जुलछिक्कराः ।
बलिनः सिंहनादश्च कूटपूरी च पूर्वतः ।१६।

१ कूटपूरमयूरपुटिन्यः सिंहनादगजवञ्जुलकाश्च ।
छिक्कर स कृकवाकुरतीमान् पूर्वतोऽधिवलान् कथयन्ति ॥

कुक्कुटः कृकवाकु इभो हस्ति पिरिल्यः पक्षिविशेषः शिखी मयूरः बञ्जुलः खदिर-चञ्चु छिक्करो मृगजातिः सिंहनादः पक्षिविशेषः कूटपूरी करायिका एते पूर्वतः पूर्वस्यां दिशि बलिनः ॥१६॥

## अथ दक्षिणस्यामाह--

२ क्रोष्टुककोलूकहारीतकाककोकर्क्षपिङ्गलाः ।
कपोतरुदिताक्रन्दक्रूरशब्दाश्च याम्यतः ॥१७॥

क्रोष्टुकः शृगालः उलूको दिवान्धपक्षी हारीतो हरिद्वर्णपक्षी काको वायसः कोक प्रसिद्धः ऋक्षो भल्लूक पिङ्गलः पिङ्गलवर्ण उलक चटिका कपोतो वन्यकपोतः रुदित रोदनं आक्रन्दं आक्रन्दितं अन्ये च क्रूरशब्दा अप्रिया ऽभिधायिन स्ते सर्वे याम्यतो दक्षिणस्यां बलिन ॥१७॥

## अथ पश्चिमायामाह–

३ गोशशक्रौञ्चलोमाशहंसोत्क्रोशकपिञ्जलाः ।
बिडालोत्सववादित्रगीतहासश्च वारुणाः ॥१८॥

गौ प्रसिद्धः शशः शशामृगः क्रौञ्चो जलपक्षी लोमसः लोमाधिकः प्राणिविशेषः हंसो मरालः, उत्क्रोशो ऽतीव क्रन्दनं वा उच्चै स्वरेणा ऽऽह्वानं, कपिञ्जलः तित्तिरः, एते पक्षिणः बिडालो मार्जारः । उत्सवो विवाहोपनयन पुत्रजननदेवोत्सवादी, वादित्र वाद्यशब्दः गीतं प्रसिद्ध हास उपहासः एते वारुणाः पश्चिमायां दिशी बलिनः ॥१८॥

२ हारीतकाकर्क्षकोतकोका यूकस्तथा पिङ्गलिकाशृगालौ ।
क्रूरारवाक्रोशनरोदनानि भवन्ति नित्यं बलवन्त्यवाच्यम् ॥

३ उत्क्रोशगोक्रौञ्च बिडालहंसा कपिञ्जलो लोमासिका शशश्च ।
वादित्रगीतोत्सवनृत्यहासा बलं प्रतीच्यामधिकं वहन्ति ॥



## अथ उत्तरस्यामाह–

१ शतपत्रकुरङ्गाखुमृगैकशफकोकिलाः ।
चापशल्यकपुण्याहघण्टाशङ्खरवा उदक् ॥१९॥

शतपत्रो दार्वाघाटपक्षी कुरङ्गो हरिणः आखुर्मूषकः मृगः प्रसिद्धः, एकशफौ अश्वगर्दभौ कोकिलः परभृतश्चाषः प्रसिद्धः, शल्यको विलेश यः प्राणी पुण्याहरवः आशीः संयुक्त शब्द घण्टाशङ्खौ प्रसिद्धौ, एषां रवः शब्द एते उत्तरस्यां दिशि बलिनः ॥१९॥

## अधुनैतेषां प्रविभागमाह–

न ग्राम्ये ऽरण्यजो ग्राह्यो नारण्ये ग्राम्यसंस्थितः ।
दिवाचरो न शर्वर्यां न च नक्तं चरो दिवा ॥२०॥

ग्राम्यः शकुनो ऽरण्यस्थितः शुभो ऽशुभो वा न ग्राह्यः, एवमारण्यो ऽपि ग्राम-संस्थितो न ग्राह्यः, दिवाचरो दिवसचरः शकुनः शर्वर्यां रात्रौ न ग्राह्यः । नक्तं चरो रात्रिचरो दिवा दिवसे न ग्राह्यः, इति ॥२०॥

## पुनरपि प्रतिषेधार्थमाह–

द्वंद्वरोगार्दितस्त्रस्ताः कलहामिषकाङ्क्षिणः ।
आपगान्तरिता मत्ता न ग्राह्याः शकुनाः क्वचित् ॥२१॥

द्वंद्वो युग्मः रोगार्दितो गदपीडितः, त्रस्तो भीतः कलहकाङ्क्षी कलहेच्छुः आमिषका-

१ सरोजचाषैकशफास्तथा ऽऽखुमृगास्तथा कोकिलशल्लकौ च ।
पुण्याहघण्टारवशङ्खशब्दा दिश्युत्तरस्यां बलमुद्वहन्ति ॥

ङ्क्षी मांसाभिलाषी । आपगान्तरितः नद्यन्तरितः मत्तः ऋत्वादिकालवशेन प्रमत्तः, एवं विधाः शकुनाः सदसत्फलेषु न कचिदपि ग्राह्याः ।

उक्तञ्च-

द्वंद्वांतरोगार्दितभीतमत्त
वैरान्तयुद्धामिषकाङ्क्षिणश्च ।
सीमान्तनद्यन्तरितश्च सर्वे
न चिन्तनीयाः सदसत्फलेषु ॥२१॥

## अधुनैतेषामृतुकाले निःफलत्वमाह--

रोहिताश्वाजबालेयाः कुरङ्गोष्ट्रमृगाः शशाः ।
निःफला शिशिरे ज्ञेया वसन्ते काककोकिलौ ॥२२॥

रोहितो मृगजातिः, अश्वस्तुरगः, अजश्छागः बालेयो गर्धभः कुरङ्गो मृगजातिः, उष्ट्रः प्रसिद्धः मृगो हरिणः शशः शशकः, एते शिशिरे माघफाल्गुनयोर्निष्फला ज्ञेयाः वसन्ते चैत्रवैशाखयोः काककोकिलौ निःफलावेव ॥२२॥

## अथान्येष्वाह--

न तु भाद्रपदे गृह्याः सूकरांश्ववृकादयः ।
शारद्यब्जादक्रौश्चाः श्रावणे हस्तिचातकौ ॥२३॥

भाद्रपदे मासि सूकरो वराहः श्वा सारमेयः वृकः श्वापदो ऽरण्यचरः आदिग्रहणात् सृगालादयो ऽपि, विलेशयाः शल्या एते न ग्राह्याः । शरदि आश्विनकार्तिकयोः अब्जादाः हंसादयः, अप्सुजायत इत्यब्ज तं अदन्ति भक्षयन्तीत्यब्जादाः, गौ प्रसिद्धाः क्रौञ्च पक्षी एते न ग्राह्याः, श्रावणमासि हस्तिचातकौ न ग्राह्यौ हस्तिः गजश्चातकः प्रसिद्धः ॥२३॥



## अथान्येष्वप्याह–

व्याघ्रर्क्षवानरद्विपिमहिषाः सविलेशयाः ।
हेमन्ते निःफला ज्ञेया बालाः सर्वे विमानुषाः ॥२४॥

व्याघ्रः प्रसिद्धः ऋक्षो भल्लूकः वानरो मर्कटः द्विपि चित्रकः महिषः कासरः, विलेशयैः प्राणिभिः सह विलेशेते विलेशयाः नकुलादयः विमानुषा मानुषवर्जिताः सर्वे प्राणिनो बालाः शिशवो हेमन्ते मार्गपौषयोर्निःफला ज्ञेयाः ज्ञातव्याः मानुषबालास्तु सर्वकालेषु सबला एवं तेषां यच्छुभाशुभं चेष्टितं तत्सफलमेव ।

अत्र च ऋतुकाललक्षणं भगवता पराशरेण कृतं तदेवात्र लिख्यते –

अथ शकुनेषु कोकिलमयूरजीवाजीवक प्रियपुत्रि राजपुत्रि गोदापुत्र शतपत्रवाहव्यूहमदनशारिव-वर्षाभुवकोयष्टि--महापुष्करगमक--डिण्डिका--नर्तकवायकुक्कुर--भकोत्क्रोशगोगर्वक चित्रकपोत-पुष्करथोष्ट्र-रथादीनां वसन्तो ग्रीष्मो मदकालः शतपत्रोत्क्रोश-भृङ्गराजमयूरकोकिलवक-बलाका बार्ध्रीनसचातकसारंगानां वर्षा मदकालः । चकोरकादम्बमदनशारिककीरपुष्करचातकहंसचक्रवाकसारसकुररक्रौञ्चकारण्डव-भ्रमराणां शरत् मदकालः । श्येननकुलक्रौञ्चसारसादीनां हेमन्तशिशिरे एवमादयः शकुनयोर्मदकालः । मृगाः पुनः पुरुषाश्वशिवाः शशजां वृकसृमर-चमरवानरमार्जार-नकुल - गजगवयवृषादीनां हेमन्तः शिशिर इति ॥२४॥

## अधुना द्वात्रिंशद्भेदभिन्नस्य दिक्चक्रस्य प्रदर्शनार्थमाह–

ऐन्द्रानलदिशोर्मध्ये त्रिभागेषु व्यवस्थिताः ।
कोशाध्यक्षानलाजीवितपोयुक्ताः प्रदक्षिणम् ॥२५॥

ऐन्द्री पूर्वादिक् आनला आग्नेयी अनयोर्मध्ये त्रय स्त्रिभागाः तेषु क्रमेण व्यवस्थिताः कोशे गञ्जे अध्यक्षः कोशाध्यक्षः सचैकस्मिन् भागे । द्वितीये अनलाजीवि अग्न्युपजीवकः स्वर्णकारादिकः । तृतीये तपोयुक्त स्तापस एते एव प्रदक्षिणं प्रादक्षिण्येन व्यवस्थिताः सन्तीत्यर्थः ॥२५॥

## अन्येष्वप्याह--

शिल्पीभिक्षुविवस्त्रास्त्री याम्यानलदिगन्तरे ।
परतो मत्तमातङ्गगोपधर्मसमाश्रयाः ॥२६॥

याम्य दक्षिणा आनला आग्नेयी एतयोरन्तरे मध्ये त्रयः त्रिभागाः तेषुक्रमेण प्रथमे विभागे शिल्पी चित्रकारादिकः, द्वितीये भिक्षुः भिक्षोपजीवी, तृतीये विवस्त्रानग्ना स्त्री । परतो दक्षिण नैर्ऋत्ययोर्मध्ये त्रिभागा; तेषु प्रथमे मदमत्तो हस्ती, द्वितीये गोपः गोपालकः, तृतीये धर्म समाश्रयः धर्मानुरतः ॥२६॥

## अन्येष्वप्याह--

नैर्ऋतिवारुणीमध्ये प्रमदासूतितस्कराः ।
शौण्डिकः शाकुनी हिंस्रो वायव्यापश्चिमान्तरे ॥२७॥

नैर्ऋती दक्षिणपश्चिमा वारुणी पश्चिमा अनयोर्मध्ये त्रिभागाः, तेषु प्रथमे प्रमदा अङ्गना । द्वितीये सूती प्रसूता स्त्री । तृतीये तस्करा श्चोराः वायव्यपश्चिमान्तरे ये त्रिभागा तेषु प्रथमे शौण्डिको मद्यविक्रयी मद्यपानासक्तो वा । द्वितीये शाकुनिः पक्षिपालको धीवरश्च । तृतीये हिंस्रः मारकः क्रूरो वा ॥२७॥

## अथान्येष्वप्याह--

विषघातकगोस्वामिकुहकज्ञास्ततः परम् ।
धनवानीक्षणीकश्च मालाकारः परं तत. ॥२८॥

ततः परं अनन्तरं वायव्योत्तरयोरन्तरे त्रिभागाः, तत्र प्रथमे विषघातकः विषेण यो घातयति मारयतीति । द्वितीये गोस्वामी गवां पालकः, तृतीये कुहकज्ञः इन्द्रजालवित् । ततः परं तत्तरैशान्योर्मध्ये त्रिभागाः, तेषु प्रथमे धनवान् द्रव्याढ्यः । द्वितीये ईक्षणीयो दैवज्ञः शाकुनवित् । तृतीये मालाकारः पौष्पिकः ॥२८॥



## अन्येष्वप्याह--

वैष्णवश्चरकश्चैव वाजिनां रक्षणेरतः ।
द्वात्रिंशदेवं भेदाः स्युः पूर्वदिग्भिः सहोदिताः ॥२९॥

ऐशानीपूर्वयोरन्तरे त्रयः, तेषु प्रथमे वैष्णवः विष्णुभक्तः । द्वितीये चरकः चक्रचरः । तृतीये वाजिनामश्वानां रक्षणे पालने रतः सक्तः । एवमनेन प्रकारेण द्वात्रिंशद्भेदाः पूर्वादिदिग्भिः प्रागुक्ताभिः अष्टाभिर्दिग्भिः सह सार्द्धं उदिताः कथिताः स्युः ॥२९॥

## अधुनाष्टासु दिक्ष्वाह--

राजाकुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।
गजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशम् ॥३०॥

पूर्वाद्यासु क्रमेण नृनः पूर्वस्यां दिशि, कुमारो राजपुत्र आग्नेयां, नेता सेनापतिर्दक्षिणस्यां, दूतो गमागमिको नैर्ऋत्यां, श्रेष्ठी श्रेष्ठपुरुषः पश्चिमायां, चरो गूढपुरुषो वायव्यां द्विजो ब्राह्मण उत्तरस्याम् । गजाध्यक्षो हस्तिशालापति ऐशान्यां, क्षत्रियाद्याश्चतुर्दिशं, पूर्वाद्यासु चतसृषु दिक्षु क्षत्रियाद्या वर्णाः, तद्यथा पूर्वस्यां क्षत्रियाः, दक्षिणस्यां वैश्याः, पश्चिमायां शूद्राः, उत्तरस्यां ब्राह्मणाः, इति ॥३०॥

## अथास्य चक्रस्यप्रयोजनमाह--

१ गच्छतस्तिष्ठतो वापि दिशि यस्यां व्यवस्थितः ।
विरौति शकुनो वाच्यस्तद्दिग्जेन समागमः ॥३१॥

पुंसः गच्छतः यात्रायां, तिष्ठतः तिष्ठमानस्य निश्चलस्यापि यस्यां दिशि व्यवस्थितः शकुनो विरौति शकुनं करोति, तद्दिग्जेन तस्यां दिशि यो जातस्तेन कथितेन सह तस्मिन् दिने तस्य समागमः संयोगो वाच्यः वक्तव्यः । यथा ऐन्द्र्यानलदिशोर्मध्ये प्रथम त्रिभा-

गस्थेन शकुनेन कोशाध्यक्षेण सह योगः । द्वितीये ऽनलाजीविना, तृतीये तापसेनेत्यादिना सर्वत्रोदाहार्यम् ॥३१॥

## अथा ऽधुना रुतानां शुभाशुभमाह—

भिन्नभैरवदीना ऽऽर्तपरुषक्षामजर्जराः ।

स्वनानेष्टाः शुभाः शान्तहृष्टप्रकृतिपूरिताः ॥३२॥

शिष्यजन भ्रान्तिनिराशाय चक्रविन्यासोऽपि प्रदर्शितः ।






ये स्वराः शब्दभिन्नाः विषमाः भैरवाः क्रूराः दीनाः दैन्यमागताः, आर्ताः पीडिताः, आर्व-जन्तुसमुद्भवाः क्षामाः दुर्बला ग्लानित्वमागताः; जर्जराः भिन्नभाण्डसमुद्भवशब्दसदृशास्ते सर्वे एव नेष्टाः न शुभाः । ये स्वराः शान्तेन शान्तदिकस्थेनार्काभिमुखेन मधुरस्वरेण च हृष्टप्रकृतिना सहर्षेण पूरिताः कृतास्ते शुभाः ॥३२॥

## अथ यातुर्वामभागस्थानां शुभत्वमाह—

[1]शिवा श्यामारलाछुच्छुपिङ्गलागृहगोधिकाः ।

सूकरी परपुष्टा च पुन्नामानश्च वामतः ॥३३॥

शिवा सृगाली श्यामा पोतकी रलाकलहकारिका छुच्छु छुचुन्दरी मूषकजातिः, पिङ्गला पीत-वर्णा स्वर्णोलूकाचटी गृहगोधिका कुडयमत्स्या सूकरी जाल्या चटिका, "गमूथलीति लोके" परपुष्टा कोकिला ये च अन्ये पुन्नामानः पुरुषसंज्ञाः, ते यातुर्वामतः वामभागाः शुभाः ।

उक्तञ्च—

छुच्छुन्दरी सूकरीका शिवा च
श्यामा रला पिङ्गलिकान्यपुष्टाः ।
वामा प्रयाणे गृहगोधिका च
स्त्रीसंज्ञिता ये च पतत्रिणः स्युः ॥३३॥

## अथ यातुर्दक्षिणभागस्थानां शुभत्वमाह—

[2]स्त्रीसंज्ञाभाषभपककपिश्रीकर्णछिक्कराः ।

शिखीश्रीकण्ठपिप्पीकरुरुश्येनाश्च दक्षिणाः ॥३४॥

ये स्त्रीसंज्ञाः स्त्रीनामानः ।

---

१ श्यामा शिवा पिङ्गलिकान्यपुष्टा पल्लीरवा शूकरिका तथेह ।
छुच्छुन्दरी चापि शुभाय वामा पुन्नामधेयाः शकुनाश्च सर्वे ॥

२ श्रीकण्ठछिक्काररुरुप्लवङ्गाः श्रीकर्णचाषो भषको मयूरः ।
श्येनः समं पिप्पिकया प्रशस्ताः स्त्रीनामधेया अपि दक्षिणेन ॥

तथा च भगवान् पराशरः—

ते च शिवागोधाकालिकाराजपुत्रीभारद्वाजीबलाकाकानोतीशारिकापिप्पीकास्तु कमुखोप्रचलापिङ्गलापिण्डिकाद्याः स्त्रीसंज्ञाः। शेषाःपुन्नामानः ।

तथा चाषुः प्रसिद्धः प्रभासः प्रसिद्धः भषकः करायिकाख्यः कपिः वानरः श्रीकर्णः पक्षी छिक्करो मृगजातिः। शिखी मयूरः श्रीकण्ठ काकः पिप्पिकः पिपिहेति लोके। रुरुश्चित्रमृगः श्येनः पक्षिराट् एते दक्षिणभागगताः शुभाः।

उक्तञ्च—

श्येनो रुरुः पूर्णकुटः कपिश्च
श्रीकण्ठछिक्कारकपिप्पिकाजः ।
स्त्रीसंज्ञिताः ये च शिशिद्विपौ च
याने हिताः दक्षिणभागसंस्थाः ॥३४॥

## अथान्येषामपि वामदक्षिणभागगतानां शुभाशुभफलमाह–

[१]क्ष्वेडास्फोटितपुण्याहगीतशङ्खाम्बुनिःस्वना ।
सतूर्याध्ययनाः पुंवत् स्त्रीवदन्या गिरः शुभाः ॥३५॥

क्ष्वेडितं मुखशब्दः शेडनीकेति प्रसिद्धाः, आस्फोटितं करास्फोटो वक्षस्थलस्थबाहोरपर-हस्तेन ताडनं, पुण्याहशब्दः प्रशस्तवाक् गीतं प्रसिद्धं शङ्खः प्रसिद्धः, एवं अम्बु जलं, एषां सर्वेषां निस्वनाः शब्दाः सतूर्याध्ययनास्तूर्यसहितअध्ययनशब्दा वेदवेदाङ्गनिर्घोषाः "वामाः प्रयाणे शुभदाः नराणामाक्रन्दितं दक्षिणतः परेषामिति।" अन्याः सव गिरो वाचः स्त्रीवच्छुभाः, दक्षिणत इत्यर्थः ।

उक्तञ्च—

आस्फोटिताक्ष्वेडितशंखतुर्यपुण्याहवेदध्वनिगीतशब्दाः ॥३५॥

१ क्ष्वेडारवास्फोटितगतिवाद्ये पुण्याहशङ्खाध्ययनाम्बुकुम्भाः ।
वामेन पुंवत् कथयन्ति भद्रं स्त्रीवच्छुभादक्षिणतश्च वाचः ॥



## अथाधुना ग्रामस्वराणां शुभाशुभत्वमाह–

[२]ग्रामौ मध्यमषड्जौ तु गान्धारश्चापि शोभनाः ।
षड्जमध्यमगान्धारऋषभश्च स्वरा हिताः ॥३६॥

याने यात्रायां ग्रामौ मध्यमषड्जौ शस्तौ शोभनौ गान्धारश्च शोभन एव । स च गान्धारो वेदेषु गीयते न मानुषेषु । तथा षड्जमध्यमगान्धारऋषभाः स्वरा हिताः गाने।

उक्तञ्च—

गान्धारषड्जमृषभं खलु मध्यमञ्च
याने स्वराः शुभकराः न तु ये च शेषाः ।
ग्रामौ शुभावपि हि मध्यमषड्जसंज्ञौ
गान्धारगीतमपि भद्रमुशन्ति देवाः ॥३६॥

## अथान्यच्छाकुनशुभाशुभमाह–

रुतकीर्तनदृष्टेषु भारद्वाजाजवर्हिणः ।
धन्यौ नकुलचाषौ च सरटः पापदोऽग्रतः ॥३७॥

भारद्वाजी पक्षिविशेषः लाटेति प्रसिद्धा, अजः छागः बर्हिर्मयूर एते रुतेन शब्देन कीर्तनेन नामसंकीर्तनेन दृष्टेन दर्शनेन धन्याः शुभाः। नकुलो बभ्रुः चाषः पक्षी एतावपि च शब्दाः धन्या एव। रुतकीर्तनदृष्टेषु शरटः प्राणी कृकलास इति केचित्, स चाग्रतः पुरतः पापकः पापफलदः ॥३७॥

## अथान्यदप्याह–

[१]जाहकाहिशशकोलगोधानां कीर्तनं शुभम् ।
रुतं संदर्शनं नेष्टं प्रतीपं वानरर्क्षयोः ॥३८॥

२ गान्धारषड्जावृषभस्तथान्य वरेषु गम्भीरमनोहरा ये ।
वादित्रवेदध्वनिनृत्यगीतमित्यादि शस्तं किल यत्र रौद्रम् ॥

१ खञ्जनाजनकुलाः शिखिचाषौ कीर्तनेक्षणरुतैर्ददतीष्टम् ।

जाहको गात्रसङ्कोची मृगविशेषोऽनेकसृङ्गः, माक इति लोके। अहिः सर्पः शशः प्रसिद्धः कालो वनसूकरः । एषामेव रुतं शब्दः सन्दर्शनं च न सम्यक्, नामोच्चारणं तु शुभम् । वानरः कपिः ऋक्षो भल्लूक एतयोः प्रतीपं विपरीतं, एषां रुतं दर्शनं चेष्टं, न कीतनमित्यर्थः ।

उक्तञ्च—

भारद्वाज्यजबर्हिचाषनकुलाः सङ्कीर्तनाद्दर्शनात् ।
क्रोशन्तश्च शुभप्रदाः न शरटोः दृष्टः शिवाय क्वचित् ॥
गोधाजाहकसूकराऽहि शशकाः पापारुताऽलोकने ।
धन्यं कीर्तनमृक्षवानरफलं तद्व्यत्ययाच्छोभनम् ॥इति॥

अत्र वानरर्क्षयोः कीर्तनमशुभमिति यदुक्तं तत, हनुमज्जाम्बुवान् व्यतिरिक्तविषयः ॥३८॥

## अथान्यदप्याह–

ओजाः प्रदक्षिणं शस्ताः मृगाः सनकुलाण्डजाः ।
चाषः सनकुलं वामो भृगुराहाऽपराण्हतः ॥३९॥

मृगाः हरिणाः सनकुलाण्डजाः चाष सनकुलाण्डजाः प्रसिद्धः, अण्डजाःपक्षिणः, ते ओजा विषमसंख्या एकत्रिपञ्चसप्तनवादयः प्रदक्षिणं प्रादक्षिण्येन शस्ताः शुभाः । यातुर्वामपार्श्वाद-ग्रतः, आगत्य दक्षिणपार्श्वेन क्रामन्ति तत्र दक्षिणं सत्फलदं एतद्विपरीतं दक्षिपार्श्वाद्वामपार्श्व-गमनं तदसत् । एतत्सर्वस्मिन् शाकुने विज्ञेयमिति ।

यस्मादाचार्य एव ज्ञापकः—

'ऐन्द्रानलदिशो मध्ये त्रिभागेषु व्यवस्थिताः ।
कोशाध्यक्षानलाजीवि तयोःयुक्ताः प्रदक्षिणम् ॥इति॥

चाषः सनकुलो वाम इति । चाषो नकुलेन सहितो वामभागगतो धन्यः । भृगुनाममुनि-रेवमाह उक्तवान् ।

जाहकाहिशशसूकरगोधाः कीर्तनेन न तु दृष्टरुताभ्याम् ॥
ऋच्छभल्लकपिदर्शनशब्दैः सिद्धिदौ न परिकीर्तनमिष्टम् ।
दक्षिणेनागमनं विषमाणां शोभनं नकुलपक्षिमृगाणाम् ॥



तथा च भृगुः—

वामगौचाषनकुलावपराह्णे शुभप्रदौ ॥इति॥
यथाऽपराह्णत अपराह्णादूर्ध्वं वामगो धन्यो न पराह्णे ।

तथा च योगयात्राम्—

नकुलस्य मृगस्य पक्षिणां वामाद्दक्षिणभागसेवनम् ।
शुभदं स्वसृगालयोरिदं व्यत्यासेन फलं प्रसस्यते ॥
चाषो नकुलश्च वामगौ दिवसार्द्धात्परतः शुभप्रदौ ॥३९॥

## अथान्येषामप्याह–

छिक्करकूटपूरी च पिरिली चान्हिदक्षिणः ।
अपसव्याः सदा शस्ताः दंष्ट्रिणः सविलेशयाः ॥४०॥

छिक्करो मृगजातिः कूटपूरी करायिका पिरिली पक्षिविशेषः । एता अन्हि दिवसे दक्षिणाः प्रशस्ताः । दंष्ट्रिणो वराहादयः विलेशयाः विलेशेते इति विलेशयाः श्वावित्प्रभृतयः वामभाग-गता एव शस्ता शोभनाः ।

## अधुना दिग्वशेन शाकुनशुभाशुभमाह–

[2] श्रेष्ठे हयसिते प्राच्यां शवमांसे च दक्षिणे ।
कन्यकादधिनी पश्चादुदग्गोविप्रसाधवः ॥४१॥

हयोऽश्वः सितं श्वेतवर्णो यः कश्चिद्रस्तु प्राच्यां पूर्वस्यां दिशि यातुः श्रेष्ठे शोभने । शवो

१ पुरल्लिकाछिक्करकूटपूराः प्रदक्षिणेनान्हि भवन्ति शस्ताः ।
दिनावसाने नकुलं च चाषं वामेन याते भृगुराह शस्तम् ॥
सर्वागमै दंष्ट्रिबिलाधिवासा वामेन यान्तो गदिता प्रशस्ता ।
सर्वेऽबलानां नरवैपरित्यादुक्तं समस्तं शकुनं प्रशस्तम् ॥

२ प्राच्यां प्रशस्तौ हयशुक्लकर्णौ शस्तौ तथा क्रव्यशवाववाच्याम् ।
शस्ते च कन्यादधिनी प्रतीच्यां शस्ता उदीच्यां द्विजसाधुगावः ॥

मृतपुरुष मांसं आमिषं दक्षिणस्यां दिशि शुभे। कन्या कुमारी दधि क्षीरविकारः प्राच्यां पूर्वस्यां दिशि यातुः शोभने। गौ प्रसिद्धा विप्रो ब्राह्मणः साधुः सज्जनः, एते उत्तरस्यां दिशि शोभनाः।

उक्तं च—

द्रव्याणि शुक्लानि तुरङ्गमश्च
पूर्वेण याम्येन शवं समांसम्।
पश्चात् कुमारी दधि चातिशस्तं
सौम्येन गोब्राह्मणसाधवश्च ॥४१॥

## अथाऽशुभान्याह–

जालःश्वचरणौ नेष्टौ प्राक्याम्यौ शस्त्रघातकौ।
पश्चादासवषण्ढौ च खलासनहलान्युदक् ॥४२॥

जालः प्रसिद्धः, पक्षिणो यत्र वध्यन्ते। जालेन चरतीति शुनाचरतीति जालचरौ जालचरणाः हंसजलकुक्कुटादयः श्वचरणाः वृकसृगालादयः श्वपदाः, तौ प्राक पूर्वस्यां नेष्टावशुभौ शस्त्र शस्त्रो ऽस्यास्तीकि पचाद्यच्, घातको हिंस्रः प्राणिमारकस्तौ याम्यौ दक्षिणस्यां दिशि न शुभौ। आसवो मद्यविशेषः पानविशेषो वा षण्ढः क्लीवः, एतौ पश्चात्पश्चिमायां न शुभौ। खलो दुर्जनः, आशनं प्रसिद्धं पीठपर्यङ्कादि फलं प्रसिद्धं एतान् उत्तरस्यां दिशि न शोभनानि।

उक्तञ्च–

जालकरश्वकरौ न शुभ प्राक्
घातक–शस्त्रकरौ यमदिक्स्थौ।
पुद्रकमद्यकरावपि पश्चा-
दाशनसीरखलैः सह चोदक् ॥४२॥

## अधुना कर्मादौ शकुनानां विशेषमाह–

कर्मसङ्गमयुद्धेषु प्रवेशे नष्टमार्गणे।
यानव्यस्तगता ग्राह्या विशेषश्चात्र वक्ष्यते ॥४३॥



कर्म यत्क्रियते सङ्गमः केनचिद्बन्ध्वादिना सह संयोगः युद्धं संग्राम एतेषु, यथा प्रवेशे नष्टमार्गणे नष्टस्य हृतस्य वस्तुनो मार्गणेऽन्वेषणे एतेषु सर्वेषु यानव्यस्तगताः ग्राह्याः याने यात्रायां येन प्रकारेणोक्तास्तद्व्यत्ययेनैतेषु ग्राह्याः। अयमर्थः यात्रायां ये दक्षिणे शस्तास्तेऽत्र वामतः, यात्रायां ये वामतस्ते दक्षिणा, यात्रायां ये पुरतस्तेऽत्र पृष्ठतः यात्रायां ये गन्तुर्दिगभिमुखात् पथिकसंमुखमायान्ति ते सह गच्छंतः, ये च स्वेन सह गच्छन्तस्तेऽत्र पथिकसंमुखाः गच्छन्तः इति। दिक्ष्वप्येवमेव विपर्ययो विज्ञातव्यः। तेन यात्रायां ये पूर्वस्यां दिशि, तेऽत्र पश्चिमायां, ये पश्चिमस्यां ते पूर्वस्यां, ये दक्षिणस्यां ते उत्तरस्यां ये उत्तरस्यां ते दक्षिणस्यामिति। विशेषतश्चात्र वक्ष्यन्ते। अत्रास्मिनर्थे कर्मसंगमादिके यो विशेषः स वक्ष्यते कथ्यते।

उक्तञ्च–

नष्टावलोकन-समागम-युद्धकर्म-
वेश्म–प्रवेश–मनुजेश्वर–दर्शनेषु।
यान प्रतीपविधिना शुभदाः भवन्ति
... ... ... ... ... ... ... ... ॥४३॥

## अथात्रैव विशेषमाह–

दिवा प्रस्थानवद्ग्राह्याः कुरङ्गरुरुवानराः।
अप्यत्रश्च प्रथमे भागे चापवञ्जुलकुञ्जराः ॥४४॥

शर्वरी पश्चिमे भागे नप्तृकोलूकपिङ्गलाः।
सर्वं एव विपर्यस्थाः ग्राह्याः सार्थेषु योषिताम् ॥४५॥

दिवा प्रस्थानवदिति, कर्मादिषु दिवा दिवसे कुरङ्गो हरिणः रुरुश्चित्रमृगः वानरः कपि एते प्रस्थानवद्ग्राह्याः, यथा प्रस्थाने यात्रायां गृह्यते तथाऽत्रापि। चापवञ्जुलकुञ्जराः चाषः प्रसिद्धः वञ्जुलो बकुलः कुञ्जरो हस्ती एतेऽह्नोः प्रथमयामे प्रस्थानवद्ग्राह्याः। शर्वरी रात्रिः, तस्यां पश्चिमेऽन्त्ये भागे नप्तृकः प्रसिद्धः उलूको दिवान्धः पिङ्गलः प्रसिद्धः

एते प्रस्थानवद्ग्राह्याः । योषितां स्त्रीणां सार्थेषु सर्वे एव विपर्ययस्थाः विपरीतगताः ग्राह्याः। यात्रायां कर्मसङ्गमादिष्वपि सर्वत्र विपरीताः ग्राह्याः ॥४४-४५॥

## अथान्यदप्याह–

नृपसंदर्शने ग्राह्याः प्रवेशे ऽपि प्रयाणवत् ।
गिर्यरण्यप्रवेशेषु नदीनां चावगाहने ॥४६॥
वामदक्षिणगौ शस्तौ यौ तु तावग्रपृष्ठगौ ॥४६½॥

नृपो राजा तस्य सन्दर्शने यद्यपि प्रवेशो राजगृहे भवति तथा ऽपि प्रयाणवद्ग्राह्याः ।

उक्तञ्च–

केचिज्जगुर्गमनवन्नृपदर्शने ऽपि ।

गिरिप्रवेशे पर्वतप्रवेशे ऽर्थात् पर्वताऽऽरोहे ऽटव्यां वनप्रवेशे नदीनां सरितामवगाहने उत्तरणे यौ शकुनौ यात्रायां वामदक्षिणगौ शस्तौ तावग्रपृष्ठगौ गिरिप्रवेशादिषु शस्तौ । यात्रायां ये वामतः शस्ताः, ते ऽत्रागतः पुरतः । यात्रायां ये दक्षिणतस्ते ऽत्र पृष्ठत इति ॥४६½॥

## अथान्येष्वप्याह–

क्रियादीप्तौ विनाशाय यातुः परिघसंज्ञितौ ॥४७॥
तावेव तु यथा भागं प्रशान्तहतचेष्टितौ ।
शकुनौ शकुनद्वारसंज्ञितावर्थसिद्धये ॥४८॥

क्रियादीप्तस्य लक्षणं प्रागुक्तं । क्रियादीप्ता गति-स्थान-भावस्वर-विचेष्टितैरिति । क्रियादीप्तौ शकुनौ यातुर्जिगमिषोर्यदि परिघसंज्ञितौ तदुभयपार्श्वस्थौ भवतस्तदा विनाशाय यातुरेव भवतः । तावेव शकुनौपरिघसञ्ज्ञितौ । अर्थसिद्धये यथा स्थानं स्थितौ



भवतः । यः शकुनो दक्षिणे स्थितः स च तत्रैव शुभः । यश्च वामस्थः वामभाग एव शुभः प्रशान्तं रुतं चेष्टितं ययोस्तौ तथा भूतौ शकुनौ शकुनद्वारसञ्ज्ञितौ, शकुनानां शुभाशुभानामर्थानां द्वारसंज्ञितौ मार्गभूतौ अर्थसिद्धये च भवतः ॥४७-४८॥

## अधुना मतान्तरेण शकुनद्वारमाह–

केचित्तु शकुनद्वारमिच्छन्त्युभयत स्थितैः ।
शकुनैरेकजातीयैः शान्तचेष्टाविराविभिः ॥४९॥

केचिदाचार्या नन्दिप्रभृतयः शकुनद्वारं उभयत स्थितैः शकुनैः पार्श्वद्वयव्यवस्थितैरेकजातीयैः, एकयोन्युद्भवैः शान्तचेष्टाविराविभिः । चेष्टा लक्षणं, 'तिथिवाय्वर्कभस्थानचेष्टादीप्ता यथाक्रममिति ॥' एवं शान्ता चेष्टा विरावः शब्दश्च येषां ते शकुनद्वारमिति ब्रुवन्ति कथयन्ति ।

तथा च नन्दिः–

एकयोन्युद्भवैः शान्तैः शान्तचेष्टैर्व्यवस्थितैः ।
यथा भागगतैस्तैश्च शकुनद्वारमिष्यते ॥४९॥

## अथान्यदप्याह–

विसर्जयति यद्येक एकश्च प्रतिषेधति ।
स विरोधो ऽशुभो यातुर्ग्राह्यो यो बलवत्तरः ॥५०॥

एकः शकुनो यदि विसर्जयति यात्रासिद्धिं आचष्टे अन्यो ऽपरतश्च प्रतिषेधति विरोधमाचष्टे । स च यातुर्गच्छतः विरोधसञ्ज्ञः, अशुभश्च, अथवा तयोर्यो बलवत्तरः अतिशयेन बली स एव ग्राह्यः । बलञ्च प्रागेवोक्तम् ! जवजाति बलस्थानमित्यादि ॥५०॥

## अथान्यदप्याह–

पूर्वं प्रावेशिको भूत्वा पुनः प्रस्थानिको भवेत् ।
सुखेन सिद्धिमाचष्टे प्रवेशे तद्विपर्ययात् ॥५१॥

पूर्वं प्रथमं शकुनः प्रावेशिको भूत्वा प्रवेशे यच्चेष्टितमुक्तं तत्करोति, तच्च पूर्वोक्तं प्रवेशे नष्टमार्गणे यानव्यस्तगता ग्राह्या इत्येवमादौ प्रावेशिको भूत्वा पुनः प्रयाणिको यदि भवति प्रयाणे यद्धितं तत्करोति तदा स शकुनः सुखेन अक्लेशेन यातुः सिद्धिं, आचष्टे कथयति । प्रवेशे उक्तविपर्ययात् ग्राह्यः । गृहप्रवेशादौ पूर्वं प्रयाणिकः पश्चात्प्रावेशिको यदि भवति तदा सुखेन सिद्धिमाचष्टे ॥५१॥

## अथान्यदप्याह–

विसर्ज्य सकुनः पूर्वं स एव निरुणद्धि चेत् ।
प्राह यातुररेर्मृत्युं डमरुं रोगमेव वा ॥५२॥

शकुनं पूर्वं प्रथमं विसर्ज्य यात्रायां शुभचेष्टितं कृत्वा स एव पुन यदि निरुणद्धि यात्रायां प्रतिषेधयति तदा यातुर्गच्छतोऽरे सकाशात् मृत्युर्मरणं प्राह कथयति अथवा डमरुं शस्त्रकलहं रगमेव वा कथयति ॥५२॥

## अन्यदप्याह–

अपसव्यास्तु शकुनाः दीप्ताः भयनिवेदिनः ।
आरम्भे शकुनो दीप्तो वर्षान्तस्तद्भयंकरः ॥५३॥

अपसव्या अप्रदक्षिणगाः ते च दीप्ताः दीप्तदिक्स्थाः सूर्याभिमुखाश्च भयनिवेदिनः भयं निवेदयन्ति । आरम्भे कार्यप्रारम्भे दीप्तः शकुनः वर्षान्तः वर्षमध्ये तद्भयङ्करः, तस्मिन्नेव कार्ये भयं करोति ॥५३॥

## अधुना दीप्तलक्षणं तत्फलञ्चाह–

तिथिवाय्वर्कभस्थानचेष्टादीप्ता यथाक्रमम् ।
धनसैन्यबलाङ्ग कर्मणां स्युर्भयङ्कराः ॥५४॥

तिथिदीप्तः, वायुदीप्तः, अर्कदीप्तः नक्षत्रदीप्तः, तेषां लक्षणं प्रागेवोक्तं चेष्टादीप्तः कस्यचिद्विघातं कर्तुमिच्छुः एवं विधादीप्ताः यथाक्रमं धनादीनां भयङ्कराः स्युः, तद्यथा तिथिदीप्तः शकुनो धनभयङ्करो वायुदीप्तः सैन्यस्य अर्कदीप्तो बलस्य नक्षत्रदीप्तोऽङ्गस्य, शरीरावयवस्य स्थानदीप्त, इष्टस्य अभीप्सितकार्यस्य चेष्टादीप्तः कर्मणः भयङ्कराः ॥५४॥



## अथान्यदप्याह–

जीमूतध्वनिदीप्तेषु भयं भवति मारुतात् ।
उभयोः सन्ध्ययोर्दीप्ताः शस्त्रोद्भवभयङ्कराः ॥५५॥

जीमूतो मेघः जीमूतध्वनिना मेघशब्देन दीप्तः शकुनो मारुताद्भयं करोति । उभयोर्द्वयोः सन्ध्ययोः सूर्योदयास्तमययोः दीप्ताः शकुनाः शस्त्रोद्भवं शस्त्रसमुत्थं भयं कुर्वन्ति ॥५५॥

## अथान्यदप्याह–

चितिकेशकपालेषु मृत्युबन्धवधप्रदाः ।
कण्टकीकाष्ठभस्मस्थाः कलहायासदुःखदाः ॥५६॥

अप्रसिद्धं भयं वापि निस्साराश्मव्यवस्थिताः ।
कुर्वन्ति शकुनाः दीप्ताः शान्ता याप्यफलास्तु ते ॥५७॥

चितौ शवदाहाग्निसमीपे मृत्युं मरणं ददाति, केशेषु मूर्द्धजेषु स्थितः बन्धनं ददाति कपाले स्थितो बधं मरणं ददाति । कण्टकिवृक्षे स्थितः शकुनः कलहं ददाति, काष्ठे स्थितः आयासं उपद्रवं ददाति । भस्मनि स्थितो दुःखं । निःसारे अन्तःसुखिरे स्थितः कार्याणां अप्रसिद्धिं करोति, अश्मनि पाषाणे स्थितो भयं करोति । यदेतत्प्रागुक्तं चितिकेशभस्मकपालेषु ते दीप्ताः शकुना एवं कुर्वन्ति । शान्तास्तु ते पुनः याप्यफला भवन्ति याप्या कष्टसाध्या ईषत्फला वा ॥५६-५७॥

## अथान्यदप्याद्–

असिद्धिसिद्धिदौ ज्ञेयौ निर्हारा हारकारिणौ ।
स्थानात्क्रोशन्व्रजेद्यात्रां शंसते त्वन्यथाऽऽगमम् ॥५८॥

निर्हरणं पुरिषोत्सर्गः निहारकारी शकुनः कार्याणां असिद्धिकारी भवति । आहारकारी सिद्धिदः । अथ यस्मिन् स्थानस्थितस्तस्मात् क्रोशमानः शब्दायमानो यदि व्रजति तदा यात्रा गमनं शंसते कथयति । अन्यथा विपर्ययेण क्रोशमानः स्थानमागत्योपविशति तदा शकुनः कस्य चिदागमनं शंसते कथयति ॥५८॥

## अथान्यदप्याह–

कलहः स्वरदीप्तेषु स्थानदीप्तेषु विग्रहः ।
उच्चमादौ स्वरं कृत्वा नीचं पश्चाच्च मोहकृत् ॥५९॥

स्वरो दीप्तो येषां तैः शकुनै कलहो भवति । स्थान दीप्तेषु विग्रहः स्वकीयजनानामन्तर्मनसि विरोधो भवति । उच्चं स्वरं कृत्वा पश्चान्नीचं अल्पं स्वरं करोति तदा मोहकृत, केनचिदन्येन गन्तुर्मनो मोहयति ॥५९॥

## अथान्यदप्याह–

एकस्थाने रुवन्दीप्तः सप्ताहाद्ग्रामघातकृत् ।
पुरदेशनरेन्द्राणामृत्वर्द्धायनवत्सरात् ॥६०॥

दीप्तः शकुन एकस्मिन्स्थाने रुवन् क्रोशन् सप्तदिनानि तिष्ठति तदा सप्ताहात्सप्तभिर्दिनैः परतो ग्रामघातं ग्रामविनाशं करोति । न केवलं यावत्पुरदेशनरेन्द्राणाम् । ऋत्वायनवत्सरात् । तत्र चैकस्थाने दीप्तो रुवन् ऋतुमभिव्याप्य मासद्वयेन यावत्, तदा तेनैव ऋतुना मासद्वयेन पुरघातं करोति । एवमर्द्धायने त्रिभिर्मासैर्देशघातं करोति । वत्सराद्वर्षात् नृपस्य राज्ञो घातं करोति ॥६०॥



## अथान्यदप्याह–

१ सर्वे दुर्भिक्षकर्तारः स्वजातिपिशिताशिनः ।
सर्पमूषकमार्जारपृथुरोमाब्विवर्जिताः ॥६१॥

सर्वे शकुनाः स्वजातिपिशिताशिनः स्वजातीनां पिशितं मांसं अश्नन्ति, तथा भूतास्तद्देशे दुर्भिक्षकर्तारः दुर्भिक्षं कुर्वन्ति । किन्तु सर्प उरगः मूषिक आखुः मार्जारो विडालः पृथुरोमा मत्स्या एतान् वर्जयित्वा एषां स्वजातिपिशिताशनत्वं स्वभाव एवान्येषां तूत्पातः ।

उक्तञ्च –

विहाय सर्पाखुविडालमत्स्याः
स्वजातिमांसान्युष भुञ्जते वा ॥६१॥

## अथान्यदप्याह–

२ परयोनिषु गच्छन्तो मैथुनं देशनाशनाः ।
अन्यत्र वेसरोत्पत्तेर्नृणां चाजातिदर्शनात् ॥६२॥

सर्वे एव प्राणिनः परयोनिषु अन्ययोनिषु मैथुनं गच्छतो देशनाशाय भवन्ति किन्त्वन्यत्र वेसरोत्पत्तिः । वेसरोऽश्वतरस्तदुत्पत्तेश्च संभवादन्यत्र यतस्तत्राश्वायां गर्दभो याति तस्यामश्वोऽपि याति । नृणां पुंसां जातिमैथुनादन्यत्रापि नराः मनुष्या अजातौ बडवादिषु यान्त्येव कामातुरा एवमादिकं वर्जयित्वाऽन्यत्रायं विचारः ॥६२॥

---

१ सर्वेऽपि दुर्भिक्षकृतो भवन्ति स्वजातिमांसानि समाहरन्तः ।
मार्जारमाखू पृथुरोमसर्पौ मीनं च पञ्च प्रविहाय सत्वान् ॥
२ देशस्य भङ्गं परयोनियानात्कुर्वन्ति सत्वा नृखरौ विहाय ।
सर्वे यथावस्थितविश्वरूपादन्यत्तदुत्पाततया वदन्ति ॥

## अथान्यदप्याह–

बन्धभयानि स्युः पादोरुमस्तकान्तिगैः ।
अपाश्मपिसितान्नादे वृष्टिर्मोघक्षतग्रहाः ॥ ६३ ॥

पादोरुमस्तकान्तिगैः शकुनैः यथाक्रमं बन्धघातभयानि स्युः । यदा शकुनः पादान्तिगः पादनिकटे पादे वा याति तदा बन्धनं करोति, उरःप्रदेशे वक्षस्थले याति तदा घातं, अभिघातं करोति, यदा मस्तकं याति तदा ऽकस्माद् भयं करोति, आपो जलं तेन जलाशी शकुनो दृष्टः वृष्टिं करोति, अश्माशी पृषत्कणभक्षो मोघं करोति । पिशिताशी मांसभक्षः क्षतं अस्त्रे व्रणं करोति, अन्नादो ऽन्नभक्षी ग्रहः संयोगं केनचिद्बन्धुना करोति ॥६३॥

## अथान्यदप्याह–

इष्टं वा गोरसान्नं वा भारद्वाजस्य दर्शने ।
चापस्य पूर्णवक्त्रस्य महान् लाभः प्रदक्षिणे ॥६४॥

इष्टं गन्तुः यद्वस्तुनि यन्मनुष्ये इच्छा ऽस्ति तदवलोकनं गोरसं गोमयगोमूत्रादि तेषां दर्शनं भारद्वाजस्य भारद्वाजपक्षीलाटेति प्रसिद्धः, तस्य दर्शनं अभीष्टयति, यातुः करोति। वामपार्श्वादग्रत आगत्य दक्षिणेन यदा याति तदा महानतीव लाभो भवति।

उक्तञ्च–

पूर्णाननः कृमिपतङ्गपिपीलिकाद्यै–
लोटो प्रदक्षिणमुपैति नरस्य यस्य ।
खे स्वस्तिकं यदि करोत्यथवा चिथासो–
स्तस्यार्थलाभो ह्यचिरात्करोति ॥

चाषो ऽप्येतादृशो यातु महान् लाभः प्रदः स्मृतः, इति ॥६४॥



## अथान्यादप्याह–

१ वामदक्षिणगः श्रेष्ठः पुरस्ताच्च कपिञ्जलः ।
तित्तिरः पृष्ठतः श्रेष्ठः सर्वत्रान्यत्र गर्हितः ॥६५॥

कपिञ्जलो गौरतित्तिरः स च वामे वामभागे दक्षिणे मध्ये च भागे पुरस्तात्, अग्रतः श्रेष्ठः शुभफलदः तित्तिरः पृष्ठतः श्रेष्ठः स तित्तिरः, अन्यत्र सर्वत्र वामे दक्षिणे पुरतः गर्हितो ऽशुभदः । कपिञ्जल कपिञ्जल् इति यो ब्रूते स कपिञ्जलः, तित्तिरः तित्तिर इति यो ब्रूते स तित्तिरः, इति लोके प्रथास्ति ॥६५॥

## अथान्यदप्याह–

१ अनुलोमो वृषोनन्दन् धन्यौ गोमहिषौ तथा ।
गमनप्रतिषेधाय खरः प्रत्युरसि स्थितः ॥६६॥

---

१ कपिञ्जलः कूजति दक्षिणश्चेत्पुनः पुनः स्यात्कृतकृत्यता च ।
वामे विभागे विफलं प्रयाणं हानिर्भवेत्तस्करदर्शनञ्च ॥
लाभो भवेद्दक्षिणपृष्ठभागे कार्याणि सिद्ध्यन्ति न वामपृष्ठे ।
पृष्ठे क्षतिश्चौरभयं तथाग्रे भवेन्निनादेन कपिञ्जलस्य ॥
आत्मीयकं नाम कपिञ्जलेति पुनः पुनर्यो ऽकरोति जल्पन् ।
सोत्साहमुत्साहितचित्तवृत्तिः स तित्तिरिः साधयतीष्टमर्थम् ॥
अयुग्मसंख्याः कथिता परस्मै कृतारवास्तित्तिरयः समृद्ध्यै ।
करोति वा व्योमनिरीक्ष्यमाणो निरीक्षितस्तित्तिरिरर्थनाशम् ॥
इति कपिञ्जलादयः ।

१ भंभारवौ वामदिशीष्टसिद्ध्यै सिद्ध्यै गवां स्युर्निशि हुङ्कृतानि ।
धनन्त्यः खुराग्रैः क्षितिमामयाय सास्त्रेक्षणाः स्युर्मरणाय भर्तुः ॥
व्याताः सुरभ्यो यदिमक्षिकाभिराचक्षते मङ्गलु तदम्बुवृष्टिः ।

वृषो बलीवर्दः अनुलोमो धन्यः, यस्यां दिशि याना गच्छति तस्यामेव दिशि याति स च नन्दन शब्दं कुर्वन् धन्यः शुभस्तेनैव प्रकारेण गोमहिषौ चानुलोमौ नदन्तौ धन्यौ खरः गर्दभः प्रत्युरसि स्थितः संमुखो यातु गँमने यात्रायां प्रतिषेधाय निवारणाय भवति ॥६६॥

## अथान्यदप्याह--

उलूकी वामतः क्षेप्या दक्षिणेन च कोकिला ।
शर्करी च मयूरश्च शस्यते दक्षिणे सदा ॥६७॥

उलूकी यात्रायां वामतो क्षेप्या यातुर्वामभागे शुभाः कोकिलाः परभृताः दक्षिणे शर्करी सूक्ष्मपक्षिविशेषः मयूरः शिखि एतौ द्वौ सर्वकाले यातु र्दक्षिणे शस्यते शुभफला इति ॥६७॥

---

भस्मास्थोन्मिश्रितहुङ्कृताढ्या बस्तोत्सुका हर्षपरीतचित्ताः ॥
ज्ञेयाः सुरभ्यः शुभदाः सदैव गोभिः समानाः शकुने महिष्यः ।
इति गोमहिष्यौ ।

वामो ऽनुलोमश्च रवः खुरेण शृङ्गेण चाग्रे खननं पृथिव्याः ।
प्रशस्यते दक्षिणश्च चेष्टा तथा नीशीथे निनदो वृषस्य ॥
वामाद्दामे गमनं वृषस्य चेष्टा च वामा न मता हिताय ।
युद्धाय नाशाय च तुल्यकालं पार्श्वद्वयस्थौ महिषौ भवेताम् ॥
इति वृषभमहिषौ ।

वामो ऽतिदीर्घः स्थिरगर्दभस्य सिद्ध्यै रवो वामविचेष्टितस्य ।
पृष्ठाग्रयोर्दक्षिणतश्च शब्दः स्याद्दक्षिणं चेष्टितुरप्यसिद्ध्यै ॥
कण्डूयमाना वितरेतरस्य स्कन्धं रदैः पश्यति गर्दभो यः ।
पान्थः प्रयाणे यदि वा प्रवेशे मिलत्यसौ मित्रकलत्रपुत्रैः ॥
इति खरः ।



## अथान्यदप्याह--

१ वृकाः सृगालाः शार्दूला विडाला गर्दभाः पुनः ।
वामतो ऽर्थकराज्ञेयाः कुरङ्गा दक्षिणेन च ॥६८॥

वृकाः प्रसिद्धाः सृगालाः प्रसिद्धाः शार्दूला व्याघ्राः विडाला मार्जाराः गर्दभा रासभाः यातुर्गमन कर्त्तुर्वामभागगा अर्थकरा द्रव्यफला ज्ञेयाः । कुरङ्गा हरिणा दक्षिणेन दक्षिणभागगता यातुरर्थकरा भवन्ति ॥६८॥

---

१ शस्तो रुवन्नामिषपूर्णवक्त्रो दिक्शाननो नादकृदप्रशस्तः ।
नानाप्रकारैर्विरुतैरुपेतो निन्द्यो विडालः खलु युद्धचमानः ॥
इति विडालः ।

रुतेक्षणे ग्रामबलीमुखस्य जयाय नामग्रहणं भयाय ।
दृष्टा गति दक्षिणतो न चेष्टा व्यासङ्गकारी गमनोद्यतानाम् ॥
इति वानरः ।

उध्वं करे यः कुरुते ऽथवा यो धत्ते करं दक्षिणदन्तभङ्गे ।
यो वा भवद्बृंहितपूरिताशः करी भवेत्सो ऽध्वगपूरिताशः ॥
इति हस्ती ।

अजामजं दर्शनकीर्तनाभ्यां शसंति शब्दं च तयोः प्रयाणे ।
अजानीशीथे यदि रौति तेन सर्वाणि गेही लभते सुखानि ॥
इत्यजाजौ ।

मेषैडकौ दक्षिणकाय चेष्टौ शुभेषु कार्येषु शुभौ प्रदिष्टौ ।
वामा च चेष्टां प्रतिपादयन्तौ कार्येषु तावप्यशुभेषु शस्तौ ॥
इति मेषैडकौ ।

उष्ट्रस्य वामो मधुरश्च शब्दः शस्तो ऽप्रशस्तः पुरुषः प्रवासे ।
अनर्तवामस्थितयोर्विरावे श्छुच्छुन्दरीमूषिकयोश्च सिद्धिः ॥
इति उष्ट्र च्छुच्छुन्दरी मूषिकाः ।

## अथान्यदप्याह–

१ रिक्तकुम्भो ऽनुकूलश्च शस्तो ऽर्थी यियासतः ।
चौर्यवाणिज्यविद्यार्थान्युद्यतानां यिशेषतः ॥६६॥

रिक्तः कुम्भः जलवर्जीतो घटः अनुकूलो ऽनुलोमगः यस्यां दिशि याता गच्छति तस्यामेव दिशि स याति स चाम्भो ऽर्थी जलार्थमभ्युपगतः, एवं भूतो यियासतो गच्छतः शोभनः स चानुगः । अथ यश्च चौर्य अभ्युद्यतः गन्तुं प्रवृत्तो ऽर्थात् परस्वाहरणे यो अभ्युद्यत इत्यर्थः, अथ च यो वाणिज्ये क्रयविक्रयार्थी यश्च विद्यार्थी एतेषां त्रयाणां विशेषतो- ऽतीव रिक्त कुम्भो ऽनुकूलः प्रशस्तः ।

उक्तञ्च–

रिक्तो ऽनुकूलोप्यनुलोमगो ऽपि
जलार्थमभ्युद्यतरिक्तकुम्भः ।
विद्यार्थिनां चौर्यसमुद्भवानां
वणिक्क्रिया ऽभ्युद्यमिनामतीव ॥

प्रशस्यते दर्शनकीर्तनाभ्यां ग्राम्यस्तथारण्यगतो वराहः ।
शस्तो ऽधिकं कर्दमलितगात्रो विशुष्कमङ्गावयवो ऽतिनिन्द्यः ॥

इति वराहः ।

विहाय वामां दिशमन्यदिक्षु शब्दायमाना त शुभाः शृगालः ।
गत्परवौ ग्रामपुरप्रवेशे शस्तावत्रामौ मृगधूर्तकानाम् ॥

इति शृगालः

पुरो ब्रजन्वक्ति मृगो ऽति दूरं विदेशयानं कुशलञ्च यातुः ।
प्रदक्षिणीकृत्य विवृत्य पश्यन्मृगी द्वितीयो ऽपि मृगोर्थसिद्ध्यै ॥

इति मृगः ।

१ आदाय रिक्तं कलशं जलार्थी यदि व्रजेत्को ऽपि सहाध्वगेन ।
पूर्णं समादाय निवर्तते ऽसौ यथा कृतार्थः पथिकस्तथैव ॥



अन्यच्च–

जलार्थी रिक्तकुम्भो यः पथिकेन सह ब्रजेत् ।
निवर्तते तथा पूर्णः कृतार्थः पथिक स्तथा ॥इति॥

आदाय रिक्तकलशं जलार्थी
यदा ब्रजेत्को ऽपि सहाध्वगेन ।
विद्यार्थिनां दस्युकृतां जनानां
वणिक् क्रिया जीविनृणां च शस्तः ॥इति॥

इति भट्टोत्पलविरचितायां यत्ये ऽश्वमेधीययात्राविवृतौ शकुनविवेका ऽध्याय पञ्चविंशः ॥२५॥

❀❀❀❀

# अथ शिवारुतं व्याख्यायते

## तत्रादावेव शुभलक्षणमाह

पृष्ठतः पूजितौ वार्ता शिवामांसास्थि वर्जिता ।
क्रूरशब्दातिदीप्तार्के क्रूरकर्मणि पूजिता ॥१॥

शिवा सृगाली मांसास्थि वर्जिता मांसेनामिषेण अथवा वर्जिता रहिता पृष्ठतो यातुः पश्चिम भागस्थाः पूजिता शुभा। यदि वृका अरण्यप्राणिनः, सृगाला जम्बुकाः, शार्दूलाः सिंहजातयः, बिडालाः मार्जाराः, गर्दभाः खरा एते सर्वे एव वामतो वामभागे ऽर्थकराः कार्यसाधका ज्ञेया। कुरङ्गा मृगजातयो दक्षिणेन यातुः क्रूरशब्दा अति भैरव राविणः अति दीप्तार्काभिमुखी दीप्तदिक्स्था च तथा विधा क्रूरकर्मणि परघातादौ पूजिता सफला ॥१॥

## अथास्या एव विशेषमाह–

१ पूर्वोदीच्योः शिवाशस्ता शान्ता सर्वत्र पूजिता ।
धूमिता ऽभिमुखी हन्ति स्वरदीप्ता दिगीश्वरान् ॥२॥

---

१ प्रत्यर्कमाशां चलितस्य पूर्वा शिवा रवं मुञ्चति दक्षिणेन ।
आदित्ययुक्ता यदि नो तदानीं भवेद्ध्रुवं तस्य महीपतित्वम् ॥
पुमान् यदा याम्यककुप्प्रवासी करोति शब्दं पुरतः शृगाली ।
आस्ते विवस्वानपि सम्मुखश्चेद्भवेत्तदानीमचिरेण मृत्युः ॥



शिवा पूर्वोदिच्योः पूर्वस्यामुदिच्यां च दिशि स्थिता शस्ताः शुभफलाः, स च शान्ता शान्तरवा सर्वत्र सर्वस्मिन् कर्मणि पूर्वोदिच्यो रवस्थिता पूजिता अथवा शान्तरवा सर्वत्र शान्तदिशिस्था च सर्वस्यां दिशि पूजिता। यां दिशं आदित्यो यास्यति सा धूमिता, धूमिता ऽभिमुखी शिवा स्वरदीप्ताः च क्रूररवा च दिगीश्वरान् हन्ति तस्यां दिशि योऽधिपतिस्तं विनाशयतीत्यर्थः ॥२॥

## अथ यदि कस्यां दिशि क ईश्वर इति तदर्थमाह–

राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।
गजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशम् ॥३॥

राजा नृपः पूर्वदिगीश्वरः, कुमारो राजपुत्र आग्नेयाम्, नेता सेनापतिः दक्षिणस्यां दूतो गमागमिको नैऋत्याम्, द्विजो ब्राह्मण उत्तरस्याम्, गजाध्यक्षो हस्तिशालेश ऐशान्याम्,

---

दिशं प्रतीचीं व्रजतः शृगाली नरस्य यस्याभिमुखा विरौति ।
शान्तस्थिता शान्तफलप्रदात्री दीप्ता तु दीप्तं फलमातनोति ।
यस्योत्तराशां चलितस्य पुंसः प्राच्यां शिवा मुञ्चति फेत्कृतानि ।
भानुः प्रतीच्यां विहितस्थितिश्चेदपेक्षितं सिद्ध्यति तत्क्षणेन ।
हाहारवं मुञ्चति हृष्टभावाद्धास्यं तु तस्यास्तदुदाहरन्ति ।
अग्रेसरी वा पथि वा यियासोः सा द्विप्रकारापि मनोरथाप्त्यै ॥
नृपस्य यात्रासमये पुरस्तात्प्रयाति चेद्वल्मं ति वेदयन्ती ।
कुर्याच्छिवा वैरिपराजयं च जयश्रियं चाभिमतं तदन्यत् ॥
कार्यान्तिरेष्वप्यनुगम्यमाना श्रेयः प्रदा शान्तदिशि प्रदिष्टा ।
शिवा प्रदीप्ते तु पुनः प्रदेशे समारटन्ती महते भयाय ॥
तरङ्गिणीरोधसि सौम्यरूपां स्त्रीनृपश्च वा मुञ्चति या निनादान् ।
शिवा शिवां तां नृपतित्वदात्रीं वन्देत देवीमभिवन्दनीयाम् ॥
यदा शृगाली कुरुते नराणां शब्दं च नद्युत्तरणे कदाचित् ।
तदद्वये तत्परिरक्षणीयं महद्भयं भावि जले चरेभ्यः ॥

एवं क्रमेण पूर्वाद्याश्चतुर्दिशं पूर्वस्यां क्षत्रीया, दक्षिणस्यां वैश्याः, पश्चिमायां शूद्राः, उत्तरस्यां ब्राह्मणा इति ॥३॥

## अथान्यदप्याह--

सर्वदिक्ष्वशुभा दीप्ता विशेषेणाह्नय शोभना ।
पुरसैन्यापसव्या च कष्टा सूर्योन्मुखी शिवा ॥४॥

दीप्ता शिवा सर्वासु दिक्षु अशुभा, अह्नि दिवसे विशेषेणातिशयेनाशुभा । पुरे नगरे सैन्ये सेनायां वामा ऽपसव्या दक्षिणभागस्थाः सूर्योन्मुखा नद्यभिमुखा कष्टा कष्टफला अशुभेत्यर्थः ॥४॥

## अथ रुतविशेषेण फलमाह--

याहीत्यग्निभयं शास्ति टेटेति मृति वेदिका ।
दिदि दुष्कृतमाचष्टे सज्वाला देशनाशिनि ॥५॥

याहीति रुते शिवा अग्निभयं शास्ति कथयति । टेटेति रुते मरणं वेदयति दिदिरुते दुष्कृतं कष्टं आचष्टे कथयति । ज्वाला संयुक्ता शिवा देशनाशिनी देशं नाशयति ॥५॥

## अत्रैव मतान्तरमाह--

दारुणा ऽरुणतामेके सज्वालायाः प्रचक्ष्यते ।
अर्काद्यनलवत्तस्या वक्रे लाला स्वभावतः ॥६॥

एके देवमुनयः सज्वालयाः शिवा दारुणता क्रूरत्वं न प्रचक्ष्यते न कथयति । कुतो हेतोस्तस्याः शिवायः वक्रं मुखं लाला स्वभावत अर्काद्यनलवत्, यथार्काधिको ज्योतिष्मान् पदार्थः स्वाभावादेव साग्निकस्तेजस्वी । एवमेतस्याः वक्रं स्वभावादेव साग्निकं इति हेतोस्तस्या न दारुणता ।



तथा च काश्यपः--

नैव दारुणता तस्याः सुज्वालायाः स्वभावतः ।
लालायाः साग्निकंवक्रमतः सा शुभदा शिवा ॥

केचिदाक्रान्ता लालवदिति पठन्ति, यथा ऽलातः साग्निकं काष्ठं आक्रान्तं भ्राम्यमाणं सर्वत्र साग्निकं दृश्यते तद्वत्तस्या वक्रं लाला स्वभावतः मुखपानीयस्वभावात्सा सज्वालेति ॥६॥

## अथान्यदप्याह--

अन्य प्रतिरुता याम्या सा बन्धुमृतशंसिनी ।
वारुण्यभिरुता सैव शंसते सलिले मृतिम् ॥७॥

याम्या दक्षिणभागस्था अन्य प्रतिरुता अन्यया ऽपरया शिवया एव कृतशब्दा सा शिवा बन्ध्वादिमृतिं शंसते कथयति । सैव शिवा वारुणी पश्चिमदिग्स्था अन्ययाभिरुता सलिले जलमध्ये मृतं बन्ध्वादिकं कथयति ॥७॥

## अथास्याः शब्दानां फलमाह--

अक्षोभ १ श्रवणं चेष्टं धनप्राप्तिः प्रियागमः ।
क्षोभः प्रधानभेदश्च वाहनानां च सम्पदः ॥८॥

---

१ ऐन्द्रचां निनादे प्रथमे ऽर्थलाभो भवेद्द्वितीये निधिदर्शनश्च ।
कन्या तृतीये लभते चतुर्थे बंध्वागमः पञ्चमके ऽर्थसिद्धिः ॥
षष्ठे रवे कुप्यति भूमिनाथो भीः सप्तमे स्या द्विफलो ऽष्टमस्तु ।
त्रासो ऽग्निभागे प्रथमे द्वितीये नराधिपः कुप्यति भीस्तृतीये ॥
घातं चतुर्थे नगरस्य कन्दे शिवारुते पञ्चनके च युद्धम् ।
वदन्ति तज्ज्ञाः कलहं च षष्ठे भीः सप्तमे स्या द्विफलो ऽष्टमस्तु ॥

प्रथमरावे अक्षोभः अनाकुलता, द्वितीये इष्टं श्रवणं, तृतीये धनप्राप्तिरर्थलाभः, चतुर्थे प्रियागमः, प्रियस्य बन्धोरागमः, पञ्चमे अक्षोभ आकुलता, षष्ठे प्रधानभेदः प्रधानानां राजपुरुषाणां परस्परं भेदः, सप्तमे वाहनानामश्वादीनां सम्पदो वृद्धयो भवन्ति ॥८॥

## अत्रैव विशेषमाह–

फलमासप्तमादेतद्ग्राह्यं परमतो द्रुतम् ।
याम्यानां तद्विपर्यस्तं फलं षट् पञ्चमावृते ॥९॥

यदेतत्प्रागुक्तं शिवारुते फलं, तत् आसप्तमात् रावत् यावत् सप्तमं रावं करोति तावदेव तत्फलं सप्तमात् रावत् परतो यदि रौति तदा तत् अग्राह्यं । याम्यायां दक्षिणायां तद्विपर्यस्तं पूर्वात् विपरीतं फलं ग्राह्यम, किन्तु षट् पञ्चमावृतेः पञ्चमं षष्ठं रावं वर्जयित्वा तेन प्रथमे द्वितीये तृतीये चतुर्थे सप्तमे रावे पूर्वोक्ताद्विपरीतं फलं, पञ्चमषष्ठयोः पूर्वोक्तमेव तेन प्रथमे रावे क्षोभः, द्वितीये ऽनिष्टश्रवणं, तृतीये धनहानिः, चतुर्थे प्रियविप्रयोगः, पञ्चमे तु क्षोभ एव षष्ठे प्रधानानां भेद एव, सप्तमे वाहनविनाशः ॥९॥

आद्ये शुभं स्यादशुभं द्वितीयो याम्ये महाव्याधिभयं तृतीये ।
स्वरे चतुर्थे स्वजनागमः स्या त्पुत्रो भवेत्पञ्चसु फेत्कृतेषु ॥
जायेत कन्या रटिते च षष्ठे भीः सप्तमे स्याद्विफलो ऽष्टमस्तु ।
ग्रामस्य घातो दिशिराक्षसानामाद्ये द्वितीये ऽपि च गोकुलस्य ॥
मृत्यु स्तृतीये द्विचतुष्पदानां हानिश्चतुर्थे ऽप्यथ पञ्चमे च ।
चौराद्भयं राजभयं च षष्ठे भीः सप्तमे स्याद्विफलो ऽष्टमस्तु ॥
शब्द शिवाया वरुणस्य भागे आद्ये भयं हानिरथ द्वितीये ।
स्याद्राजदूतागमनं तृतीये दाहश्चतुर्थे खलु चौरभीतिः ॥



## अथा ऽशुभां शिवामाह–

१ या रोमाञ्चं मनुष्याणां सकृन्मुत्रञ्च वाजिनाम् ।
रावांत्त्राशं जनयति सा शिवा न शिवप्रदा ॥१०॥

या शिवा रावात शब्दात् मनुष्याणां पुरुषाणां रोमाञ्चं रोमहर्षं जनयति उत्पादयति, या वाजिनां अश्वानां सकृत पुरीषं मुत्रं जनयति त्रासं भयञ्च लोकानां जनयति सा शिवा शिवं श्रेयो न ददाति ॥१०॥

## अथ शुभलक्षणमाह–

मौनं गता प्रतिरुते नरद्विरदवाजिभिः ।
या शिवा स शिवं सैन्ये पुरे वा शंप्रयच्छति ॥११॥

या शिवा नरैर्मनुष्यैः द्विरदै हस्तिभिर्वाजिभिः अश्वैः प्रति प्रविशति [मौनं तूष्णीं करोति सा पुरे नगरे सैन्ये सेनायां च शिवं श्रेयं प्रयच्छति ददातीति ॥११॥

वराहमिहिराचार्यकृते ऽस्मिन् मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यद्ये ऽश्वमेधीययात्राविवृतौ शिवारुता ऽध्यायः षड्विंशः ॥२६॥

स्यात्पञ्चमे राजभयञ्च षष्ठे भीः सप्तमे स्या द्विफलो ऽष्टमस्तु ।
वायव्यभागे भयमेकशब्दे भयातिरेको भवति द्वितीये ॥
वृष्टिस्तृतीये महती चतुर्थे मेघागमो वर्षति पञ्चमे च ।
क्रोधं विधत्ते नृपतिश्च षष्ठे भीः सप्तने स्याद्विफलो ऽष्टमस्तु ॥
दिश्युत्तरस्यां विहिते विरावे म्रियेत कश्चित्प्रथमे द्वितीये ।
महाभयं विप्रवधस्तृतीये क्षत्रं चतुर्थे खलु हन्यते च ॥
विट् पञ्चमे षष्ठरवे च शूद्रो भीः सप्तने स्याद्विफलो ऽष्टमस्तु ।
१ ज्वालां विमुञ्चत्यतिरौद्रनादा समाकुला धावति या समन्तात् ।
रोमाञ्चकम्पौ जनयत्यकस्मात्कुर्याच्छिवा सा युवराजपातम् ॥
रामोद्गमं या जनयत्यकस्मात्फेदूत्सतिक्रूररवा नराणाम् ।
मूत्रं पुरीषं च तुरङ्गमाणां सा सर्वदा स्यादशिवा शिवेह ॥

# अथ वायस विरुतं व्याख्यायते

## तत्रादावेव नीडवशेन शुभाशुभत्वमाह–

१ शस्तो नीडस्तु वैशाखे पादपे निरुपद्रवे ।
देशोत्थानं तु वल्मीकचैत्यधान्यगृहादिषु ॥१॥

काकानां वैशाखेमासि निरुपद्रवेऽनुपहते वृक्षे नीडः आलयः शस्तः शिवप्रदमित्यर्थः। बल्मीके वल्मीककृते मृत्कूटे, चैत्येप्रधानतरौ चैत्यवृक्षे यत् ग्रामे प्रधानतरुः तस्मिन्। धान्यगृहे यद्गृहधान्यनियतं स्थाप्यते तत्र नीडे कृते देशोत्थानं देशोपद्रवो भवति । आदिग्रहणाद् भवने प्राकारे वा यदि वायसानां नीडं दृश्यते तदा देशोत्थानं देशोपद्रवो भवति ॥१॥

---

१ वैशाखमासे निरुपद्रवेषु द्रुमेषु काकस्य शुभाय नीडम् ।
निन्द्येषु शुष्केषु सकण्टकेषु वृक्षेषु दुर्भिक्षभयाय हेतुः ॥
प्रशस्तवृक्षे यदि पूर्वशाखामाश्रित्य काकेन कृतंकुलायम् ।
तद्वृष्टिरिष्टाकुशलं प्रमोदो नीरोगतास्या द्विजयश्च राज्ञः ॥
आग्नेयशाखारचिते च नीड़े स्याद्वृष्टिरल्पाग्निभयं कलिश्च ।
दुर्भिक्षशत्रूद्भवदेशभङ्गा भवन्ति रोगाश्च चतुष्पदानाम् ॥
याम्यासु शाखासु च वायसेन नीड़े कृतेऽल्पं जलपातमाहुः ।
व्याधिप्रकोपं मरणं समन्तादन्नक्षयं राजविरोधतां च ॥
नैऋत्यशाखारचिते च नीड़े पश्चाद्घनो वर्षति वर्षकाले ।
पीडा नृणां विड्वरचौरभीति र्दुर्भिक्षयुद्धानि भवन्त्यवश्यम् ॥
नीडे कृते पश्चिमवृक्षशाखामाश्रित्य काकैः कथिताभिवृष्टिः ॥
निरोगता क्षेम सुभिक्षवृद्धिसंपत्प्रमोदाश्च भवन्ति लोके ॥
वायव्यशाखासु कृते च नीड़े प्रभूतवाताल्पजलाः पयोदाः ॥



## अथ शावकदर्शनेन शुभाशुभत्वमाह–

काकानां श्रावणे द्वित्रिचतुः शावाः शुभप्रदाः ।
चोरकश्वेतचित्राश्चवर्णाश्चौराग्नि मृत्युदाः ॥२॥

काकानां श्रावणेमासि द्वौ वा त्रयो वा चत्वारो वा शावाः पोताः शुभावहाः । चोरकं गन्धद्रव्यं तद्वर्णाः तस्करभयं ददाति, श्वेताः शुक्ला अग्निभयदाः, चित्रा नानावर्णा मृत्युदाः। काकः स्वभावात्कृष्णस्तस्य शावाः कथं तदितरवर्णा इति न भ्रमितव्यं शावाः पोताः अण्डा इत्यर्थः ॥२॥

## अन्यच्चेष्टितमाह–

१अण्डावकिरणे ध्वाङ्क्षा दुर्भिक्षमरकावुभौ ।
शावानां विकलत्वे वा निःशावत्वैकताऽथवा ॥३॥

ध्वाङ्क्षाः काकाः काक्यश्च अण्डानामेवावकिरणा अधोण्डाः परित्यज्यते, काको वा

---

स्युर्मूषकोपद्रवः सस्यनाश पशुक्षयोद्वेगमहाविरोधाः ॥
कुवेरशाखामधिकृत्य नीडे कृते भवेत्प्रावृषि वृष्टिरिष्टा ।
भवन्ति च क्षेमसुभिक्षसौख्यं निरोगता वृष्टि समृद्धयोऽस्मिन् ॥
ईशानशाखासु च वृष्टिरल्पा चिरं प्रजानामुपसर्गदोषः ।
स्याद्बान्धवानां कलहप्रवृत्तिमर्यादया हीयत एष लोकः ॥
वृक्षाग्रनीडे त्वतिवर्षकालो मध्ये तरोर्मध्यमतोयपातः ।
तुच्छापि वृष्टिर्नभवत्यधस्तात्स्फुटं यथोक्तं न दिशोऽस्फुटत्वात् ॥
अवृष्टिरोगारिभयादिवृद्धिं बिन्द्याच्च भूमौ वलिभुक्कुलाये ।
शुष्के च वृक्षे डमरान्ननाशौ प्राकाररन्ध्रेऽरि भयंप्रभूतम् ॥
निम्नप्रदेशे तरुकोटरे वा वल्मीकरन्ध्रे अवनिष्वपीड़ ।
काकस्य नीड़े रुगवृष्टिदोषैर्भवन्ति शून्या नियमेन देशाः ॥
१ एक भवेद्वारुणमग्निसंज्ञं द्वितीयकं मारुतजं तृतीयम् ।
ऐन्द्रं तथा नाम चतुर्थमेवमण्डानि काक्याः परिकीर्तितानि ॥
काक्या भवेद्वारुणमण्डकं चेत् पृथ्वी तदा नन्दति सर्वसस्यैः ।

काकी वा तावुभौ वा अण्डं त्यजति तौ दुर्भिक्षमरकौ भवतः काकेनाण्डत्यागे दुर्भिक्षः, काक्या अण्डत्यागे मरक इत्यर्थः। तथा शावानां पोतानां विकलत्वे हीनाङ्गत्वे दुर्भिक्षमरकौ । अथवा शावकानामभाव एकताऽथवा एक एव भवति. तथाऽपिदुर्भिक्ष मरकौ भवतः।

उक्तञ्च –

वैशाखे निरुपहिते नीडः सुभिक्ष शुभदाता।
निर्मितकण्टकशुष्के दुर्भिक्ष भयानि तद्देशे॥
शरदर्भगुल्मबल्ली धान्यप्रासादगेह निम्नेषु।
शून्यो भवति स देशः चौरानांवृष्टि रोगान्तः॥
द्वित्रिचतुः शावत्वं सुभिक्षदं पञ्चभिरधान्यत्वम्।
अण्डावकिरणमेकाण्डता प्रसूतिश्च न शिवाय॥
चौरकवर्णैश्चौराश्चित्रैर्मृत्युः सितैश्च वन्हिभयम्।
विकले दुर्भिक्षभयं काकानां निर्दिशेच्छिशुभिः॥३॥

## अथान्यत्कालचेष्टितमाह–

हरेदुपनयेद्वापि यद्द्रव्यं वायसोऽग्रतः।
तन्नाशलब्धी विज्ञेये हेमपीते विनिर्दिशेत्॥४॥

वायसः काकः, अग्रतः परतो यद्द्रव्यं हरेदपहरति यद्वा उपनयति ढौकयति तस्य द्रव्यस्य नाशलब्धी। यद्द्रव्यं हरेत्तस्य नाशो यदुपनयेत्तस्य प्राप्तिर्ज्ञेया। अत्रैव विशेषमाह – हेमपीत इति, पीते पीतद्रव्येऽपहृते स्वर्णं नश्यति उपनीते तत्प्राप्तिरिति, इदमुपलक्षणम्। सिते रूप्यं कार्पासिके कार्पासं वस्त्रमित्यादीन्युह्यानि।

उक्तं च—

यद्द्रव्यमुपनये त्तस्य लब्धिरपहरति चेत्प्रणाशः स्यात्।
पीतद्रव्ये कनकद्रव्यं कार्पासिके सिते तु रूप्यमिति॥४॥

---

मन्दः प्रवर्षोऽनलसंज्ञकेऽण्डे नोतस्य बीजस्य भवेत्प्ररोहः।
जातानि सस्यानि समीरजेऽण्डे खादन्ति कीटाः शलभाः शुकाद्याः।
क्षेमं सुभिक्षं सुखिता धरित्री स्यादिन्द्रजेऽण्डेऽभिमता च सिद्धिः॥



## अथान्यदप्याह–

रक्तद्रव्यं प्रदग्धं वा न्यसेद्गेहेऽग्निदः स्मृतः।
तृणभस्मास्थिकेशाश्च शयने स्वामिमृत्युदः॥५॥

गेहे वेश्मनि रक्तद्रव्यं रक्तवर्णवस्तुरूपं प्रदग्धं वा यदि वायसो विन्यसेत्प्रक्षिपेद्वा स च अग्निदाहं करोति, तृणास्थिभस्मकेशानेतान्, शयने शय्यायां यस्य विन्यसेत्तच्छय्यायाः यः स्वामी तस्य मृत्युं ददाति॥५॥

## अथान्यदप्याह–

पुरसैन्योपरिव्योम्नि व्याकुलैरनिलाद्भयम्।
सव्यमण्डलगेस्वोत्थमपसव्ये परोद्भवम्॥६॥

पुरस्य नगरस्य सैन्यस्य सेनायाः, उपरि व्याकुलैः सोद्यमैः भ्रमद्भिः, अनिलात् वातात् भयं भवति।

उक्तञ्च—

अव्याकुलं भ्रमद्भिर्वातोद्भूतं भयं भवति।

तैरेव काकैः मध्येन दक्षिणेन मण्डलेन परावर्तगतैर्भ्रमद्भिः स्वोत्थं स्वकीयजनोत्पन्नं स्वयमेव वा भयं भवति। पूर्वा दक्षिणपश्चिमोत्तरा चेति सव्यमण्डलं अपसव्यं तद्विपरीतं, अपसव्यैर्वाममण्डलैः परोद्भवं शत्रुकृतं भयं भवति॥६॥

## अथान्यदप्याह–

अर्काय संहतैर्भेदो रोधश्चक्राकृतिस्थितैः।
वर्गशश्चाभिघातः स्याद्रिपुवृद्धिश्च निर्भयैः॥७॥

वायसैरर्काय संहतैः अनिमित्तं मांसादि भक्षद्रव्यादिकं वर्जयित्वा, संहतैः पुरस्य भेदो भवति। चक्राकृतिस्थितैश्चक्राकारं परिवर्त्तुलं मण्डलं कृत्वा स्थितैः पुरस्य रोधः। वर्गशोऽने-

बृन्दस्थितैः, अभिघातः स्यापद्रवो भवेत् । निर्भयैर्भयरहितैर्वायसैः, रिपुवृद्धिः शत्रुवृद्धिः ॥७॥

## अथान्यदप्याह–

उपानच्छत्रयानाङ्गशस्त्रछाया च कुट्टने ।
मृत्युं तत्स्वामिनो ब्रूयात्पूजा स्यात्तत्प्रपूजने ॥८॥

उपानत् पदत्राणं छत्रं आतपं यानाङ्गं अश्वादीनां संयमनादिकं खलीन पल्याण परिकरादिकं, शस्त्रं आयुधं छाया प्रतिबिम्बं एतेषां कुट्टने तत्स्वामिनः छत्रादीनां यः स्वामी तस्य मृत्युं मरणं ब्रूयात्, तत्पूजने तेषां पूजया कुसुमादि मङ्गलद्रव्यक्षेपणेन, तत्स्वामिनः पूजामानं भवेत ॥८॥

## अथान्यदप्याह–

काष्ठरज्ज्वस्थिनिसारकेशकण्टकविभ्रद्रुवन् ।
व्यालाऽहिव्याधिशस्त्राग्नि तस्करेभ्यो भयङ्करः ॥९॥

काष्ठः प्रसिद्धः रज्जुः गुणः अस्थिः प्राण्यङ्गं निः सारान्तः सुखिरः । केशाः कचाः कण्टकं प्रसिद्धः एतान् विभ्रत् धारयन् एतान् गृहीत्वा यदि रौति तदा यथाक्रम व्यालादिभ्यो भयं भवति । काष्ठं गृहीत्वा यदि रौति तदाव्यालभयं सर्पाद्भयं रज्जुभिरपि सर्पभयं अस्थिभृत् तदा व्याधिभयं निः सारभृत् यदि रौति तदा शस्त्रभयं केशभृत् अग्निभयं कण्टकभृत् तस्करभयं करोति ॥९॥

## अथान्यदप्याह–

युद्धं सेनाङ्गसंस्थेषु मोघकृत्स्वावलेखने ।
चरन्निशि विनाशाय दुर्भिक्षं धान्यमोषकृत् ॥१०॥

सेनाङ्गं अश्वादीनां संयमनादि सेनाङ्गसंस्थेषु वायसेषु युद्धो भवति । स्वावलेखने आत्मीय



देहं चञ्च्वाऽवलिखति तदा मोघकृत मोघं करोति, निशि रात्रौ विचरन् वायसो विनाशाय भवति । धान्यादि यदि मुष्णाति अपहरति तदा दुर्भिक्षं करोति ॥१०॥

## अन्यदप्याह–

१वामपार्श्वस्थितः श्रेष्ठो दक्षिणाद्वापि वामगः ।
ध्वाङ्क्षः पार्श्वद्वयेनापि शस्तो यात्राऽनुलोमगः ॥११॥

ध्वाङ्क्षः काकः, वामपार्श्वस्थितो यातुर्वामभागस्थः श्रेष्ठः शुभः । दक्षिणान्मध्यभागाद्वामगो वामभागं गच्छति तथापि श्रेष्ठः । पार्श्वद्वयेनापि दक्षिणे वामेतरपार्श्वे यदि यात्राऽनुलोमगो भवति । यस्यां दिशियाता गच्छति तत्रैव यदि पार्श्वद्वयेन ध्वाङ्क्षद्वयं भवति तथापि शुभदः ॥११॥

## अथान्यदप्याह–

यातुः कर्णसमं ध्वाङ्क्ष क्षेमनार्थप्रसादकः ।
वामाद्दक्षिणगो नष्टः क्रोशमानः प्रतीपगः ॥१२॥

---

१ वामेन शब्दं मधुरं विमुञ्चन्व्रजंश्च वामेन करोति काकः ।
सर्वार्थसिद्धिं पुनरागमञ्च शुभप्रवेशे तु तदन्यरूपः ॥
प्रदक्षिणं यः प्रविधाय मार्गे वामेन काको विनिवर्ततेऽसौ ।
यातुः करोति हितकार्यसिद्धिं क्षेमञ्च शीघ्रं पुनरागमञ्च ॥
पृष्ठे विरावं मधुरं विमुञ्चन्ननुव्रजं श्चाभिमतो हिताय ।
प्रायेण यातारमनुव्रजन्तः सर्वेऽपि काकैः सदृशा विहङ्गाः ॥
कृतारवो यः पुरतः प्रयाति पुरः स्थितो यो मुदमादधाति ।
कण्डूयते यश्च शिरोऽङ्घ्रिणासौ पुंसां सदाभीष्टफलं ददाति ॥
स्तम्भे गजानां नियतं गजाप्तिं गजाधिरूढः पृथिवीपतित्वम् ।
तुरङ्गमे वाहनभूमिलाभं करोति काको विजयं ध्वजे च ॥
नारीशिरः पूर्णघटस्थितस्य काकस्य शब्दैर्वनिताधनाप्तिः ।
शय्याधिरूढस्य तु तस्य शब्दैः समागमः स्यात्स्वजनेन सार्धम् ॥
धान्यं पयो वा दधि वाथ वाप्य त्रिगैति पश्यन्निधिलाभकारी ।
करोति लाभं पुरतः स दृष्टो यस्यास्ति वक्रे तृणमप्यशुष्कम् ॥

ध्वाङ्क्षः काको य तुर्गच्छतः कर्णसमं श्रोत्रसमीपे यदि याति तदा क्षेममावहति, लब्धपालनं क्षेम, नार्थप्रसादकः अर्थं न प्रसादयति कार्यसिद्धिर्न करोति। वामात् वामपार्श्वाद्दक्षिणगो दक्षिणं भागगतो नेष्टः न शुभः, तथा प्रतीपगः पुरस्तात् यातुरागत क्रोशमानो न शुभदः ॥१२॥

## अथान्यदप्याह—

विरुवश्चाग्रतः पक्षौ धुन्वन्ध्वाङ्क्षो भयप्रदः।
प्रत्युरप्युपसर्पश्च संस्पृशञ्च तदा भवेत् ॥१३॥

ध्वाङ्क्षः काकः, अग्रतः पुरतो विरुवन् क्रोशन् पक्षौ विधुन्वन् संस्पृशन् उरो वक्षस्तत्प्रति समीपे उपसर्पन् गच्छन् संस्पृशञ्च स्पर्शं करोति तथा तेन प्रकारेण भयप्रदो भवेत ॥१३॥

## अथान्यदप्याह—

१ एकपादश्चलत्पक्षः काको ऽवस्कन्दचोदकः।
वधबन्धकरः क्रोशखरसूकरपृष्ठगः ॥१४॥

काको वायसः, एकपाद एकेनैव पदेन स्थितः चलत्पक्षस्तथा भूतः अवस्कन्दचोदकः अवस्कन्दं कूटेन छलेनः शत्रोरागमनं तच्चोदयति कथयति, प्रसुप्ते जने दस्युभयं प्रेरयतीत्यर्थः। खरस्य गर्दभस्य सूकरस्य वराहस्य ग्रामसूकरस्य वा पृष्ठयातः, उपरिस्थः क्रोशन् वधबन्धकरः वधस्ताडनं बन्धनं च करोति ॥१४॥

---

१ ब्रह्मप्रदेशे विरुवन् यियासोः कलत्रदोषं जनयत्यवश्यम्।
मनुष्यमातङ्गतुरङ्गमाणां शिरो ऽधिरूढो निधनाय तेषाम्॥
तुण्डेन पुच्छं विलिखन्स्वरेण तीव्रेण यो रौति निरीक्षते ऽर्कम्।
एकेन पादेन तथोपविष्टो ब्रजेत् सबन्धं पुरतो जनस्य॥



## अथान्यदप्याह—

पङ्कदिग्धशरीरस्य वराहस्योपरिस्थितः।
वायस शस्यते यातु स्तूष्णीभूतो रुवन्नपि ॥१५॥

वराहस्य सूकरस्य पङ्कदिग्धशरीरस्य पङ्केन कर्दमेन दिग्धं उपलिप्तं शरीरं यस्य तथा भूतस्य सूकरस्य पृष्ठे स्थितः वायसः काकः यातुर्गच्छतः शस्यते स्तूयते शुभः, इत्यर्थः। तूष्णीभूतो मौनमास्थितो ऽथवा रुवन् क्रोशन् वा शस्यते शुभ इति ॥१५॥

## अथान्यदप्याह—

क्षीरवृक्षाजमहिषीगौः स्थितो गोरसप्रदः।
अन्नदः पर्णविच्छेदी पानदो जलकुट्टनात् ॥१६॥

क्षीरवृक्षो वटादि अज छागः महिषी गौश्च प्रसिद्धे, एतेषु स्थितो गोरसप्रदो दध्यादिकं ददाति। पर्णविच्छेदी वृक्षाणां पर्णानि विच्छिनत्ति तदा ऽन्नं ददाति। जलकुट्टनात् उदके यदि कुट्टयति तदा पानदः पानं ददाति ॥१६॥

इति भट्टोत्पलविरचितायां यच्ये ऽश्वमेधीययात्राविवृतौ वायसेङ्गितं नामाऽध्यायः सप्तविंशः ॥२७॥

****

## अथ श्वेङ्गितं व्याख्यायते

### तत्रादावेव शुभलक्षणान्याह–

१ नृहयातपवारणेभशस्त्र–
ध्वजदेहानवमूत्रयन् जयाय ।
समयो विचरन् विना निमित्तं
न शुभश्चाभिमुखो भषन् लिखन् गाम् ॥१॥

नरो मनुष्यः हयोऽश्वः, आतपवारणं छत्रं इभो हस्ती शस्त्रं आयुधं ध्वजश्चिन्हं एषामेकतमस्य देहः शरीरं, अवमूत्रयन् यदि श्वा एतेषु मूत्रं करोति जयाय भवति। निमित्तं कारणं विना सभयो भयसहितो विचरन् गच्छन् न शुभः यातुरभिमुखः संमुखो भषन् न शुभः। गां भूमिं लिखन् नखैर्भूमिं लिखन् न शुभः ॥१॥

---

१ आयाति हृष्टोऽभिमुखो यदि श्वा क्रीडां प्रकुर्वन्विलुठत्यथाग्रे ।
शीघ्रं तदानीं ध्रुवमध्वगानां भवेत् प्रभूतो धनधान्यलाभः ॥
उच्चप्रदेशादवतीर्य नीचं यो याति वामोप्यसुखाप्रदोऽसौ ।
अनुच्चदेशात्पुनरुच्चदेशं यतो व्रजन्दक्षिणगोऽपि शस्तः ॥
गजाश्वशय्यासनशाद्बलेषु छत्रध्वजोलूखलसद्रुमेषु ।
कुम्भेष्टिकासञ्चयचामरेषु पर्याणभृत्पुष्पफलादिषु श्वा ॥
व्रजेत्पुरस्ताद्यदि मूत्रयित्वा सदैव तत्सिद्ध्यति कार्यमिष्टम् ।
मिष्टान्नभोज्यं नवगोमये स्यान्मूत्रेण शुष्केऽपि च शुष्कभोज्यम् ॥
वामोऽपि भूत्वा भषणो विलोलन् भङ्गं रणे यच्छति चार्थनाशम् ।
क्रुद्धो विधावन् पुरतोऽभिधत्ते रक्तप्रपातं वधबन्धनं च ॥



### अथान्यदप्याह–

१ उच्चैर्भषणं समागतानां
यदि वा चाभिरुतं रविं निरीक्ष्य ।
संछर्दनजृंभणे च नेष्टे
प्रस्थाने च तथा विधूननञ्च ॥२॥

प्रस्थाने यात्राकाले तु बहूनां शूनां समागमः, तेषां समागतानां एकस्थानां उच्चैः कृत्वा भषणं न शुभम्। अथवा रविं आदित्यं निरीक्ष्य अवलोक्य दीनं अविरुतं, अपि न शुभम्। तथा संछर्दनं भुक्तस्योद्गीरणं जृंभणं मुखोद्घाटनं, एते नेष्टे न शुभे तथा विधूननं शरीरचालनं न शोभनमिति ॥२॥

### अथ शुभनिमित्तान्याह–

२ पूर्णास्यत्वं घ्रायकत्वञ्च यातुः
प्रादक्षिण्यं मैथुनं चानुलोम्यम् ।

---

१ वामादिशं दक्षिणभूमिभागाद् गच्छत्प्रयाणे भषणः प्रशस्तः
वामप्रदेशात्स पुनः प्रवेशे प्रशस्यते दक्षिणभागगामी ॥
विण्मांसभक्ष्यादिकपूर्णवक्त्रो भयार्दितः श्वा यदि कम्पमानः ।
पराङ्मुखो याति तदाध्वगानां नश्यन्ति सिद्धान्यपि वाञ्छितानि ॥
२ आदाय पत्रं हरितं यदि श्वा दूर्वां नवां वा नवगोमयं वा ।
प्रयाति यातुः पुरतस्तदानीं राजप्रसादं नियतं ब्रवीति ॥
यातारमाजिघ्रति संप्रयाति तदानुलोम्येन च सारमेयः ।
मूर्ध्नोऽथवा यो विनिहन्ति कण्डूं केनापि पातेन ससिद्धिहेतुः ॥
क्रीडां गृहश्वा यदि गेहशून्यां करोति तद्बन्धुसमागमः स्यात् ।
शूनां गणः क्रीडति यो मिलित्वा किञ्चिन्भषन्सोऽभिमतोऽति शिष्टः ।'

यात्राकाले सारमेयस्य शस्तं

पद्भ्यां मूर्ध्नो स्वाङ्गकण्डूयनश्च ॥३॥

सारमेयस्य शूनः पूर्णास्यत्वं मांसादिना परिपूरितमुखत्वं यातुर्गच्छतः, आघ्रायकत्वं जिघ्रणं तथा तस्यैव प्रादक्षिण्यं उत्तरमार्गादागत्य अग्रतो यद्वा दक्षिणेन यदि याति, मैथुनं चानुलोम्यं यातुरानुकुल्येन मैथुनं करोति । यस्यां दिशि याता गच्छति तन्मुखमित्यर्थः । तथा स्वस्य मूर्ध्नः आत्मीयं शरीरं पद्भ्यां स्वचरणाभ्यां कण्डूयनं यात्राकाले शस्तमिति ॥३॥

वराहमिहिराचार्यकृते ऽस्मिन् मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यत्त्ये ऽश्वमेधीययात्राविवृतौ श्वेङ्गितं नामा ऽध्यायो ऽष्टाविंशः ॥२८॥



## अधुना मङ्गला ऽमङ्गलानि व्याख्यायते

### तत्रादावेव मार्गलक्षणान्याह–

पटुपटहमृदङ्गशङ्खभेरी–
पणवरवं सपताकतोरणाग्रम् ।
प्रचुरकुसुमतोयशान्त रेणुं
सुरभिसुवेषजनं व्रजेच्च मार्गम् ॥१॥

एवं विधं मार्गं प्रस्थानं व्रजेत् गच्छेत् । कीदृशं पटवश्चतुरा शब्दा येषां तादृशाः पटहाः आनहाः ढक्का मृदङ्गा मर्दलाः शङ्खाः दक्षिणावर्ता भेर्यो दुन्दुभ्यः पणवः, तन्त्री पटहरवा वादित्राणां रवा शब्दास्तै युतं यत्र मार्गे सपताकं पताकया सहितं तोरणाग्रं तोरणस्य बहिर्द्वारस्याग्रं शिखरं यत्र तथाभूतैः प्रचुरैः प्रभूतैः कुसुमैः पुष्पै स्तोयेन जलेन च शान्तं उपशमितं रेणु रजो यत्र तथा सुरभि सुवेषजनं सुगन्धैः सुवेषैः -शोभनवेशैर्यथोचितोष्णिक् छदादिसंयुक्तैः स्वजनैः स्वकीयहितकारीजनैर्युक्तं तथा भूतं मार्गं व्रजेदिति मार्गलक्षणम् ॥१॥

### अधुना मङ्गलान्याह--

१ सिद्धार्थका ऽऽदर्श पयो ऽञ्जनानि
वद्धै कपश्चामिषपूर्णकुम्भाः ।

---

१ कीर्तनाच्छ्रवणतो विलोकनात्स्पर्शनात्समधिकं यथोत्तरम् ।
मङ्गलाय दधिचन्दनादिकं स्यात्प्रवासभवनप्रवेशयोः ॥

उष्णीषभृङ्गारनृवर्द्धमान-
पुंयानवीणातपवारणानि ॥२॥

दधिमधुघृतरोचनाः कुमार्यो
ध्वजकनकाम्बुज भद्रपीठशङ्खाः ।
सितवृषकुसुमाम्बराणि मीनाः
द्विजगणिकाप्तजनाः सुचारुवेषाः ॥३॥

ज्वलितशिखिफलाक्षतेक्षुभक्ष्या
द्विरदमृदंकुशचामरायुधानि ।
मरकतकुरविन्दपद्मराग-
स्फटिकमणिप्रमुखाश्च रत्नभेदाः ॥४॥

स्वयमथ रचिताऽ यत्नतो वा
यदि कथितानि भवन्ति मङ्गलानि ।
सजयति सकलां ततो धरित्रीं
ग्रहणमृगालभनश्रुतैरुपास्य ॥५॥

---

दध्याज्यदूर्वाक्षतपूर्णकुम्भाः सिद्धान्नसिद्धार्थकचन्दनानि ।
आदर्शशङ्खामिषमीनमृत्स्नागोरोचनागोमयगोधूमानि ॥
गीर्वाणवीणाफलभद्रपीठपुष्पाञ्जलनालङ्करणायुधानि ।
ताम्बूलयानासनवर्धमानध्वजातपत्रव्यजनाम्बराणि ॥
रत्नानि चामीकरताम्ररूप्यं वद्धैकपादोषधयः सुरा च ।
वनस्पतिर्नूतनशाकमेवं माङ्गल्यपञ्चाशदियं प्रसिद्धा ॥
पृथ्वीपतिर्ब्राह्मणहर्षयुक्तो वेश्या कुमारी सुहृदः सुवेषाः ।
नार्यो नराश्चा श्ववृषाधिरूढाः शुभाय दृष्टाः सकलोद्यमेषु ॥



सिद्धार्थाः गौरसर्षपाः, आदर्शो दर्पणं पयः क्षीरं, अञ्जनं नेत्राञ्जनं सौवीरादि, रज्वादिनावद्ध एक पशुः छागादिकःआमिषं सद्योमांसं 'वद्धस्त्वेकपशुस्त्वज इति वचनात्' पूर्णकुम्भः उदरपूर्णघटः, उष्णीषः शिरः पट्टः, भृङ्गारं स्वर्णादिधातुनिर्मितः सस्तनकुम्भः झारीतिलोके, नृवर्द्धमानः नरः पुरुषो वर्धमानः समृद्धया पुत्रैर्यशसा युक्तो वा प्राक्वयस्कः, पुंयानं शिविकादि वीणा वल्लकी, आतपवारणं छत्र । दधि क्षीरविकारः क्षीरविवर्त्तः मधुमाक्षिकं घृतं आज्यं रोचना गोरोचना गोपित्तं, कुमारी कन्यका ध्वजं चिन्हं पताकादि झण्डेति, लोके कनकं स्वर्णं, अम्बुजं कमलोत्पलकल्हार कुमुदानिभद्रपीठं भद्रासनं शङ्खः प्रसिद्धः सितवृषः श्वेतवृषभ निःपुष्पाणि अम्बरं वस्त्रं श्वेतमेव मीनाः मत्स्याः जलादुद्धृताः । द्विजो ब्राह्मणः कृतनित्यक्रियो गणिका जात्यागणिका न च भ्रष्टाः, आप्तजनः स्वहितकृन्मनुष्यः. चारुवेषाः शोभनवेषधारिणाऽन्येऽपि ॥ ज्वलितशिखी प्रज्वलित, वन्हिः फलानि जातीफलप्रभृतीनि. तत्कालपक्वानि, आम्रबीजपूरनारङ्गादीनि, अक्षताः यवा अखण्डिततण्डुला वा इक्षुः अकर्तितपत्राः भक्षाः भक्षप्रकारा, अपूप-उडेरक-लड्डुकाः द्विरदो हस्ती, स च द्विरदपदोपादानात् मत्कुणेतरः । मृत् भूमेरुद्धृता मृत्तिका, अङ्कुशः करिदर्पोपशान्तकृत शस्त्रविशेषः, चामरं चमरीमृग बालव्यजनं, आयुध खड्गादि । मरकतो हरिन्मणिः कुरुबिन्दः पाषाणभेदः स च इषद्धरितः पद्मरागो मणि पुष्परागः, स्फटिक, प्रसिद्धः ये चान्ये रत्नभेदाः रत्नजातयः सूर्यकान्त-चन्द्रकान्ता प्रभृतयः । स्वयमप्येति, एतानि कथिता मङ्गलानि उक्तानि शुभानि चिन्हानि स्वयमथवा रचितानि, अथ शब्द एवार्थे आत्मनैव कृतानि कथितमङ्गलानि पुरतोऽग्रतो भवन्ति । अयत्नतो नाकस्मादेव भवति स राजा सकलां समग्रां भूमिं जयति, किं कृत्वा तानि च कानिचिन्मङ्गलानि ग्रहणेनोपासनीयानि कानिचिदालभनेन कानिचित् श्रुतैः श्रवणैः सेवितव्यानि । यथा सिद्धार्थं कानिचिद्दृष्टा, यथा गणिका कानिचिदालभनेन, स्पर्शनेन यथा दधिश्रीफलादीनि, कानिचित् श्रुतैः यथा गीतवेदशब्दा एतानि मङ्गलानि उपसेवितानि ॥२-५॥

---

श्वेताम्बरा श्वेतविलेपनाढ्या माल्यं सितं मूर्द्धनि धारयन्ती ।
दृष्टा प्रकृष्टा यदि गौरवर्णा नारी नरैः स्यात्तदभीष्टसिद्धिः ॥
धृतातपत्रः शुचिशुक्लवासाः पुष्पार्चिताश्चन्दनचर्चिताङ्गः ।
निश्रावयुक्तः कृतभाजनो वा विप्रः पठन् यच्छति सर्वसिद्धिः ॥

### अथाशुभनिमित्तान्याह–

१ कार्पासौषधकृष्णधान्यलवणक्लीवास्थितैलंवसाः
पङ्काङ्गारगुडाहिचर्मशकृतः केशा ऽऽ यसव्याधितः ।
बन्धोन्मत्तजडेन्धनतृणतुषक्षुत्क्षामतक्रारयो
मुण्डोऽभ्यङ्गविमुक्तकेशपतिताकाशायिनश्चाशुभाः ।६।

कार्पासः प्रसिद्धः, औषधं यद्‌द्रव्यं मात्रार्थं सम्पादितस्तदौषधं नत्वौषधी, कृष्णधान्यं कृष्णव्रीहयः लवणं कृष्णलवणं सैन्धवेतरावेति, क्लीवो नपुंसकः, अस्थ प्रसिद्धं तैलं च प्रसिद्धं वसा मेदः पङ्कं कर्दमः, अङ्गारो दग्धकाष्ठशेषः, गुड इक्षुविकारः शर्करेतरः, अहि सर्पः, चर्म प्रसिद्धः शकृत् पुरीष स च गोमयेतरः, केशा कचा, आयसं अयोविकारः कुठारलोहमुद्‌गरादि व्याधितो व्याध्यभिभूतः, बन्धः कृतबन्धनः, उन्मत्तो धातु वैषम्याद्विचित्तः । जड श्रोत्रेन्द्रियशून्यः, इन्धनं काष्ठं तृणानि प्रसिद्धानि तुषः प्रसिद्धः क्षुत्क्ष्यामः क्षुधितः, तक्रं मथितोद्धृतसारंदधि, अरिः शत्रुः, मुण्डो मुण्डितमस्तकः, अभ्यङ्गः कृताभ्यङ्गः विमुक्तकेशः विकीर्णपतितकेशः पतितः भ्रष्टः संवलनात् भूमौ पतितो वा काषायी गैरिकराञ्जितवस्त्रः, एते सर्वे एव गमने पुरतो न शुभाः। अर्थादन्ये मध्यमा ॥६॥

वराहमिहिराचार्यकृते ऽ स्मिन्मतसागरे ।
अर्थिनामुत्पल श्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यन्ये ऽ श्वमेधीययात्राविवृतौ मङ्गला ऽ मङ्गला–ऽ ध्याय एकोनत्रिंशः ॥२९॥

---

१ अङ्गारभस्मेन्धनरज्जुपङ्क पिण्याककार्पासतुषास्थिकेशाः ।
कृष्णायसा वल्कलकृष्णधान्यपाषाणविष्ठा भुजगौषधानि ॥
तैलं गुडश्चर्मवसाविभिन्नं रिक्तं च भाण्डं लवणं तृणञ्च ।
तक्रार्गलाशृङ्खलवृष्टिवाताः कार्ये क्वचित्रिंशदियं न शस्ता ॥

# अथाधुना शकुनोपदेशा ऽ ध्यायो व्याख्यायते

### तत्रादावेव निमित्तान्याह–

ध्वजातपत्रायुधसन्निपातः
क्षितौ प्रयाणे यदि मानवानाम् ।
उत्तिष्ठतो वाम्बरमेति सङ्गं
पतेच्च वा तन्नृपतेर्भयाय ॥१॥

प्रयाणे यात्राकाले मानवानां मनुष्याणां ध्वजश्चिन्हं, आतपत्रं छत्रं, आयुधं खड्गादि एषां क्षितौ सन्निपातः पतनं नृपते राज्ञो भयाय भवति, अथवा यातुरुत्तिष्ठतः, अम्बरं वस्त्रं कुत्रचित्समासक्तिमेति संलग्नं गच्छति न त्यजति, यद्वा वस्त्रं उत्तरीयादिकं स्कन्धादौ धृतं पतेत् पतति तदा ऽ पि नृपतेर्भयाय भवति ॥१॥

### अथान्यदप्याह–

दद्रुप्रतिष्यायविचर्चिकाः स्युः
कर्णाक्षिरोगं पिटकोद्भवो वा ।
प्रायो बलेनेतरवान्नृपो वा
जानीत राज्ञा भयकारणं तत् ॥२॥

दद्रु त्वक् विकारः, तन्द्राति क्वचित्पाठः तत्पाठे आलस्यम् ।

तल्लक्षणञ्च-

हृदये व्याकुलीभावो वाक्चेष्टेन्द्रियगौरवम् ।
मनो बुद्ध्योरप्रासादस्तन्द्राया लक्षणं विदुः ॥इति

विचर्चिका त्वक्विकारो पादयोः, एताः स्युर्भवेयुः कर्णयोः श्रोत्रयोः अक्ष्णो नेत्रयोर्वा तत्कालरोगः पीडा अथवा पिटकोद्भवः पीटकस्योत्पत्तिः । प्रायो बाहुल्येन बले सेनानां नृपाङ्गे वा राजनि भवति तदा तद्राज्ञो नृपस्य भयकारणं भयनिमित्तं जानीत विन्द्यात् ॥२॥

## अथान्यदप्याह–

उत्तानशय्यासनवातसर्गा
निष्ठ्यूतदुर्दर्शनकामितश्च ।
नेष्टानि शब्दाश्च तथैव यातु–
१ रागच्छ तिष्ठ प्रविश स्थिराद्याः ॥३॥

उत्ताना ऊर्ध्वमुखी शय्या उत्तानमासनं, शयनपर्यङ्क मध्यासनपर्यङ्क पीठादि, वातसर्गः सम्मुखवाताधिक्यं निष्टयूतं मुखशब्दः दुर्दर्शनं दुष्टसत्वस्य वृश्चिकादिदर्शनं कामितं कामः, एतानि सर्वाणि नेष्टानि न शुभानि, यातुः गच्छतः. तेनैव प्रकारेण भाषितानि, आगच्छ एहि तिष्ठ, अत्रैव स्थियतामिति, एते शब्दाः स्थैर्यवाचकाः ते सर्वे नेष्टाः, आदिग्रहणादन्ये विरोधवाचकाः । ते ऽपि अनिष्टाः । गच्छ गच्छेति शकुनः स्थेयं स्थेयमिति नेष्टं क्वः किमर्थं किं प्रयोजनं कस्मादिति शंसयश्च नेष्टः, अनया दिशालापनियम् ॥३॥

१ गच्छेति पृष्ठे पुरत स्तथेहि वागीदृशी केनचिदुच्यमानाम् ।
सर्वाशिषश्चातिशयेन ताभ्यश्चित्तस्य तुष्टिर्विजयाय पुंसाम् ॥
सिद्धयै विरावा जहि छिन्धि भिन्धि नेत्यादयः शत्रुवधोद्यतानाम् ।
क्वयासि मागच्छ तथैवमाद्याः प्रयोजनारम्भनिवारणार्थाः ॥



## अथ शाकुननिश्चयमाह–

कार्यंस्तु मूलशकुने ऽन्तरजे तदन्हि
विन्द्यात्फलान्नियतमेवमिमे विचिन्त्याः ।
प्रारम्भयानसमये तु तथा प्रवेशे
ग्राह्यं[1] क्षुतं न च शुभं क्वचिदप्युशन्ति ॥४॥

मूलशकुनः प्रथमशकुनः, तस्मिन् कार्यं यात्रा कार्यं विन्द्यात् जानीयात्, तस्मिन् शुभे यात्रा सिद्धिः, अशुभे असिद्धिरिति । अन्तरजे तदन्हेव यातुर्मूलशकुनात् परतो यावदभियोगस्तदन्तरे मध्ये यो ऽन्यः शकुनः शुभाशुभो भवति, तदन्तरजे मध्यजाते तस्य यत्फलं तदन्हि तस्मिन्नेव दिने विन्द्यात् । इमे ऽस्मिनध्याये ये शकुना उक्तास्ते नियतं सर्वकालमेव परेण प्रकारेण चिन्त्याः चिन्तनीयाः, प्रारंभकाले सर्वकर्मणां यानसमये यात्राकाले तथा प्रवेशे गृहप्रवेशे, एतेषु कार्येषु सर्वेषु शकुनाः चिन्तनीयाः, तथा क्षुत्कृतं नासाशब्दः सर्वथा

१ अथ क्षुताख्यं शकुनं क्रमेण महाप्रभावं प्रतिपादयामः ।
त्रस्यन्ति यस्माच्छकुनाः समस्ताः मृगाधिनाथादिव वन्यसत्वाः ॥
सर्वस्य सर्वत्र च सर्वकालं क्षुतं न कार्यं क्वचिदेव शस्तम् ।
जाते क्षुते तेन न किञ्चिदेव कुर्यात्क्षुतं प्राणहरं गवां तु ॥
निषिद्धमग्रे ऽक्षणि दक्षिणे च धनक्षयं दक्षिणकर्णदेशे ।
तत्पृष्ठभागे कुरुते ऽरिवृद्धिं क्षुतं कृकाटयां शुभमादधाति ॥
भोगाय वामश्रवणस्य पृष्ठे कर्णे च वामे कथितं जयाय ।
सर्वार्थलाभाय च वामनेत्रे जातं तं स्यात्क्रमतो ऽष्टधैव ॥

यदाहलल्लः

प्राप्नूय गच्छ विसर्जय निर्गच्छ व्रज संसर्पेति सिद्धिकराः ।
खल्वतेष्वप्यधिकाः प्रमोद जयं जवी शब्दाश्च ॥
मागास्तिष्ठ निवर्त श्व गम्यते मूढ दुर्मतेः मोहात् ।
यात्रां नेच्छन्ति बुधाः क्षुतकासित यतिशब्दैश्च ॥

ग्राह्यं श्रुत्वा नकिञ्चित्कार्यं कार्यमित्यर्थः । यतः क्वचिदपि न शुभं उशन्ति कथयन्ति, सर्वत्राशुभं क्षुतमिति ।

तत्र वदन्ति केचित्-

क्षुत सर्वं त्वशुभदं गो क्षुतं मरणप्रदम् ।
आसने वाहनारोहे परिधाने च भोजने ॥
विद्यारम्भे बीजबापे क्षुतं षट्सु तु शोभनम् ॥४॥ इति

## अथानिष्टशकुनविरुते सति तत्कर्तव्यमाह-

क्रोशादूर्ध्वं शकुनविरुतं निःफलं प्राहुरेके
तत्रानिष्टे प्रथमशकुने मानयेत्पञ्च षट् च ।
प्राणायामान्नृपतिरशुभे षोडशैवं द्वितीये
प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टस्तृतीयः ॥५॥

एके आचार्याः कश्यपादयः क्रोशादूर्ध्वं क्रोशान्तरं यच्छकुनविरुतं तन्निष्फलं प्राहुरुक्तवन्तः ।

तथा च कश्यपः-

क्रोशादनन्तरं यत्स्याच्छुभं वा यदि वा शुभम् ।
निष्फलं तच्च विज्ञेयं शकुनानां विचेष्टितम् ॥

एवं क्रोशं यावच्छुभप्रमाणं सफलं कोशादनन्तरं निःफलमिति । एतदाचार्यस्य नाभिप्रेतं, तत्रानिष्टे प्रथमशकुने इति, तत्र तस्मिन् प्रथमपदशकुने ऽनिष्टे अशुभे सति पञ्च षट् च एकादशप्राणायामान् मानयेत् पूरयेत् ।

प्राणायामलक्षणम्-

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठित्वा ततः प्राणः प्राणायामः स उच्यते ॥



व्याहृतयः ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं प्रणवः, ॐकारः शिरः आपोज्योतिरसोमृतम्, गायत्री प्रसिद्धा आयत प्राणः परित्यक्तः श्वासः त्रिः त्रीन् वारान् पठेत् । एवमनेन प्रकारेण द्वितीये शकुने अशुभे षोडश नेष्टः अशुभः तदा स्वभवनं आत्मीयगृहं प्रत्यागच्छेत, तत्प्रतीयमागच्छेत् ॥५॥

## अधुना शकुनोपसंहारार्थमाह-

चक्रे वरामिहिरः शकुनोपदेशं
तद्देशतो मुनिमतान्यवलोक्य सम्यक् ।
यद्ग्रन्थविस्तरभयादविजानता वा
नोक्तं तदन्यकथितादपि चिन्तनीयम् ॥६॥

वराहमिहिरः मुनिमतानि मुनिप्रणीतशास्त्राणि सम्यक् विलोक्य दृष्ट्वा शकुनोपदेशं शाकुनज्ञानकरं चक्रे कृतवान् । कथं उद्देशतः, संक्षेपतः अत्र शाकुने मया ग्रन्थविस्तरभयात् अविजानता ज्ञानाभावात् वा मया नोक्तं न कथितं तत् अन्यकथितात् शास्त्रात् विचिन्तनीयम् लक्ष्यमित्यर्थः ॥६॥

वराहमिहिराचार्य कृते ऽस्मिन् मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यन्ये ऽश्वमेधीययात्राविवृतौ शकुनोपदेशा ऽध्यायस्त्रिंशः ॥३०॥



# अधुना निवेश[1]लक्षणाऽध्यायो व्याख्यायते

## तत्रादावेभूवलक्षणमाह–

स्निग्धस्थिरासुरभिगुल्मलता सुगन्धा
शस्ता प्रदक्षिणजला च निवासभूमिः।
नेष्टा विपर्ययगुणा कच शर्करास्थि
वल्मीककण्टकविभीतकसङ्कुला च ॥ १ ॥

एवं विधा प्रस्थितस्य सेना निवासभूमिः शस्ताः प्रशस्ताः, किदृशी स्निग्धा स्नेहयुक्ता स्थिरा दृढा हन्यमानेप्यधो नयाति सुरभियुक्ता सुगन्धा गुल्मलता, 'यत्रैकमूलशाखासमूहो गुल्मः' एता प्रसिद्धा सुगन्धाः शोभनगन्धा प्रदक्षिणजला प्रदक्षिणेन जलं वहति यस्यां एवं विधा शस्ता शोभना, अतो विपर्ययगुणा विपरीतगुणसंयुक्ता नेष्टा न शुभा, अस्निग्धा अस्थिरा दुर्गन्धा दुर्गन्धगुल्मलतोपेता अप्रदक्षिणजला तथा च कचैः केशैः शर्करै मृत्काण्डैरस्थिभिर्वल्मीकैः वल्मीककृतमृत्पुञ्जैः कण्टकैः सकण्टकवृक्षैर्विभीतकवृक्षैः 'विभीतकोवरडेतिलोके' विभीतकेरण्डस्नुकप्रभृतिवृक्षाणां ग्रहणं, एतैरशुभवृक्षैः सङ्कुला व्याप्ता सा नेष्टा ॥१॥

## अधुना स्कन्दावारस्थितस्य राज्ञः प्रयोजनमाह–

गत्वालयं सुरगुरु द्विजसाधुमित्र–
तीर्थेतिहासजयपुण्यकथासु तिष्ठेत् ।

१ निवेशो वासभूमिः ।



हत्वा पशुं रिपुगृहाऽऽकृतिमुद्यमे च
प्राश्याऽथवा तमयमस्य विधाय रूपम् ॥२॥

प्रस्थितो राजा निवासालयं निवासगृहं गत्वा तत्र च सुरगुरुद्विजसाधुमित्रतीर्थेतिहासजयपुण्यकथासु तिष्ठेत्, सुरा देवा गुरवो माजन्यनाः द्विजाः ब्राह्मणाः सज्जनाः मित्राणि सुहृदं एषां सह तीर्थानां गङ्गाकेदारप्रयागरूपाणां इतिहासानां भारतरामायणपुराणानां कथा सुजयसंयुक्ता वीरोत्कर्षवर्णनरूपा या कथा पुण्यमङ्गलकथा धर्मसंयुक्ता या कथा तासु कथासु तिष्ठेत् अनुरक्तो भवितव्यमिति । अथानन्तरं तन्मयं तद्रूपं रिपुगृहाकृतिं वा पशुं उद्यमेनार्थात् हत्वा व्यापाद्य तं भुक्त्वा यायात्, यं प्रतिपक्षिणमुद्दिश्य यात्रां कर्तुमुद्यतस्तस्य यो राशिः यज्जन्मलग्नं तद्रूपो यः पशुस्तं छागादिकं हत्वा प्राश्य भुक्त्वा यायात्, अथवा यद्राशिरूपः प्राणी भवेत्स यदि भक्षो नभवे त्तदा अस्य रिपो राशिलग्नयोश्चान्नमयं पिष्टमयं शर्करामयं वा रूपं कृत्वा विधाय तं प्राश्य यायात् ॥२॥

## अथ यात्रायां मतान्तरमाह–

एकत्राऽध्युषितस्याऽत्रिगौतमच्यवना जगुः।
यात्रा पञ्चत्रिसप्ताहात्पुनर्भद्रेण योजयेत् ॥३॥

अत्रिगौतमच्यवना मुनयः यात्रा पञ्चत्रिसप्तात् एकत्र अध्युषितस्य, एकस्मिन् स्थाने त्र्यहं पञ्चाहं, सप्ताहं अध्युषितस्य स्थितस्य पुनः भूयः, तस्माद्देशात्स्थानात भद्रेण[1] भद्रफलप्रदेन शुभलग्नेन यात्रां योजयेदिति जगु उक्तवन्तः । तद्युक्तं यस्मादर्थे ।

ऋषिपुत्र आह–

गौतमो भगवानाह पुनर्दैवं …… … ।
पञ्चरात्रात्परं वापि वसिष्ठ प्रत्यभाषतः ॥

१ अत्र केचिद्भद्रेण भूपतेरिति पठन्ति ।

वारदात्रिभरद्वाजगर्गभागुरिदेवलाः ।
सप्तरात्रादि द्वेस्यन्ति पुनर्दैवस्य सम्पदम् ॥
तस्मात्कालातिपातेषु यात्रासाफल्यमिच्छता ।
शौनको पिप्पलादश्च महाथर्वविशारदौ ॥
तथैवाङ्गिरसः श्रेष्ठो दशरात्राद्बृहस्पति ।
तस्मात्कालातिपातेषु यात्रासाफल्यमिच्छता ॥
पञ्चरात्रोषिता सेना योक्तव्या दैवसम्पदा ।
तस्मात्पञ्चत्रिसप्ताहात्पुनर्भद्रेण योजयेत् ॥ इति पाठोनिश्चितः ॥

तथा च काश्यपः–

यात्रायां निर्गतो राजा त्र्यहं पञ्चाहमेव वा ।
सप्ताहं वा स्थितो यत्र पुनस्तमाच्छुभे दिने ॥
शुभलग्ने च दातव्या यात्रा येनाप्नुयाच्छुभम् ॥३॥

## एतदेव दूषयन्नाह–

तच्चायुक्तमिदं प्राहुर्होराशास्त्रविदो जनाः ।
वाञ्छितार्थफलप्राप्तौ यात्रा परिसमाप्यते ॥४॥

यदुक्तं यात्रायां 'पञ्चत्रिसप्तरात्रात्पुनर्भद्रेण योजयेदित्येतत्' होराशास्त्रविदो जनाः होराशास्त्रपण्डिताः, अयुक्तं अयोग्यं इति प्राहुः कथयति, यतो वाञ्छितार्थफलप्राप्तौ वाञ्छितस्य अभिलषितस्य, अर्थस्य यदर्थं यात्रा दत्ता तत्फलावाप्तौ तल्लाभे यात्रा परिसमाप्यते न च पुनः पञ्चत्रिसप्ताहादिति । तस्मात् यावत्कार्यप्राप्तिर्न जाता तावत्सैव यात्रायां प्रस्थितो यात्रायां निर्गतो राजा प्रथमेऽहनि किं प्रमाणमध्वानं गच्छेदित्यत्रोच्यते । क्रोशमात्रमेव, कुत एतल्लभ्यते तदुच्यते ।

यस्माद्बादरायणः–

तस्मात्क्रोशं गच्छेदाद्येऽहनि पार्थिवे विजयकाङ्क्षी ।
न्यूनं द्वित्रिक्रोशे च काले गतिभङ्गदोषाः स्युः ॥इति॥



तस्मादाद्यैव यात्रा प्रथमदत्ता सैवेति ।
उक्तञ्च–

शुभलग्ने निर्यातो राजा विनिवर्तते फलप्राप्तौ ।
जित्वा सकलान् शत्रून् पुनस्तत्राऽऽदिशेल्लिङ्गम् १ ॥४॥

## अथाऽभियोज्यलक्षणं व्याख्यायते

तत्रादावेव तल्लक्षणमाह–

आक्षेपशीलः पुरुषाभिधायी
विरक्तभृत्यः परदारगामी ।
लुब्धीऽसहायो व्यसनी कृतघ्नः
स्थितिप्रभेत्ताऽऽकरशीर्णराष्ट्रः ॥५॥

विश्रंमहाक्रोधपरो नृशंसः
क्षुद्रः प्रमादी न बहुश्रुतश्च ।
दिव्यान्तरिक्षक्षितिजैर्विकारै–
र्निष्पीडितो यश्च सदैव हीनः ॥६॥

एवं विधो यो राजा सदैवहीनः दैवेन प्राक्तनशुभकर्मणा हीनो रहितो ज्ञेयः, आक्षेपणं शीलं स्वभावो यस्य सर्वसत्वात्, अर्थलोभात् निष्कारणं आक्षिपति पुरुषाऽभिधायी अप्रियवाक, विरक्ता भृत्या यस्य वा भृत्येषु विरक्तः विद्विष्टः, परदारगामी परेषां स्त्रीणां आसक्तः लुब्धो लोभाभिभूतः, असहायः नृपान्तरसहायशून्यः व्यसनी स्त्री कपोताऽक्षामृगयाजलक्रीडानृत्यगीतपरोक्षनिन्दामद्यादिषु व्यसनेषु, अनुरतः, कृतघ्नः उपकाराकरणशीलः स्थितिप्रभेत्ता प्राक्तनैकृताया स्थितिर्मर्यादा तस्यास्थितेर्भेत्ता निराशकराः । आकरं अर्थोत्पत्तिस्थानं शीर्णं नष्टं यस्य शीर्णं नष्टं राष्ट्रं यस्य । विश्रंमहा विश्वासघातकः क्रोधपरः क्रोधशीलः नृशंसः क्रूरः क्षुद्रो न्यायरहितः प्रमादी प्रमादशीलः न बहुश्रुतो मूर्खः दिव्यै-

१ लिङ्गं भूनिवेशलक्षणम्

विकारैर्ग्रहनक्षत्रसमुद्भवैः उत्पातैः, आन्तरिक्षैः उल्कानिर्घातपवनपरिवेषगन्धर्वपुरपुरन्दरचापादिभिः क्षितिजैः भूकम्पादिभिर्यो राजा निपीडितः उपहतः सदैव हीन इति ॥५-६॥

## अथान्यदप्यभियोज्यकलक्षणमाह–

अतो विपर्यस्तगुणेन राजा
तादृग्विधो ऽरिस्त्वभियुक्तमात्रः ।
तरुर्घुणैर्जग्ध इवात्तवीर्यो
महानपि क्षिप्रमुपैति भङ्गम् ॥७॥

तादृग्विधो निरुक्तलक्षणैरयुक्तः शत्रुः, अतो ऽस्मादुक्ताद्विपर्यस्तगुणैर्विपर्ययगुणैरुक्तैर्युक्तेन शुभदैवयुक्तेन अभियुक्तमात्र, आप्तवीर्य प्राप्तबलो ऽपि महान्नुत्साहयुक्तो ऽपि क्षिप्रं आश्वेव भङ्गं उपैति, तरुर्घुणै र्जग्ध इव घुणैः कृमिभि र्जग्धो भक्षितो महानपि तरुर्वृक्षः क्षिप्रं सहसा भङ्गं उपैति तद्वत् ॥७॥

## अथा ऽभियोज्यलक्षणं व्याख्यायते–

विद्विष्टाः प्रवरनराः प्रतापहीना
निःशौचा मृतवरवारणा ऽश्वयोधाः ।
सोत्पाताः प्रकृतिविपर्यया ऽनुयाता
शोकार्ता रिपुवशमाशु याति सेना ॥८॥

एवं विधा सेना आशु क्षिप्रं रिपुवशं शत्रुविधेयत्वं याति गच्छति। किदृशी विद्विष्टप्रवरनरा प्रधाना नराः पुरुषा विद्विष्टा यस्यां सा तथा भूता प्रतापहीना प्रतापेन पुरुषकारेण हीना रहिता निःशौचा शौचाचाररहिता मृतावरवारणा प्रधानगजाः वराश्वाः प्रधानतुरगा वरायोधा शूराश्च मृता यस्यां, सोत्पाता उत्पातैर्दिव्यान्तरिक्षभौमैर्युता प्रकृति विपर्ययानुयाता प्रकृतिः स्वभावः तद्विपर्ययं विपरीतं अनुयाता प्राप्ताः शोकेन व्यसनेन आर्ता पीडिता एवं विधा रिपुवशं याति ।



उक्तञ्च —

निद्रा ऽऽलस्यावनतवदनाः केचन स्वप्नशीला
भ्रष्टाचारा मलिनपरुषच्छायया क्रन्ददेहाः ।
दीर्घश्वासाः सजलनयनाः शोकलोभाभिभूताः
सैन्ये यस्य द्विजगुरुसुहृद्द्वेषिणश्चैव योधाः ॥

अकारणप्रोद्गतरोमकूपा
जये निराशाः प्रकृतेरपेताः ।
अमङ्गला चेष्टितजातहासाः
सैन्ये नरा यस्य सदाभियोज्या ॥इति॥८॥

## अधुना शुभचेष्टितमाह–

सङ्ग्रामे वयममरद्विजप्रसादा–
ज्जेष्यामो रिपुबलमाश्वसंशयेन ।
यस्यैवं भवति बले जनप्रवाद
सोल्पो ऽपि प्रबलबलं परं निहन्ति ॥९॥

यस्य राज्ञो बले सेनायां एवं विधो जनप्रवादः जनानां प्रवादो भवति स राजा, अल्पो ऽपि अल्पसैन्यो ऽपि प्रवरबलं अतिवीर्यं परे शत्रुं निहन्ति घातयति, सङ्ग्रामे समरे वयं असंशयेन, अमराणां देवानां द्विजानां ब्राह्मणानां च प्रसादात् हि प्रबलं शत्रुं आशु क्षिप्रमेव जेष्याम इति सेनालक्षणम् ॥९॥

## अथ वातलक्षणमाह–

प्रक्षिप्तक्षुपपांशुपत्रविहगच्छत्रध्वजाग्रान्तकृत्
दुर्गन्धः करिदानशोषजनकः सावर्तलोष्टोत्करम् ।

यातुर्वायुरनिष्टदः शुभकरो यात्रानुगो ऽल्पोद्यमः
पूल्हादी सुरभिः पूदक्षिणगति स्वादुश्च बृद्धिपूदः ॥१०॥

एवं विधो वायुः अनिलः यातुर्गच्छतो ऽनिष्टः अशुभः । कीदृशः प्रकर्षेण उत्क्षिप्ताः क्षुपा तृणादिनो पांशुः रजः पत्राणि पर्णानि विहगाः पक्षिणः, एते उत्क्षिप्ताः उर्ध्वंनीता येन तथा, छत्राणां आतपत्राणां ध्वजानां प्रसिद्धचिन्हानां अन्तकृत् भङ्गकारी दुर्गन्धो दुष्ट-सुरभिः हस्तिनां करिणां दानं मदं तच्च पानीयरूपं तस्य शोषं जनयति उत्पादयति सहावर्तः आवर्तेन भ्रमणेन युक्तः तृणवर्तकृत्, लोष्टानां मृत्तिकतादि वा तेषां उत्कर उर्ध्वंनीत्वा प्रक्षेपकृत्, एवं विधो वायुरनिष्टकरः । अथैवं विधो वायुः शुभकरः, कीदृशः यात्रानुलोमः यात्रायां अनुगच्छति यातुः पश्चाद्वहतीत्यर्थः, अल्पोद्यमो मृदुगतिर्मन्दगामी प्रल्हादि, गन्तु-राल्हाददः देहसुखजनकः सुरभिः सुगन्धः प्रदक्षिणगतिः प्रादक्षिण्येन गतिर्यस्य प्रादक्षिण-पश्चिमोत्तरादिक्रमेण याति, स्वादुः मिष्टगन्धः एवं विधो वायुः शुभदः यातु शुभं ददा-तीति वातलक्षणम ॥१०॥

## अथ मेघलक्षणमाह—

पृथुघनमनुलोमस्निग्धमंभोदबृन्दं
तरुनगनगरेष्टद्रव्यसत्वानुकारी ।
जयदमुभयपार्श्वादिस्थितं पृष्ठतो वा
न शुभकरमतो ऽन्यद्यानकाले नृभर्तुः ॥११॥

एवं विधं अम्भोदबृन्दं मेघसमूहं नृभर्तुः राज्ञो यानकाले यात्रासमये जयदं भवति। कीदृशं पृथुघनं अतिनिबीडं पृथु विस्तीर्णं घनं संततं अनुलोमं यात्रिकानुगम् यत्र यात्रिको याति तदनु तद्दिक्गं स्निग्धं अरुक्षं तथा तरु वृक्षः नगाः पर्वताः नगरं पुरं इष्टद्रव्याणि भृङ्गारबालव्यजनध्वजादीनि इष्टसत्वानि अश्वादय, एषामनुकारि सदृशरूपं जयदं भवति जयं ददातीत्यर्थः । यातुर्गमनशीलस्य पार्श्वद्वये दक्षिणोत्तराधिष्ठितं व्याप्तं येन पृष्ठतो वा यातुः पश्चात् स्थितं तदपि जयदं भवति। अतो ऽस्मात् उक्ताल्लक्षणान्मेघबृन्दात् अन्यत् परं न शुभम्, अपृथुं अघनं अनुलोमं रुक्षं दुष्टसत्वानां खरकरभवानराणां सदृशं अग्रगं विलोमगम् ॥११॥



## अथान्यदप्याह—

निन्दितसत्वपिसाचविचित्रो
पिशितभुजाकृतयः परुषाश्च ।
वज्रमुचः क्षतजाश्ममुचो वा
बलभयमाशु घनाः कथयन्ति ॥१२॥

एवं विधा घना मेघा यात्राकाले दृष्टा, आशु क्षिप्रं एवं बलस्य सेनाया भयं कथयन्ति। कीदृशाः निन्दिताः कुत्सिताः सत्वाः प्राणिनः काकोष्ट्रजम्बुकोष्ट्रसदृशाः पिशाचा देवयो-नयः विकृतरुपाः तत्सदृशाः विचित्रा नानाकृतयो नानावर्णाश्च पिशितं मांसं भुङ्क्ते अश्नाति यः राक्षसः तदाकृतयस्तत्सदृशाः परुषाः रुक्षाः वज्रं अशनिं मुञ्चन्ति वज्रमुचः क्षतजं रक्तं, अश्म पाषाणं मुञ्चन्ति वर्षन्ति एवं विधानिष्टा ॥१२॥

## अथान्यदप्याह—

भृशं क्षरन्तो रुधिरारुणाभाः
सशक्रचापाः खररुक्षनादाः ।
रणोपयोज्या त्वतिचित्ररूपा
रणाय दृष्टा गमने ऽम्बुवाहाः ॥१३॥

गमने यात्रायां दृष्टा मेघाः रणाय सङ्ग्रामाय भवन्ति । कीदृशाः भृशं अत्यर्थं क्षरन्तो बर्षन्तः रुधिरस्य रक्तस्य अरुणस्य भा कान्ति र्येषां तथा सशक्रचापा इन्द्रधनुषो-पेता खररुक्षनादा खरस्यैव रुक्षो नादः शब्दो येषां रणे सङ्ग्रामे ये उपयुज्यन्ते आयुधा-स्तत्सदृशी आकृतिर्येषां चित्ररूपा नानावर्णा इति ॥१३॥

## अथ वृष्टिलक्षणमाह—

सप्ताहान्तर्बलभयकरी वृष्टिरन्यर्तु जाता
केचिद्यात्रामसितजलदैः प्रोज्झितां पूजयन्ति ।

चित्राभ्रायां बलपति बधो रुक् च पीताम्बुजायां
क्षुब्धोष्णायां भवति नचिरात् व्यम्बुदायां विनाशः॥१४॥

अन्यतु जाता वर्षाकालं वर्जयित्वा, अन्यस्मिन् ऋतौ सप्ताहात्सप्ताहमध्ये यात्रायां वृष्टिर्जाता बलस्य सेनाया भयकारी भवति, केचिन्मुनयो वसिष्ठादयः, असितजलदैः कृष्णमेघैः प्रोज्झितो वर्जितो यात्रायां पूजयन्ति।

तथा च भगवान् वसिष्ठः-

कुन्देन्दुसदृशा मेघा हंसगोक्षीरपाण्डुराः।
सुस्निग्धाः सुप्रसन्नाश्च यात्राकाले प्रपूजिताः॥ इति॥

चित्राभ्राया भवति, चित्रा नानावर्णा अभ्रोद्भूतायां दृष्टौ बलपतेः सेनापतेः बधो मरणं भवति। पीताम्बुदायां पीतमेघोद्भूतायां रुक् रोगा भवन्ति, उष्णायां दृष्टौ न चिराच्छीघ्रमेव दुश्चिक्यभयं भवति, धूमाम्बुदायां विगतमेघायां विनाशो भवति॥१४॥

## अथान्यदप्याह-

वाहनानि सव्यगा हन्ति योषितो ऽन्यथा।
पञ्जराकृतिस्थिता सर्वतो दलेश्वरम्॥१५॥

सव्यगा यातुर्दक्षिभागगाः वृष्टिर्वाहनान् अश्वादीन् हन्ति, अन्यथा वामभागगाः योषितः हन्ति। सर्वतः सर्वासु दिक्षु पञ्चराकृतिस्थिता दलेश्वरं सेनापतिं हन्ति घातयति॥१५॥

## अथेन्द्रचापगर्जितयोर्लक्षणमाह-

चापमैन्द्रमनुलोममखण्डं
प्रोज्वलं बलहमायतमिष्टम्।



स्फुजितं १ सलिलकुम्भनिषेक-
क्षोभितार्णवसमं विजयाय॥१६॥

ऐन्द्रं चापं इन्द्रधनुः, अनुलोमं पृष्ठवर्तिनं, अखण्डं सकलं प्रोज्वलं सतेजस्कं बलहं घनं आयतं दीर्घं अत्युच्चं एवं विधं इष्टं शुभप्रदं। कुम्भे कलशे सलिलनिषेके यथा शब्दं उच्चरति तादृक् शब्दं तथा क्षोभितस्य क्षुब्धस्य, अर्णवस्य समुद्रस्य यादृक् शब्दस्तादृशं स्फुर्जितं गर्जनं राज्ञो विजयाय भवति॥१६॥

## अथ तडिदशनिनिपातलक्षणमाह-

तन्वी प्रलम्बा विजयाय दीर्घा
तड़ित् घनस्फुर्जितवर्जिता च।
शस्तो ऽशनि श्चास्य समीपजातः
प्रदक्षिणेनाप्यति वातशब्दः॥१७॥

तडित् विद्युत् तन्वी सूक्ष्मा प्रलम्बा लम्बायमाना दीर्घा घनस्फुर्जितवर्जिता मेघनिर्घोषरहिता विजयाय भवति, यातुः अशनिः, असमीपजातो दूरोत्पन्नः शस्तः, अर्थादतिसमीपे न शस्त इति। स च प्रदक्षिणेनापि शस्तः, अतिवातो वातरयः शब्दोप्यन्तरिक्षे प्रदक्षिणेन गच्छन् शस्तः सत्फलदः। अशनि लक्षणम् "अशनि स्वनेन महता नृगजाश्वसृगालवेश्मतरुपशुषु निपतति विदारयति धरातलं चक्रस्थानेति।" तस्या ऽशन्या एवातिवातः शब्दो ऽतीवपतमानादवगतोनादः प्रदक्षिणेना ऽपि शस्तः शुभः॥१७॥

## अथोल्कालक्षणमाह-

लग्नार्केन्दू निघ्नती शास्ति पौरान्
उल्का हन्याद्यातु पौरग्रहाश्च।

१ स्फुजितं मेघशब्दः।

यातुः शस्ता संयुता वा ध्रुवर्क्षे
नेष्टा ऽतो ऽन्या धूमिनी श्यावरुक्षा ॥१८॥

या उल्का लग्ने उदये अस्तमये वा अर्केन्दू सूर्याचन्द्रमसौ निघ्नन्ति हन्ति सा पौरान् एव शास्ति अनुशासनं करोति, अर्थात् उपतापयति, पौरग्रहाः गुरुरविविधुजा इति, या उल्का ध्रुवनक्षत्रे दृश्यते सा यातुः शस्ता शुभदात्री 'ध्रुवाणि त्र्युत्तरा रोहिण्यः' ध्रुवाद-न्यर्क्षाणि नेष्टा अशुभा, अथ या च धूमिनी सधूमा श्यावा कपिसरूपा रुक्षा सापि यातु-र्नेष्टा अशुभफला । उल्का कीदृग्गतः ।

उल्कालक्षणम्-

उल्का शिरसि विशाला निपतति प्रवर्द्धते प्रतनुपुच्छा ।
दीर्घा भवति पुरुषं भारावहो भवन्त्यस्याः ॥इति ॥१८॥

## अथ भूगर्जितलक्षणमाह-

हन्यान् नृपपौरराष्ट्रिकान् भृत्याम्भोरुहतस्करद्विजान् ।
वेलाक्रमशो दिनादितः काष्ठां ताश्च स यत्र भूस्वरः ॥१९॥

भूस्वरः भूमिशब्दः दिनादितो दिनप्रारम्भात् सूर्योदयात् वेलाक्रमशः इत्यनेनाहोरात्रं सप्तभिभागं परिकल्प्य तत्रादिमे भागे नृपं राजानं हन्ति । द्वितीये भागे पौरान् पुरवासिज-नान् हन्ति । तृतीये भागे राष्ट्रिकान् राज्याश्रितान् हन्ति । चतुर्थभागे भृत्यान् सेवकान हन्ति । पञ्चमे भागे अम्बोरुहान् जलजान् हन्ति । षष्ठे भागे तस्करान चौरान् हन्ति । सप्तमे भागे द्विजान् ब्राह्मणान् हन्ति । स च भूस्वरो यस्यां काष्ठायां भवति तां दिशं हन्यात् इति भूगर्जितलक्षणम् ॥१६॥

## अथ सन्ध्यालक्षणमाह-

शस्ता शान्ता द्विजमृगघुष्टा
सन्ध्या स्निग्धा मृदुपवना च ।



पांशुध्वस्ता जनपदनाशं
धत्ते रुक्षा रुधिरनिभा च ॥२०॥

या सन्ध्या तन्मधुरस्वरैः अकाभिमुखैश्च द्विजैः पक्षिभिः मृगैररण्य पशुभिः घुष्टाः कृतशब्दाः स्निग्धाः निर्मलाः मृदुपवनाः स्वल्पवाताः सा च शुभा। या च पांशुना रजसा ध्वस्ता कलुषिता सा जनपदानां लोकानां नाशं धत्ते ददाति या च रुक्षकलुषा रुधिरनिभा रक्तवर्णा सापि जनपदानां नाशं धत्ते, इति सन्ध्यालक्षणम् ॥२०॥

वराहमिहिराचार्यकृते ऽस्मिन् मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यक्षे ऽश्वमेधीययात्राविवृतौ निवेशभूम्यभियोज्य-सेना-वात-मेघवृष्टयुल्का-भूगर्जित-संध्यालक्षणं नामा ऽध्याय एकत्रिंशः ॥३१॥

—※—

# अथोत्पाताऽध्यायो व्याख्यायते

## तत्रादावेव परिवेशलक्षणमाह–

परिवेषोऽर्कशशिनोः शत्रुपक्षग्रहैः सहः ।
स्निग्धोऽखण्डश्च जयदः पापदो बहुमण्डलः ॥१॥
प्रतिलोमोऽतिबहुलो नेष्ट इष्ट प्रदक्षिणः ॥१½॥

अर्कशशिनोः सूर्यचन्द्रमसोः परिवेशः शत्रुपक्षग्रहैः सह शत्रपक्षे ये ग्रहाः शत्रोर्जन्मलग्न–जन्मराशिकालहोराधिपति नगराधिपतिग्रहाश्च तैः सह जयदो यातुर्जयं ददाति । तथा स्निग्धो निर्मलः, अखण्डः सकलमण्डलः जयद एव, परिवेषो बहुमण्डलो बहुभिर्मण्डलैर्युक्तः स पापदः यश्च परिवेषः प्रतिलोमः सम्मुखः, अतिबहुलः अतिघनः स नेष्टो न शुभः, यश्च प्रदक्षिणो यातुः प्रादक्षिणेन याति स इष्टः शुभफलः ॥१½॥

## अधुना नीहारपांशुगन्धर्वनगराणां लक्षणमाह–

नीहारः पांसुपातश्च हितः स्निग्धः प्रदक्षिणः ॥२॥
गन्धर्वनगरं हन्ति प्राक् प्रभृत्यवनीश्वरम् ।
दलेशं युवराजश्च पुरोहितमिति क्रमात् ॥३॥

नीहारपातो धूमपातः तथा पांसुपातः प्रदक्षिणः प्रादक्षिण्येन स्थितः स्निग्धश्च हितः । गन्धर्वनगराणां पुरं प्राक् प्रभृति पूर्वाद्यासु दिक्षुः दृष्टः, अवनीश्वरादीन् हन्ति । तद्यथा



पूर्वस्यां दृष्ट अवनीश्वरं राजानं, दक्षिणस्यां सेनापतिं पश्चिमस्यां युवराजानं उत्तरस्यां पुरोहितं हन्तीत्यर्थः ॥२-३॥

## अत्रैव विशेषमाह–

सिताद्यं ब्राह्मणादींश्च विदिगुत्थं च सङ्करम् ।
प्रदक्षिणश्च यात्रायां जयदं नेष्टमन्यथा ॥४॥

गन्धर्वनगरं सिताद्यं ब्राह्मणादींश्च हन्ति । तद्यथा श्वेतवर्णो ब्राह्मणान्, रक्तः क्षत्रियं पीतो वैश्यान्, कृष्णः शूद्रान् विदिगुत्थं विदिक्षु उत्पन्नं आग्नेयनैर्ऋत्यवायवैशान्येषु वर्ण–सङ्करान् हन्ति । यात्रायां पूर्वदक्षिणं प्रादक्षिण्येन जयदम् , पूर्वाग्नेययाम्यादिषु गच्छन् प्रादक्षिण्यम् । अन्यथा अप्रदक्षिणां गच्छन् नेष्टं अशुभम् ॥ ४ ॥

## अधुनोत्पातिकमाह–

दिशां दाहोऽथ जयदः प्रदक्षिणमुपागतः ।
श्वभ्रोन्नते वधो राज्ञां छायाया व्यत्यये न च ॥५॥

दिशां दाहो दिग्दाहः स च प्रादक्षिण्येनोपगतः प्राप्तः जयदो भवति । पूर्वाग्नेयदक्षिणाद्यासु गच्छन् प्रदक्षिणः । श्वभ्रोगतः तस्योन्नतेः, अकस्मात् उन्नते राज्ञां नृपाणां वधः मरणं भवति छायाया व्यत्यये विपरीते तथा राज्ञामेव वधः । छाया व्यत्ययोऽर्काभिमुखत्वम् ॥५॥

## अथान्यदप्याह–

घृताम्बुपयसां स्रावे च्युते वृक्षाच्च तत्क्षयः ।
तैलेन नाशो मुख्यानां रक्तो शस्त्रक्षताद्भयम् ॥६॥

घृतं आज्यं, अम्बुं जलं पयः क्षीरं, एषां स्रावे वृक्षान्तरात् च्युते निगते तत्क्षयो भवति, घृतस्रुते घृतक्षयः, अम्बुनि अम्बुक्षयः पयसि गवादीनां स्तन्यक्षयः तैले स्रुते मुख्यानां प्रधानानां नाशः रक्ते शोणिते स्रुते शस्त्राद्भयं शस्त्रकृतं भयं भवति ॥ ६ ॥

## अथान्यदप्याह–

मद्ये न तु मिथो भेदो रुग्भयं दधिनिस्रुते ।
कुसुमात्कुसुमोत्पत्तौ परचक्रागमो भवेत् ॥७॥

मद्ये च्युते वृक्षात् मिथः परस्परं सेनाया भेदः पृथक् भावो भवति, दधिनिस्रुते रुग्भयं प्रजानां, कुसुमात् पुष्पात्कुसुमोत्पत्तौ परचक्रागमो भवति । प्राकृतं रूपं वर्जयित्वा अन्यत्रोह्यम् । यत्र न सम्भवति तत्रैव तत्फलमतो वटार्कादिषु क्षीरवृक्षेषु क्षीरस्रावो न दोषाय, खजूरताडवृक्षादिषु मद्यस्रावो न दोषाय, स्नेहवृक्षेषु देवदारुशरलादिषु स्नेहस्रावो न दोषाय, पुष्पात्पुष्पोद्गमश्च मल्लिकादौ न दोषाय ॥७॥

## अथान्यदप्याह–

बहुतोयेऽतिसंशोषः कूपेऽसृक् प्रतिविस्रुतः ।
राज्ञोऽब्दार्द्धाद्वधं कुर्युः स्रोतोऽन्यत्वे परागमः ॥८॥

बहुतोये प्रभूतजलस्थाने अति संशोषो अतीवजलक्षयः कूपेऽसृक् प्रतिविस्रुति, कूपे कूपतडागदेवखातादिषु रक्ता प्रतिस्रावः, एतद्राज्ञो नृपस्याब्दार्द्धात्परतः षण्मासात् मासषट्कात् राज्ञो नृपस्य वधं मरणं कुर्युः । यत्कूपादौ स्वभावादेव रक्तता जलस्य तत्र नायं दोषः । अथ स्रोतोऽन्यत्वे स्रोतसां अन्यत्वे विपरीतत्वे परागमः परचक्रागमो भवति । स्रोतौ ग्रहणमुपलक्षणम् । नदीनामन्यत्वे प्रतीपगमने परागम एव ॥८॥

## अथान्यदप्याह–

वृष्टिविद्युत्स्वनैर्व्यभ्रे चरस्थिरविपर्यये ।
दिनोल्कया च पीड्यन्ते जना भूपतिभिः सह ॥९॥

व्यभ्रे विगतमेघे नभसि वृष्टिर्वर्षणं विद्युत् तडित्स्वनो मेघशब्दः, तथा चराणां पदार्थानां स्थिरत्वे स्थिराणां चरत्वे तथा दिवसे यद्युल्कापातो भवति एतैः सर्वैः उत्पातैः लोका भूपतिभिः राजभिः सह पीड्यन्ते ॥९॥



## अथान्यदप्याह–

सप्ताहं सन्ततान्यतौ वृष्टिर्हन्यान्नराधिपम् ।
अनग्निर्ज्वलनं पुंसो व्याधिराश्वेव जायते ॥१०॥

अन्यतौ वर्षावर्जिते सप्ताहं दिनसप्तकं अविच्छिन्ना वृष्टिः नराधिपं राजानं हन्यात् । अनग्निज्वलनं अग्निना विना ज्वालारूपं यदि दृश्यते तदा पुरुषाणां क्षिप्रमेव व्याधिर्जायते उत्पद्यते ॥१०॥

## अथान्यदप्याह–

पीडा राष्ट्रस्य षण्मासादुष्णशीतविपर्यये ।
मासेऽष्टमे नृपस्यान्तो निगदे पशुपक्षिणाम् ॥११॥

उष्णकाले ग्रीष्मादौ शीतता शीतकाले हेमन्तादौ उष्णता यदि तदा राष्ट्रस्य जनपदस्य षण्मासात् षड्भिर्मासैः विज्ञेया पशूनां गवादीनां चतुष्पदानां पक्षिणां विहगानां निगदे पुंवद् व्याहरणे नृपस्य राज्ञः अष्टमे मासे अन्तो मरणं भवति ॥११॥

## अथान्यदप्याह–

नागरारण्यसत्वानामरण्यपुरमेव च ।
राष्ट्रपीडाधिके वर्षान्मुख्यलोकस्य च क्षयः ॥१२॥

नागरसत्वानां नगरप्राणिनां श्वप्रभृतीनां, अरण्यनिवसने ऋतावधिके वर्षे मुख्यस्य प्रधानलोकस्य च क्षयो विनाशो भवति । तादृगरण्य सत्वानां सृगालव्याघ्रादीनां पुरनिवसने ऋतावधिके च तादृगेव फलं भवति ॥१२॥

## अथान्यदप्याह–

स्तंभोपलकुसूलार्चा पीठशय्या प्रसर्पणम् ।
गदने चापि देशस्य नाशं मासत्रयात् वदेत् ॥१३॥

स्तंभः स्थूणा उपला अश्म कुसूलं मृन्मयं अर्चा देवप्रतिता पीठं आसनं शय्या खट्वाद्यास्तरणं

एषां प्रसर्पणे गदने व्याहरणे पुंवच्छब्दोच्चारणे एषामेव देशस्य जनपदस्य मासत्रयात्परतः नाशो वदेत् ब्रूयात् ॥१३॥

## अथान्यदप्याह—

गोनागाभ्यामश्ववधात् व्यत्ययो वा नृपान्तकृत् ।
देशनाश स्तथा स्त्रीणां खगाहि पशुसम्भवे ॥१४॥

गौः प्रसिद्धः नागो गजः आभ्यामश्वस्यवधस्तुरगो यदि वद्ध्यते, अथवा व्यत्ययो विपरीत, अश्वेन गोनागयोर्वध एतत् वर्षार्द्धान्मासषट्कात् राज्ञः, अन्तं नाशं करोति । स्त्रीणां च योषितां नरस्त्रीणां खगाहिपशुसंभवे सति खगः पक्षी अहिः सर्पः पशुः छागादिकः, एषां संभव उत्पत्ति र्यदि दृश्यते तदा देशस्य जनपदस्य नाशो भवति ॥१४॥

## अधुनोत्पातफलसंहितानाह—

धान्यरसमद्यभोजनफलपुष्पस्नेहमांसवस्त्राणाम् ।
सिकतारजोवसासृक् स शर्करां — — ॥१५॥

— — — — — — —
— — — — — — —
— — — — — त्रुटितमत्र पत्रैकम् ॥५१॥

क्रोष्टाः सृगालः श्वा सारमेयः, अहिः सर्पः पिपीलिकाः सरीसृपजातयः शशः शशकः मृग आरण्यः ध्वाङ्क्षः काकः, आदिग्रहणात् कङ्कप्लव गृध्रा एते यतो यस्यां दिशि याति पुरे नगरे सेनायां वा प्रविशति ततस्तस्यामेव दिशि शत्रुः रिपुः पुरं सैन्यं वा घातयेत् ।

## अधुना तोयग्रहणमालभतोऽग्निदाने विधानमाह—

पातालर्क्षेराहुकेत्वोःपुरेऽरे
तोयोच्छित्तिः सालपातश्चकार्यः ।

अत्र त्रयस्त्रिंशोऽध्यायोऽपि त्रुटितंवर्तते ।



जामित्रस्थे भूमिजेऽस्यांशके वा
पुत्रेणेन्दोर्वीक्षितेऽग्निः प्रदेयः ॥१॥

यस्मिन् लग्ने पातालर्क्षे चतुर्थस्थाने राहुकेत्वोरन्यतमः स्थितो भवति, तेन लग्ने ये केतो राशिव्यवस्था प्रागेव व्याख्याता; यथा येन राशिना नक्षत्रेण वा सह उदेति केतु तत्रस्थ एव सङ्कल्पनीय इति । जामित्रस्थ इति भूमिजे अङ्गारके जामित्रस्थे लग्नात्सप्तमराशिस्थे इन्दोः पुत्रेण बुधेन वीक्षिते दृष्टे शत्रोः पुरेऽग्निः हुताशनो देयः, अथवा भूतिजस्यांशके तत्काललग्नात्सप्तमस्थे बुधेन वीक्षिते वाग्निः प्रदेयः, अग्निप्रहारः कर्तव्य इति ॥१॥

वराहमिहिराचार्यकृतेऽस्मिन्मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यत्येऽश्वमेधीययात्राविवृतौ परदुर्गालंभनोपायनामाऽध्यायश्चतुस्त्रिंशः ॥ ३४ ॥

शुभमस्तु

अतीवजीर्णात्त्रिशताब्दतीर्णात्
पत्राग्रपृष्ठाक्षरभाविशीर्णात् ।
पाश्चात्यमोढाक्षरतोऽवकीर्णा
त्संपादितं कष्टत इत्थमेव ॥

इति



# शुद्धिपत्राणि

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| श्टङ्गोन्नति | शृङ्गोन्नति | क | १३ |
| ···ण्डनाथौ | दण्डनाथौ | ग | २४ |
| मुलक्क | सुलुक्क | ज | ३ |
| रौद्रौ | रोद्रो | ज | २१ |
| ङ्कुंकुमादिक गन्धाढ्य | कुंकुमादिक गन्धाढ्ये | त | १३ |
| चोपलभ्यः | चांपलभ्ये | ध | २६ |
| प्राक्की | प्राक्कर्मणा | ६ | २ |
| रत्नाबलिकृतेयमार्या | रत्नाबलिकृतामार्या | १७ | १० |
| जन्मसये | जन्मसमये | २० | १० |
| वक्रज्ञशशिभिर्घूने | वक्रज्ञशशिभिर्द्यूने | ३३ | १४ |
| घूने | द्यूने | ३३ | १६ |
| रवि भौमसौरैः श्च | रविभौमसौरैश्च | ३५ | ५ |
| कुजचन्द्रमसो घूने | कुजचन्द्रमसो द्यूने | ३५ | १३ |
| एतर्यो घूने | एतयोर्द्यूने | ३५ | १५ |
| यतदुक्तं | एतदुक्तं | ३८ | १० |
| वैपरित्येन | वैपरीत्येन | ३९ | १९ |
| बहुनी | बहूनी | ४० | १५ |
| तज्त्रै | तज्ज्ञै | ४१ | ६ |
| समचनविधाते | समवचन विघाते | ४३ | २ |
| नेयाद्याम्यदिश | नेयाधाम्यदिशि | ४५ | २३ |
| गच्छतो | गच्छन्तो | ४६ | ४ |
| रोतिण्यथो | रोहिण्यथो | ४७ | १३ |
| ज्येष्ठायी | ज्येष्ठायां | ४९ | २२ |
| आवश्यगमने | अवश्यगगने | ४९ | २५ |
| वात्रा | यात्रा | ५० | ६ |
| श्रियौ ऽर्थी | श्रेयो ऽर्थि | ५३ | १४ |
| शत्रुन् | शत्रून् | ५४ | १४ |
| पुनर्वमु | पुनर्वसु | ५७ | १४ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| मगदाधिपश्च | मगदाधिपश्च | ५७ | २० |
| पतिश्च | पतिश्च | ५७ | २१ |
| ऽ न्यश्च | ऽ न्येच | ५७ | २३ |
| मुख्यस्तु | मुख्यं तु | ५८ | १३ |
| दिशी | दिशं | ६१ | ६ |
| व्यश्नुके | व्यश्नुते | ६७ | ५ |
| शस्त्रं | शस्तं | ७३ | १६ |
| स्तत्राचार्यै | मत्राचार्यै | ७६ | २४ |
| चाचार्याह् | चाचार्य आह् | ७६ | २५ |
| स्थावरः | स्थावसरः | ८० | १३ |
| व्रह्मा | ब्रह्मा | ८२ | ६ |
| तिशा | दिशा | ८२ | १७ |
| पश्चिमस्यां | पश्चिमायां | ८२ | २० |
| दषम | दशम | ८४ | २२ |
| विद्धाश्चा | विद्धाश्चा | ८५ | ८ |
| प्रायसो | प्रायशो | ८५ | २७ |
| मुतैति | मुपैति | ८६ | १२ |
| अवलोक्त | अवलोक्य | ६१ | ६ |
| वस्य | वश्य | ६१ | १० |
| मेए | मेष | ६१ | ११ |
| वश्याः | वश्यौ | ६१ | १४ |
| कीटरासय | कीटराशय | ६१ | १४ |
| कीटससृपाणी | कीटसरीसृपाणां | ६१ | १७ |
| भिथुस्तुल | मिथुनस्तुल | ६३ | ६ |
| लिथुनतुला | मिथुनतुला | ६३ | २४ |
| बाहनाम | वाहनानाम | ६८ | ४ |
| भवतीर्थस्य | भवतीत्यर्थः | ६८ | ५ |
| क्लेशागृहे | क्लेशादगृहे | १०७ | १३ |



| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| निरिच्चणं | निरीच्चणं | ११२ | ५ |
| सहाय्य | साहाय्य | ११३ | २२ |
| रतो ऽ याथा | रतो ऽ न्यथा | ११६ | २१ |
| संथा | संस्था | १२१ | २३ |
| शुथदः | शुभदः | १२६ | १० |
| कृतो | कृतं | १२६ | १५ |
| ज्ञापकः | ज्ञापकं | १२६ | १५ |
| ददासु | दशासु | १२८ | ८ |
| ददसु | दशासु | १२८ | ६ |
| दकाफलं | दशाफलं | १२८ | ६ |
| मङ्गिक्रियते | मङ्गीक्रियते | १२८ | १४ |
| प्रमाणिकृत्य | प्रमाणीकृत्य | २२८ | १७ |
| तोयमथं | तो ऽ यं | १२८ | २१ |
| रजनिकरो | रजनीकरो | १३० | १८ |
| योगानान्येषमिति | योगानामन्येषामिति | १३२ | ८ |
| अथान्नल्लग्न | अथान्यल्लग्न | १३५ | २ |
| मणिनां | मणीनां | १३८ | ७ |
| मह आह | महमाह | १४१ | १५ |
| सञ्ज्ञा ऽऽ ह | सञ्ज्ञा आह | १४१ | २१ |
| शाचिवाः | सचिवाः | १४२ | ७ |
| दूषयीति | दूषयतीति | १४५ | १६ |
| व्यतिपात | व्यतीपात | १४७ | २२ |
| व्यतिपातः | व्यतीपातः | १४८ | १५ |
| ख्यादयो स्तत्काल | ख्यादय स्तत्काल | १५३ | २२ |
| तत्कालिका | तात्कालिका | १५८ | २५ |
| सड्गुण्य | षड्गुण्य | १६५ | ८ |
| विजिगिषो | विजिगीषो | १६८ | ७ |
| दिवसो | दिवसं | १६६ | ६ |
| रहिद्रा | हरिद्रा | १६६ | १६ |
| प्रतिसरोच्यते | प्रतिसर उच्यते | १६६ | २० |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| शास्त्रो ऽ नु | शास्त्रा ऽ नु | १८२ | १६ |
| मात्मीयाम | मात्मीयानाव | १८३ | ४ |
| प्रर्साद्ध | प्रसिद्ध | १८४ | १५ |
| हृभो | ड्भो | १८५ | ७ |
| इस्ती | हृस्ती | १८५ | ७ |
| अथान्यत् | अथान्यानि | १८५ | २१ |
| वसादिन्यः | वसादिभिः | १८८ | १० |
| ददन्ती | ददती | १८८ | १२ |
| सूर्योव्यकाले | सूर्योदयकाले | १६१ | १४ |
| चतसृ दिक्षु | चतसृसु दिक्षु | १६५ | १४ |
| पुरो धो | पुरो धाः | १६६ | ८ |
| हो | ड्ि | १६८ | १० |
| अर्थन्यद् | अथान्यद् | २०० | १६ |
| भज्ञान् | भक्ष्यान् | २०० | २० |
| षड्भिः | षड्भिः | ५०२ | १५ |
| क्षेत्रियाणां | क्षत्रियाणां | २०२ | १५ |
| अथान्याद् | अथान्यद् | २०३ | १७ |
| ब्राम्हणादिनां | ब्राम्हणादीनां | २१० | १० |
| वक्ष्यमाणो | वक्ष्यमाणं | २२१ | ८ |
| हितकारी | हितकारि | ३०७ | १२ |

# अथ वायस विरुतं व्याख्यायते

## तत्रादावेव नीडवशेन शुभाशुभत्वमाह–

१ शस्तो नीडस्तु वैशाखे पादपे निरुपद्रवे ।
देशोत्थानं तु वल्मीकचैत्यधान्यगृहादिषु ॥१॥

काकानां वैशाखेमासि निरुपद्रवेऽनुपहते वृक्षे नीडः आलयः शस्तः शिवप्रदमित्यर्थः। वल्मीके वल्मीककृते मृत्कूटे, चैत्येप्रधानतरौ चैत्यवृक्षे यत् ग्रामे प्रधानतरुः तस्मिन् । धान्यगृहे यद्गृहधान्यनियतं स्थाप्यते तत्र नीडे कृते देशोत्थानं देशोपद्रवो भवति । आदिग्रहणाद् भवने प्राकारे वा यदि वायसानां नीडं दृश्यते तदा देशोत्थानं देशोपद्रवो भवति ॥१॥

१ वैशाखमासे निरुपद्रवेषु द्रुमेषु काकस्य शुभाय नीडम् ।
निन्द्येषु शुष्केषु सकण्टकेषु वृक्षेषु दुर्भिक्षभयाय हेतुः ॥
प्रशस्तवृक्षे यदि पूर्वशाखामाश्रित्य काकेन कृतंकुलायम् ।
तद्वृष्टिरिष्टाकुशलं प्रमोदो नीरोगतास्या द्विजयश्च राज्ञः ॥
आग्नेयशाखारचिते च नीड़े स्याद्वृष्टिरल्पाग्निभयं कलिश्च ।
दुर्भिक्षशत्रूद्भवदेशभङ्गा भवन्ति रोगाश्च चतुष्पदानाम् ॥
याम्यासु शाखासु च वायसेन नीड़े कृतेऽल्पं जलपातमाहुः ।
व्याधिप्रकोपं मरणं समन्तादन्नक्षयं राजविरोधतां च ॥
नैर्ऋत्यशाखारचिते च नीड़े पश्चाद्घनो वर्षति वर्षकाले ।
पीडा नृणां विड्वरचौरभीति दुर्भिक्षयुद्धानि भवन्त्यवश्यम् ॥
नीडे कृते पश्चिमवृक्षशाखामाश्रित्य काकैः कथिताभिवृष्टिः ॥
निरोगता क्षेम सुभिक्षवृद्धिसंपत्प्रमोदाश्च भवन्ति लोके ॥
वायव्यशाखासु कृते च नीड़े प्रभूतवाताल्पजलाः पयोदाः ॥



## अथ शावकदर्शनेन शुभाशुभत्वमाह–

काकानां श्रावणे द्वित्रिचतुः शावाः शुभप्रदाः ।
चोरकश्वेतचित्राश्चवर्णा श्चौराग्नि मृत्युदाः ॥२॥

काकानां श्रावणेमासि द्वौ वा त्रयो वा चत्वारो वा शावाः पोताः शुभावहाः । चोरकं गन्धद्रव्यं तद्वर्णाः तस्करभयं ददाति, श्वेताः शुक्ला अग्निभयदाः, चित्रा नानावर्णा मृत्युदाः । काकः स्वभावात्कृष्णस्तस्य शावाः कथं तदितरवर्णा इति न भ्रमितव्यं शावाः पोताः अण्डा इत्यर्थः ॥२॥

## अन्यच्चेष्टितमाह–

१अण्डावकिरणो ध्वाङ्क्षा दुर्भिक्षमरकावुभौ ।
शावानां विकलत्वे वा निःशावत्वैकताऽथवा ॥३॥

ध्वाङ्क्षाः काकाः काक्यश्च अण्डानामेवावकिरणा अधोण्डाः परित्यज्यते, काको वा

स्युर्मूषकोपद्रवः सस्यनाश पशुक्षयोद्वेगमहाविरोधाः ॥
कुवेरशाखामधिकृत्य नीडे कृते भवेत्प्रावृषि वृष्टिरिष्टा ।
भवन्ति च क्षेमसुभिक्षसौख्यं निरोगता वृष्टि समृद्धयोऽस्मिन् ॥
ईशानशाखासु च वृष्टिरल्पा चिरं प्रजानामुपसर्गदोष ः।
स्याद्वान्धवानां कलहप्रवृत्तिमर्यादया हीयत एव लोकः ॥
वृक्षाग्रनीडे त्वतिवर्षकालो मध्ये तरोर्मध्यमतोयपातः ।
तुच्छापि वृष्टिर्नभवत्यधस्तात्स्फुटं यथोक्तं न दिशोऽस्फुटत्वात् ॥
अवृष्टिरोगारिभयादिवृद्धिं विन्द्याच्च भूमौ वलिभुक्कुलाये ।
शुष्के च वृक्षे डमरान्ननाशौ प्राकाररन्ध्रेऽरि भयंप्रभूतम् ॥
निम्नप्रदेशे तरुकोटरे वा वल्मीकरन्ध्रे अवनिष्वपीड़ ।
काकस्य नीड़े रुगवृष्टिदोषैर्भवन्ति शून्या नियमेन देशाः ॥
१ एक भवेद्वारुणमग्निसंज्ञं द्वितीयकं मारुतजं तृतीयम् ।
ऐन्द्रं तथा नाम चतुर्थमेवमण्डानि काक्याः परिकीर्तितानि ॥
काक्या भवेद्वारुणमण्डकं चेत् पृथ्वी तदा नन्दति सर्वसस्यैः ।

काकी वा तावुभौ वा अण्डं त्यजति तौ दुर्भिक्षमरकौ भवतः काकेनाण्डत्यागे दुर्भिक्षः, काक्या अण्डत्यागे मरक इत्यर्थः। तथा शावानां पोतानां विकलत्वे हीनाङ्गत्वे दुर्भिक्षमरकौ। अथवा शावकानामभाव एकताऽथवा एक एव भवति. तथाऽपिदुर्भिक्ष मरकौ भवतः।

उक्तञ्च –

वैशाखे निरुपहिते नीडः सुभिक्ष शुभदाता।
निर्मितकण्टकशुष्के दुर्भिक्ष भयानि तद्देशे॥
शरदर्भगुल्मवल्ली धान्यप्रासादगेह निम्नेपु।
शून्यो भवति स देशः चौरानांवृष्टि रोगान्तः॥
द्वित्रिचतुः शावत्वं सुभिक्षदं पञ्चभिरधान्यत्वम्।
अण्डावकिरणमेकाण्डता प्रसूतिश्च न शिवाय॥
चौरकवर्णैश्चौराश्चित्रैर्मृत्युः सितैश्च वन्हिभयम्।
विकले दुर्भिक्षभयं काकानां निर्दिशेच्छिशुभिः॥३॥

## अथान्यत्कालचेष्टितमाह–

हरेदुपनयेद्वापि यद्द्रव्यं वायसोऽग्रतः।
तन्नाशलब्धी विज्ञेये हेमपीते विनिर्दिशेत्॥४॥

वायसः काकः, अग्रतः परतो यद्द्रव्यं हरेदपहर्रति यद्वा उपनयति ढौकयति तस्य द्रव्यस्य नाशलब्धी। यद्द्रव्यं हरेत्तस्य नाशो यदुपनयेत्तस्य प्राप्तिर्ज्ञेया। अत्रैव विशेषमाह – हेमपीत इति, पीते पीतद्रव्यऽपहृते स्वर्णं नश्यति उपनीते तत्प्राप्तिरिति, इदमुपलक्षणम्। सिते रूप्यं कार्पासिके कार्पासं वस्त्रमित्यादीन्युह्यानि।

उक्तं च—

यद्द्रव्यमुपनये त्तस्य लब्धिरपहर्रति चेत्प्रणाशः स्यात्।
पीतद्रव्ये कनकद्रव्यं कार्पासिके सिते तु रूप्यमिति॥४॥

---

मन्दः प्रवर्षोऽनलसंज्ञकेऽण्डे नोतस्य बीजस्य भवेत्प्ररोहः।
जातानि सस्यानि समीरजेऽण्डे खादन्ति कीटाः शलभाः शुकाद्याः।
क्षेमं सुभिक्षं सुखिता धरित्री स्यादिन्द्रजेऽण्डेऽभिमता च सिद्धिः॥



## अथान्यदप्याह–

रक्तद्रव्यं प्रदग्धं वा न्यसेद्गेहेऽग्निदः स्मृतः।
तृणभस्मास्थिकेशाश्च शयने स्वामिमृत्युदः॥५॥

गेहे वेश्मनि रक्तद्रव्यं रक्तवर्णवस्तुरूपं प्रदग्धं वा यदि वायसो विन्यसेत्प्रक्षिपेद्वा स च अग्निदाहं करोति, तृणास्थिभस्मकेशानेतान्, शयने शय्यायां यस्य विन्यसेत्तच्छय्यायाः यः स्वामी तस्य मृत्युं ददाति॥५॥

## अथान्यदप्याह–

पुरसैन्योपरिव्योम्नि व्याकुलैरनिलाद्भयम्।
सव्यमण्डलगेस्वोत्थमपसव्ये परोद्भवम्॥६॥

पुरस्य नगरस्य सैन्यस्य सेनायाः, उपरि व्याकुलैः सोद्यमैः भ्रमद्भिः, अनिलात् वातात् भयं भवति।

उक्तञ्च—

अव्याकुलं भ्रमद्भिर्वातोद्भूत भयं भवति।

तैरेव काकैः मध्येन दक्षिणेन मण्डलेन परावर्तगतैर्भ्रमद्भिः स्वोत्थं स्वकीयजनोत्पन्न स्वयमेव वा भयं भवति। पूर्वा दक्षिणपश्चिमोत्तरा चेति सव्यमण्डलं अपसव्यं तद्विपरीतं, अपसव्यैर्वाममण्डलैः परोद्भवं शत्रुकृतं भयं भवति॥६॥

## अथान्यदप्याह–

अकार्य संहतैर्भेदोरोधश्चक्राकृतिस्थितैः।
वर्गशश्चाभिघातः स्याद्रिपुवृद्धिश्च निर्भयैः॥७॥

वायसैरकार्य संहतैः अनिमित्तं मांसादि भक्षद्रव्यादिकं वर्जयित्वा, संहतैः पुरस्य भेदो भवति। चक्राकृतिस्थितैश्चक्राकारं परिवर्त्तुलं मण्डलं कृत्वा स्थितैः पुरस्य रोधः। वर्गशोऽने-

बृन्दस्थितैः, अभिघातः स्यापद्रवो भवेत् । निर्भयैर्भयरहितैर्वायसैः, रिपुवृद्धिः शत्रुवृद्धिः ॥७॥

## अथान्यदप्याह—

उपानच्छत्रयानाङ्गशस्त्रछाया च कुट्टने ।
मृत्युं तत्स्वामिनो ब्रूयात्पूजा स्यात्तत्प्रपूजने ॥८॥

उपानत् पदत्राणं छत्रं आतपं यानाङ्गं अश्वादीनां संयमनादिकं खलीन पल्याण परिकरादिकं, शस्त्रं आयुधं छाया प्रतिबिम्बं एतेषां कुट्टने तत्स्वामिनः छत्रादीनां यः स्वामी तस्य मृत्युं मरणं ब्रूयात्, तत्पूजने तेषां पूजया कुसुमादि मङ्गलद्रव्यक्षेपणेन, तत्स्वामिनः पूजामानं भवेत् ॥८॥

## अथान्यदप्याह—

काष्ठरज्ज्वस्थिनिसारकेशकण्टकबिभ्रद्रुवन् ।
व्यालाऽहिव्याधिशस्त्राग्नि तस्करेभ्यो भयङ्करः ॥६॥

काष्ठः प्रसिद्धः रज्जुः गुणः अस्थिः प्राण्यङ्गं निः सारान्तः सुखिरः। केशाः कचाः कण्टकं प्रसिद्धः एतान् बिभ्रन् धारयन् एतान् गृहीत्वा यदि रौति तदा यथाक्रम व्यालादिभ्यो भयं भवति। काष्ठं गृहीत्वा यदि रौति तदाव्यालभयं सर्पाद्भयं रज्जुभिरपि सर्पभयं अस्थिभृत् तदा व्याधिभयं निः सारभृत् यदि रौति तदा शस्त्रभयं केशभृत् अग्निभयं कण्टकभृत् तस्करभयं करोति ॥६॥

## अथान्यदप्याह—

युद्धं सेनाङ्गसंस्थेषु मोषकृत्स्वावलेखने ।
चरन्निशि विनाशाय दुर्भिक्षं धान्यमोषकृत् ॥१०॥

सेनाङ्गं अश्वादीनां संयमनादि सेनाङ्गसंस्थेषु वायसेषु युद्धो भवति। स्वावलेखने आत्मीय



देहं चञ्च्वाऽवलिखति तदा मोषकृत् मोषं करोति, निशि रात्रौ विचरन् वायसो विनाशाय भवति। धान्यादि यदि मुष्णाति अपहरति तदा दुर्भिक्षं करोति ॥१०॥

## अन्यदप्याह—

१वामपार्श्वस्थितः श्रेष्ठो दक्षिणाद्वापि वामगः ।
ध्वाङ्क्षः पार्श्वद्वयेनापि शस्तो यात्राऽनुलोमगः ॥११॥

ध्वाङ्क्षः काकः, वामपार्श्वस्थितो यातुर्वामभागस्थः श्रेष्ठः शुभः। दक्षिणान्मध्यभागाद्वामगो वामभागं गच्छति तथापि श्रेष्ठः। पार्श्वद्वयेनापि दक्षिणे वामेतरपार्श्वे यदि यात्राऽनुलोमगो भवति। यस्यां दिशियाता गच्छति तत्रैव यदि पार्श्वद्वयेन ध्वाङ्क्षद्वयं भवति तथापि शुभदः ॥११॥

## अथान्यदप्याह—

यातुः कर्णसमं ध्वाङ्क्ष क्षेमनार्थप्रसादकः ।
वामाद्दक्षिणगो नष्टः क्रोशमानः प्रतीपगः ॥१२॥

---

१ वामेन शब्दं मधुरं विमुञ्चन्व्रजंश्च वामेन करोति काक. ।
सर्वार्थसिद्धिं पुनरागमञ्च शुभप्रवेशे तु तदन्यरूपः ॥
प्रदक्षिणं यः प्रविधाय मार्गे वामेन काको विनिवर्ततेऽसौ ।
यातुः करोति हितकार्यसिद्धिं क्षेमञ्च शीघ्रं पुनरागमञ्च ॥
पृष्ठे विरावं मधुरं विमुञ्चन्ननुव्रजं श्चाभिमतो हिताय ।
प्रायेण यातारमनुव्रजन्तः सर्वेऽपि काकैः सदृशा विहङ्गाः ॥
कृतारवो यः पुरतः प्रयाति पुरः स्थितो यो मुदमादधाति ।
कण्डूयते यश्च शिरोऽङ्घ्रिणासौ पुंसां सदाभीष्टफलं ददाति ॥
स्तम्भे गजानां नियतं गजाप्तिं गजाधिरूढः पृथिवीपतित्वम् ।
तुरङ्गमे वाहनभूमिलाभं करोति काको विजयं ध्वजे च ॥
नारीशिरः पूर्णघटस्थितस्य काकस्य शब्दैर्वनिताधनाप्तिः ।
शय्याधिरूढस्य तु तस्य शब्दैः समागमः स्यात्स्वजनेन सार्धम् ॥
धान्यं पयो वा दधि वाथ वाप्य भिगौति पश्यन्निधिलाभकारी ।
करोति लाभं पुरतः स दृष्टो यस्यास्ति वक्रे तृणमप्यशुष्कम् ॥

ध्वाङ्क्षः काको य तुर्गच्छतः कर्णसमं श्रोत्रसमीपे यदि याति तदा क्षेममावहति, लब्धपालनं क्षेम, नार्थप्रसादकः अर्थं न प्रसादयति कार्यसिद्धिर्न करोति । वामात् वामपार्श्वाद्दक्षिणगो दक्षिणं भागगतो नेष्टः न शुभः, तथा प्रतीपगः पुरस्तात् यातुरागत क्रोशमानो न शुभदः ॥१२॥

## अथान्यदप्याह–

विरुवंश्चाग्रतः पक्षौ धुन्वन्ध्वाङ्क्षो भयप्रदः ।
प्रत्युरप्युपसर्पञ्च संस्पृशञ्च तदा भवेत् ॥१३॥

ध्वाङ्क्षः काकः, अग्रतः पुरतो विरुवन क्रोशन् पक्षौ विधुन्वन् संस्पृशन् उरो वक्षस्तत्प्रति समीपे उपसर्पन् गच्छन संस्पृशञ्च स्पर्शं करोति तथा तेन प्रकारेण भयप्रदो भवेत ॥१३॥

## अथान्यदप्याह–

१ एकपादश्चलत्पक्षः काको ऽवस्कन्दचोदकः ।
वधबन्धकरः क्रोशखरसूकरपृष्ठगः ॥१४॥

काको वायसः, एकपाद एकेनैव पदेन स्थितः चलत्पक्षस्तथा भूतः अवस्कन्दचोदकः अवस्कन्द कूटेन छलेनः शत्रोरागमनं तच्चोदयति कथयति, प्रसुप्ते जने दस्युभयं प्रेरयतीत्यर्थः । खरस्य गर्दभस्य सूकरस्य वराहस्य ग्रामसूकरस्य वा पृष्ठयातः, उपरिस्थः क्रोशन् वधबन्धकरः वधस्ताडनं बन्धनं च करोति ॥१४॥

---

१ ब्रह्मप्रदेशे विरुवन् वियासोः कलत्रदोषं जनयत्यवश्यम् ।
मनुष्यमातङ्गतुरङ्गमाणां शिरो ऽधिरूढो निधनाय तेषाम् ॥
तुण्डेन पुच्छं विलिखन्स्वरेण तीव्रेण यो रौति निरीक्षते ऽर्कम् ।
एकेन पादेन तथोपविष्टो व्रजेत् सबन्धं पुरतो जनस्य ॥



## अथान्यदप्याह–

पङ्कदिग्धशरीरस्य वराहस्योपरिस्थितः ।
वायस शस्यते यातु स्तूष्णीभूतो रुवन्नपि ॥१५॥

वराहस्य सूकरस्य पङ्कदिग्धशरीरस्य पङ्केन कर्दमेन दिग्धं उपलिप्तं शरीरं यस्य तथा भूतस्य सूकरस्य पृष्ठे स्थितः वायसः काकः यातुर्गच्छतः शस्यते स्तूयते शुभः, इत्यर्थः । तूष्णीभूतो मौनमास्थितो ऽथवा रुवन क्रोशन् वा शस्यते शुभ इति ॥१५॥

## अथान्यदप्याह–

क्षीरवृक्षाजमहिषीगोः स्थितो गोरसप्रदः ।
अन्नदः पर्णविच्छेदी पानदो जलकुट्टनात् ॥१६॥

क्षीरवृक्षो वटादि अज छागः महिषी गौश्च प्रसिद्धे, एतेषु स्थितो गोरसप्रदो दध्यादिकं ददाति । पर्णविच्छेदी वृक्षाणां पर्णानि विच्छिनत्ति तदा ऽन्नं ददाति । जलकुट्टनात् उदके यदि कुट्टयति तदा पानदः पानं ददाति ॥१६॥

इति भट्टोत्पलविरचितायां यत्त्ये ऽश्वमेधीययात्राविवृतौ वायसेङ्गितं नामाऽध्यायः सप्तविंशः ॥२७॥



यात्राकाले सारमेयस्य शस्तं
पद्भ्यां मूर्ध्नो स्वाङ्गकण्डूयनञ्च ॥३॥

सारमेयस्य शूनः पूर्णास्यत्वं मांसादिना परिपूरितमुखत्वं यातुर्गच्छतः, आघ्रायकत्वं जिघ्रणं तथा तस्यैव प्रादक्षिण्यं उत्तरमार्गादागत्य अग्रतो यद्वा दक्षिणेन यदि याति, मैथुनं चानुलोम्यं यातुरानुकुल्येन मैथुनं करोति । यस्यां दिशि याता गच्छति तन्मुखमित्यर्थः । तथा स्वस्य मूर्ध्नः आत्मीयं शरीरं पद्भ्यां स्वचरणाभ्यां कण्डूयनं यात्राकाले शस्तमिति ॥३॥

वराहमिहिराचार्यकृते ऽस्मिन् मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यत्ये ऽश्वमेधीययात्राविवृतौ श्वेङ्गितं नामा ऽध्यायो ऽष्टाविंशः ॥२८॥



# अधुना मङ्गला ऽमङ्गलानि व्याख्यायते

## तत्रादावेव मार्गलक्षणान्याह—

पटुपटहमृदङ्गशङ्खभेरी—
पणवरवं सपताकतोरणाग्रम् ।
प्रचुरकुसुमतोयशान्त रेणुं
सुरभिसुवेषजनं व्रजेच्च मार्गम् ॥१॥

एवं विधं मार्गं प्रस्थानं व्रजेत् गच्छेत् । कीदृशं पटवश्चतुरा शब्दा येषां तादृशाः पटहाः आनहाः ढक्का मृदङ्गा मर्दलाः शङ्खाः दक्षिणावर्ता भेर्यो दुन्दुभ्यः पणवः, तन्त्री पटहरवा वादित्राणां रवा शब्दास्तै युतं यत्र मार्गे सपताकं पताकया सहितं तोरणाग्रं तोरणस्य वहिर्द्वारस्याग्रं शिखरं यत्र तथाभूतैः प्रचुरैः प्रभूतैः कुसुमैः पुष्पै स्तोयेन जलेन च शान्तं उपशमितं रेणु रजो यत्र तथा सुरभि सुवेषजनं सुगन्धैः सुवेषैः -शोभनवेशैर्यथोचितोष्णिक् छदादिसंयुक्तैः स्वजनैः स्वकीयहितकारीजनैर्युक्तं तथा भूतं मार्गं व्रजेदिति मार्गलक्षणम् ॥१॥

## अधुना मङ्गलान्याह--

१ सिद्धार्थका ऽऽदर्श पयो ऽञ्जनानि
बद्धैकपश्वामिषपूर्णकुम्भाः ।

---

१ कीर्तनाच्छ्रवणतो विलोकनात्स्पर्शनात्समधिकं यथोत्तरम् ।
मङ्गलाय दधिचन्दनादिकं स्यात्प्रवासभवनप्रवेशयोः ॥

उष्णीषभृङ्गारनृवर्द्धमान-
पुंयानवीणातपवारणानि ॥२॥

दधिमधुघृतरोचनाः कुमार्यो
ध्वजकनकाम्बुज भद्रपीठशङ्खाः ।
सितवृषकुसुमाम्बराणि मीनाः
द्विजगणिकाप्तजनाः सुचारुवेषाः ॥३॥

ज्वलितशिखिफलाक्षतेक्षुभक्ष्या
द्विरदमृदंकुशचामरायुधानि ।
मरकतकुरविन्दपद्मराग-
स्फटिकमणिप्रमुखाश्च रत्नभेदाः ॥४॥

स्वयमथ रचिता ऽ यत्नतो वा
यदि कथितानि भवन्ति मङ्गलानि ।
सजयति सकलां ततो धरित्रीं
ग्रहणमृगालभनश्रुतैरुपास्य ॥५॥

---

दध्याज्यदूर्वाक्षतपूर्णकुम्भाः सिद्धान्नसिद्धार्थकचन्दनानि ।
आदर्शशङ्खामिषमीनमृत्स्नागोरोचनागोमयगोधूमानि ॥
गीर्वाणवीणाफलभद्रपीठपुष्पाञ्जलनालङ्करणायुधानि ।
ताम्बूलयानासनवर्धमानध्वजातपत्रव्यजनाम्बराणि ॥
रत्नानि चामीकरताम्ररूप्यं वद्धैकपादोपधय: सुरा च ।
वनस्पतिर्नूतनशाकमेवं माङ्गल्यपञ्चाशदियं प्रसिद्धा ॥
पृथ्वीपतिर्ब्राह्मणहर्षयुक्तो वेश्या कुमारी सुहृदः सुवेषाः ।
नार्यो नराश्वा श्ववृषाधिरूढाः शुभाय दृष्टाः सकलोद्यमेषु ॥



सिद्धार्थो: गौरसर्षपाः, आदर्शो दर्पणं पयः क्षीरं, अञ्जनं नेत्राञ्जनं सौवीरादि, रज्वादिनाबद्ध एक पशुः छागादिकःआमिषं सद्योमांसं 'बद्धस्त्वेकपशुस्त्वज इति वचनात्' पूर्णकुम्भः उदरपूर्णघटः, उष्णीषः शिरःपट्टः, भृङ्गारं स्वर्णादिधातुनिर्मितः सस्तनकुम्भः भारीतिलोके, नृवर्द्धमानः नरः पुरुषो वर्धमानः समृद्धया पुत्रैर्यशसा युक्तो वा प्राक्वयस्कः, पुंयानं शिविकादि वीणा बल्लकी, आतपवारणं छत्र । दधि क्षीरविकारः क्षीरविवर्त्त: मधुमाक्षिकं घृतं आज्यं रोचना गोरोचना गोपित्तं, कुमारी कन्यका ध्वजं चिन्हं पताकादि भण्डेति, लोके कनकं स्वर्णं, अम्बुजं कमलोत्पलकल्हार कुमुदानिभद्रपीठं भद्रासनं शङ्खः प्रसिद्धः सितवृषः श्वेतवृषभ निःपुष्पाणि अम्बरं वस्त्रं श्वेतमेव मीनाः मत्स्याः जलादुद्धृताः । द्विजो ब्राह्मणः कृतनित्यक्रियो गणिका जात्यागणिका न च भ्रष्टाः, आप्तजनः स्वहितकृन्मनुष्यः. चारुवेषाः शोभनवेषधारिणा ऽन्ये ऽपि ॥ ज्वलितशिखी प्रज्वलित, वन्हिः फलानि जातीफलप्रभृतीनि. तत्कालपक्वानि, आम्रबीजपूरनारङ्गादीनि, अक्षताः यवा अखण्डिततण्डुला वा इक्षुः अकर्तितपत्राः भक्ष्याः भक्ष्यप्रकारा, अपूप-उडेरक-लड्डुकाः द्विरदो हस्ती, स च द्विरदपदोपादानात् मत्कुणेतरः । मृत् भूमेरुद्धृता मृत्तिका, अङ्कुशः करिदर्पोपशान्तकृत शस्त्रविशेषः, चामरं चमरीमृग बालव्यजनं, आयुध खड्गादि । मरकतो हरिन्मणिः कुरुविन्दः पाषाणभेदः स च इषद्धरितः पद्मरागो मणि पुष्परागः, स्फटिक, प्रसिद्धः ये चान्ये रत्नभेदाः रत्नजातयः सूर्यकान्त-चन्द्रकान्ता प्रभृतयः । स्वयमप्येति, एतानि कथिता मङ्गलानि उक्तानि शुभानि चिन्हानि स्वयमथवा रचितानि, अथ शब्द एवार्थे आत्मनैव कृतानि कथितमङ्गलानि पुरतो ऽग्रतो भवन्ति। अयत्नतो नाकस्मादेव भवति स राजा सकलां समग्रां भूमि जयति, किं कृत्वा तानि च कानिचिन्मङ्गलानि ग्रहणेनोपासनीयानि कानिचिदालभनेन कानिचित् श्रुतैः श्रवणैः सेवितव्यानि । यथा सिद्धार्थं कानिचिद्दृष्टा, यथा गणिका कानिचिदालभनेन, स्पर्शनेन यथा दधिश्रीफलादीनि, कानिचित् श्रुतैः यथा गीतवेदशब्दा एतानि मङ्गलानि उपसेवितानि ॥२-५॥

---

श्वेताम्बरा श्वेतविलेपनाढ्या माल्यं सितं मूर्द्धनि धारयन्ती ।
दृष्टा प्रकृष्टा यदि गौरवर्णा नारी नरैः स्यात्तदभीष्टसिद्धिः ॥
धृतातपत्रः शुचिशुक्लवासाः पुष्पार्चिताश्चन्दनचर्चिताङ्गः ।
निश्वासयुक्तः कृतभाजनो वा विप्रः पठन् यच्छति सर्वसिद्धिः ॥

## अथाशुभनिमित्तान्याह–

१ कार्पासौषधकृष्णधान्यलवणक्लीवास्थितैलंवसाः
पङ्काङ्गारगुडाहिचर्मशकृतः केशा ऽऽयसव्याधितः ।
बन्धोन्मत्तजडेन्धनतृणतुषक्षुत्क्षामतक्रारयो
मुण्डोऽभ्यङ्गविमुक्तकेशपतिताःकाशायिनश्चाशुभाः ।६।

कार्पासः प्रसिद्धः, औषधं यद्द्रव्यं मात्रार्थं सम्पादितं स्तदौषधं नत्वौषधी, कृष्णधान्यं कृष्णव्रीहयः लवणं कृष्णलवणं सैन्धवेतरावेति, क्लीवो नपुंसकः, अस्थि प्रसिद्धं तैलं च प्रसिद्धं वसा मेदः पङ्कं कर्दमः, अङ्गारो दग्धकाष्ठशेषः, गुड इक्षुविकारः शर्करेतरः, अहि सर्पः, चर्म प्रसिद्धः शकृत् पुरीष स च गोमयेतरः, केशा कचा, आयसं अयोविकारः कुठारलोहमुद्गरादि व्याधितो व्याध्यभिभूतः, बन्धः कृतबन्धनः, उन्मत्तो धातु वैषम्याद्विचित्तः । जड श्रोत्रेन्द्रियशून्यः, इन्धनं काष्ठं तृणानि प्रसिद्धानि तुषः प्रसिद्धः क्षुतक्ष्यामः क्षुधितः, तक्रं मथितोद्धृतसारंदधि, अरिः शत्रुः, मुण्डो मुण्डितमस्तकः, अभ्यङ्गः कृताभ्यङ्गः विमुक्तकेशः विकीर्णपतितकेशः पतितः भ्रष्टः संबलनात् भूमौ पतितो वा काषायी गैरिकरञ्जितवस्त्रः, एते सर्वे एव गमने पुरतो न शुभाः। अर्थादन्ये मध्यमा ॥६॥

वराहमिहिराचार्यकृते ऽस्मिनमतसागरे ।
अर्थिनामुत्पल श्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यच्ये ऽश्वमेधीययात्राविवृतौ मङ्गला ऽमङ्गला–ऽध्याय एकोनत्रिंशः ॥२९॥

---

१ अङ्गारभस्मेन्धनरज्जुपङ्कं पिण्याककार्पासतुषास्थिकेशाः ।
कृष्णायसा वल्कलकृष्णधान्यपाषाणविष्ठा भुजगौषधानि ॥
तैलं गुडश्चर्मवसाविभिन्नं रिक्तं च भाण्डं लवणं तृणञ्च ।
तक्रार्गलाशृङ्खलवृष्टिवाताः कार्ये क्वचित्रिंशदियं न शस्ता ॥

# अथाधुना शकुनोपदेशा ऽध्यायो व्याख्यायते

## तत्रादावेव निमित्तान्याह–

ध्वजातपत्रायुधसन्निपातः
क्षितौ प्रयाणे यदि मानवानाम् ।
उत्तिष्ठतो वाम्बरमेति सङ्गं
पतेच्च वा तन्नृपतेर्भयाय ॥१॥

प्रयाणे यात्राकाले मानवानां मनुष्याणां ध्वजश्चिन्हं, आतपत्रं छत्रं, आयुधं खड्गादि एषां क्षितौ सन्निपातः पतनं नृपते राज्ञो भयाय भवति, अथवा यातुरुत्तिष्ठतः, अम्बरं वस्त्रं कुत्रचित्समासक्तिमेति संलग्नं गच्छति न त्यजति, यद्वा वस्त्रं उत्तरीयादिकं स्कन्धादौ धृतं पतेत् पतति तदा ऽपि नृपतेर्भयाय भवति ॥१॥

## अथान्यदप्याह–

दद्रुप्रतिष्यायविचर्चिकाः स्युः
कर्णाक्षिरोगं पिटकोद्भवो वा ।
प्रायो बलेनेतरयान्नृपो वा
जानीत राज्ञा भयकारणं तत् ॥२॥

दद्रु त्वक् विकारः, तन्द्राति क्वचित्पाठः तत्पाठे आलस्यम् ।

तल्लक्षणञ्च-

हृदये व्याकुलीभावो वाक्चेष्टेन्द्रियगौरवम् ।
मनो बुद्ध्योरप्रासादस्तन्द्राया लक्षणं विदुः ॥इति

विचर्चिका त्वक्विकारो पादयोः, एताः स्युर्भवेयुः कर्णयोः श्रोत्रयोः. अक्ष्णो नेत्रयोर्वा तत्कालरोगः पीडा अथवा पिटकोद्भवः पीटकस्योत्पत्तिः । प्रायो बाहुल्येन बले सेनानां नृपाङ्गे वा राजनि भवति तदा तद्राज्ञो नृपस्य भयकारणं भयनिमित्तं जानीत विन्द्यात् ॥२॥

## अथान्यदप्याह-

उत्तानशय्यासनवातसर्गा
निष्ठ्यूतदुर्दर्शनकामितश्च ।
नेष्टानि शब्दाश्च तथैव यातु-
[1] रागच्छ तिष्ठ प्रविश स्थिराद्याः ॥३॥

उत्ताना ऊर्ध्वमुखी शय्या उत्तानमासनं, शयनपर्यङ्क मध्यासनपर्यङ्क पीठादि, वातसर्गः सम्मुखवाताधिक्यं निष्टयूतं मुखशब्दः दुर्दर्शनं दुष्टसत्वस्य वृश्चिकादिदर्शनं कामितं कामः, एतानि सर्वाणि नेष्टानि न शुभानि, यातुः गच्छतः. तेनैव प्रकारेण भाषितानि, आगच्छ एहि तिष्ठ, अत्रैव स्थियतामिति, एते शब्दाः स्थैर्यवाचकाः ते सर्वे नेष्टाः, आदिग्रहणादन्ये विरोधवाचकाः । ते ऽपि अनिष्टाः । गच्छ गच्छेति शकुनः स्थेयं स्थेयमिति नेष्टं क्वः किमर्थं किं प्रयोजनं कस्मादिति शंसयश्च नेष्टः, अनया दिशालापनियम् ॥३॥

---

१ गच्छेति पृष्ठे पुरत स्तथेहि वागीदृशी केनचिदुच्यमानाम् ।
सर्वाशिषश्चातिशयेन ताभ्यश्चित्तस्य तुष्टिर्विजयाय पुंसाम् ॥
सिद्ध्यै विरावा जहि छिन्धि भिन्धि चेत्यादयः शत्रुवधोद्यतानाम् ।
क्वयासि मागच्छ तथैवमाद्याः प्रयोजनारंम्भनिवारणार्थाः ॥



## अथ शाकुननिश्चयमाह-

कार्यंस्तु मूलशकुने ऽन्तरजे तदन्हि
विन्द्यात्फलान्नियतमेवमिमे विचिन्त्याः ।
प्रारम्भयानसमये तु तथा प्रवेशे
ग्राह्यं[1] क्षुतं न च शुभं क्वचिदप्युशन्ति ॥४॥

मूलशकुनः प्रथमशकुनः, तस्मिन् कार्यं यात्रा कार्यं विन्द्यात् जानीयात्, तस्मिन् शुभे यात्रा सिद्धिः, अशुभे असिद्धिरिति । अन्तरजे तदन्हेव यातुर्मूलशकुनात् परतो यावदभियोगस्तदन्तरे मध्ये यो ऽन्यः शकुनः शुभाशुभो भवति, तदन्तरजे मध्यजाते तस्य यत्फलं तदन्हि तस्मिन्नेव दिने विन्द्यात् । इमे ऽस्मिनध्याये ये शकुना उक्तास्ते नियतं सर्वकालमेव परेण प्रकारेण चिन्त्याः चिन्तनीयाः, प्रारंभकाले सर्वकर्मणां यानसमये यात्राकाले तथा प्रवेशे गृहप्रवेशे, एतेषु कार्येषु सर्वेषु शकुनाः चिन्तनीयाः, तथा क्षुत्कृतं नासाशब्दः सर्वथा

---

१ अथ क्षुताख्यं शकुनं क्रमेण महाप्रभावं प्रतिपादयामः ।
त्रस्यन्ति यस्माच्छकुनाः समस्ताः मृगाधिनाथादिव वन्यसत्वाः ॥
सर्वस्य सर्वत्र च सर्वकालं क्षुतं न कार्यं क्वचिदेव शस्तम् ।
जाते क्षुते तेन न किञ्चिदेव कुर्यात्क्षुतं प्राणहरं गवां तु ॥
निषिद्धमग्रे ऽक्षणि दक्षिणे च धनक्षयं दक्षिणकर्णदेशे ।
तत्पृष्ठभागे कुरुते ऽरिवृद्धिं क्षुतं कृकाढयां शुभमादधाति ॥
भोगाय वामश्रवणस्य पृष्ठे कर्णे च वामे कथितं जयाय ।
सर्वार्थलाभाय च वामनेत्रे जातं तं स्यात्क्रमतो ऽग्रथैव ॥
यदाहलल्लः
प्रापूय गच्छ विसर्जय निर्गच्छ व्रज संसर्पेति सिद्धिकराः ।
खल्वतेभ्वप्यधिकाः प्रमोद जयं जवी शब्दाश्च ॥
मागास्तिष्ठ निवर्त श्व गम्यते मूढ दुर्मतेः मोहात् ।
यात्रां नेच्छन्ति बुधाः क्षुतकासित यतिशब्दैश्च ॥

श्राद्धं श्रुत्वा नकिञ्चित्कार्यं कार्यमित्यर्थः । यतः क्वचिदपि न शुभं उशन्ति कथयन्ति, सर्वत्राशुभं क्षुतमिति ।

तत्र वदन्ति केचित्-

क्षुत सर्वं त्वशुभदं गो क्षुतं मरणप्रदम् ।
आसने वाहनारोहे परिधाने च भोजने ॥
विद्यारम्भे बीजवापे क्षुतं पट्सु तु शोभनम् ॥४॥ इति

## अथानिष्टशकुनविरुते सति तत्कर्तव्यमाह-

क्रोशादूर्ध्वं शकुनविरुतं निष्फलं प्राहुरेके
तत्रानिष्टे प्रथमशकुने मानयेत्पञ्च पट् च ।
प्राणायामान्नृपतिरशुभे षोडशैवं द्वितीये
प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टस्तृतीयः ॥५॥

एके आचार्याः कश्यापदयः क्रोशादूर्ध्वं क्रोशान्तरं यच्छकुनविरुतं तन्निष्फलं प्राहुरुक्तवन्तः ।

तथा च कश्यपः-

क्रोशादनन्तरं यत्स्याच्छुभं वा यदि वा शुभम् ।
निष्फलं तच्च विज्ञेयं शकुनानां विचेष्टितम् ॥

एवं क्रोशं यावच्छुभप्रमाणं सफलं क्रोशादनन्तरं निःफलमिति । एतदाचार्यस्य नाभिप्रेतं, तत्रानिष्टे प्रथमशकुने इति, तत्र तस्मिन प्रथमपदशकुने ऽनिष्टे अशुभे सति पञ्च पट् च एकादशप्राणायामान मानयेत् पूरयेत् ।

प्राणायामलक्षणम् -

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठित्वा ततः प्राणः प्राणायामः स उच्यते ॥



व्याहृतयः ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं प्रणवः, ॐकारः शिरः आपोज्योतिरसोमृतम, गायत्री प्रसिद्धा आयत प्राणः परित्यक्तः श्वासः त्रिः त्रीन् वारान् पठेत् । एवमनेन प्रकारेण द्वितीये शकुने अशुभे षोडश नेष्टः अशुभः तदा स्वभवनं आत्मीयगृहं प्रत्यागच्छेत , तत्प्रतीयमागच्छेत् ॥५॥

## अधुना शकुनोपसंहारार्थमाह-

चक्रे वरामिहिरः शकुनोपदेशं
तदुद्देशतो मुनिमतान्यवलोक्य सम्यक् ।
यद्ग्रन्थविस्तरभयादविजानता वा
नोक्तं तदन्यकथितादपि चिन्तनीयम् ॥६॥

वराहमिहिरः मुनिमतानि मुनिप्रणीतशास्त्राणि सम्यक् विलोक्य दृष्ट्वा शकुनोपदेशं शाकुनज्ञानकरं चक्रे कृतवान् । कथं उद्देशतः, संक्षेपतः अत्र शाकुने मया ग्रन्थविस्तरभयात् अविजानता ज्ञानाभावात् वा मया नोक्तं न कथितं तत् अन्यकथितात् शास्त्रात् विचिन्तनीयम् लक्ष्यमित्यर्थः ॥६॥

वराहमिहिराचार्य कृते ऽस्मिन् मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

**इति भट्टोत्पलविरचितायां यत्र्ये ऽश्वमेधीययात्राविवृतौ शकुनोपदेशा ऽध्यायस्त्रिंशः ॥३०॥**



# अधुना निवेश[1]लक्षणाऽध्यायो व्याख्यायते

## तत्रादावेभूवलक्षणमाह—

स्निग्धस्थिरासुरभिगुल्मलता सुगन्धा
शस्ता प्रदक्षिणजला च निवासभूमिः।
नेष्टा विपर्ययगुणा कच शर्करास्थि
वल्मीककण्टकविभीतकसङ्कुला च ॥ १ ॥

एवं विधा प्रस्थितस्य सेना निवासभूमिः शस्ताः प्रशस्ताः, किदृशी स्निग्धा स्नेहयुक्ता स्थिरा दृढा हन्यमानेप्यधो नयाति सुरभियुक्ता सुगन्धा गुल्मलता, 'यत्रैकमूलशाखासमूहो गुल्मः' एता प्रसिद्धा सुगन्धाः शोभनगन्धा प्रदक्षिणजला प्रदक्षिणेन जलं वहति यस्यां एवं विधा शस्ता शोभना, अतो विपर्ययगुणा विपरीतगुणसंयुक्ता नेष्टा न शुभा, अस्निग्धा अस्थिरा दुर्गन्धा दुर्गन्धगुल्मलतोपेता अप्रदक्षिणजला तथा च कचैः केशैः शर्करै मृत्काण्डैरस्थिभिर्वल्मीकैः वल्मीककृतमृत्पुञ्जैः कण्टकैः सकण्टकवृक्षैर्विभीतकवृक्षैः 'विभीतकोवरडेतिलोके' विभीतकेरण्डस्नुक्प्रभृतिवृक्षाणां ग्रहणं, एतैरशुभवृक्षैः सङ्कुला व्याप्ता सा नेष्टा ॥१॥

## अधुना स्कन्दावारस्थितस्य राज्ञः प्रयोजनमाह—

गत्वालयं सुरगुरु द्विजसाधुमित्र—
तीर्थेतिहासजयपुण्यकथासु तिष्ठेत्।

१ निवेशो वासभूमिः।



हत्वा पशुं रिपुगृहाऽऽकृतिमुद्यमे च
प्राश्याऽथवा तमयमस्य विधाय रूपम् ॥२॥

प्रस्थितो राजा निवासालयं निवासगृहं गत्वा तत्र च सुरगुरुद्विजसाधुमित्रतीर्थेतिहास-जयपुण्यकथासु तिष्ठेत्, सुरा देवा गुरवो माजन्यनाः द्विजाः ब्राह्मणाः सज्जनाः मित्राणि सुहृदं एषां सह तीर्थानां गङ्गाकेदारप्रयागरूपाणां इतिहासानां भारतरामायणपुराणानां कथा सुजय-संयुक्ता वीरोत्कर्षवर्णनरूपा या कथा पुण्यमङ्गलकथा धर्मसंयुक्ता या कथा तासु कथासु तिष्ठेत् अनुरक्तो भवितव्यमिति । अथानन्तरं तन्मयं तद्रूपं रिपुगृहाकृतिं वा पशुं उद्यमे-नार्थात् हत्वा व्यापाद्य तं भुक्त्वा यायात्, यं प्रतिपक्षिणमुद्दिश्य यात्रां कर्तुमुद्यतस्तस्य यो राशिः यज्जन्मलग्नं तद्रूपो यः पशुस्तं छागादिकं हत्वा प्राश्य भुक्त्वा यायात्, अथवा यद्राशिरूपः प्राणी भवेत्स यदि भक्षो नभवेत्तदा अस्य रिपो राशिलग्नयोश्चान्नमयं पिष्ट-मयं शर्करामयं वा रूपं कृत्वा विधाय तं प्राश्य यायात् ॥२॥

## अथ यात्रायां मतान्तरमाह—

एकत्राऽध्युषितस्याऽत्रिगौतमच्यवना जगुः।
यात्रा पञ्चत्रिसप्ताहात्पुनर्भद्रेण[1] योजयेत् ॥३॥

अत्रिगौतमच्यवना मुनयः यात्रा पञ्चत्रिसप्तात् एकत्र अध्युषितस्य, एकस्मिन् स्थाने त्र्यहं पञ्चाहं, सप्ताहं अध्युषितस्य स्थितस्य पुनः भूयः, तस्माद्देशात्स्थानात् भद्रेण १ भद्रफलप्रदेन शुभलग्नेन यात्रां योजयेदिति जगु उक्तवन्तः । तद्युक्तं यस्मादर्थे ।

ऋषिपुत्र आह-

गौतमो भगवानाह पुनर्दैवं ······ ··· ।
पञ्चरात्रात्परं वापि वसिष्ठ प्रत्यभाषतः ॥

१ अत्र केचिद्भद्रेण भूपतेरिति पठन्ति ।

वारदात्रिभरद्वाजगर्गभागुरिदेवलाः ।
सप्तरात्रादि हेस्यन्ति पुनर्दैवस्य सम्पदम् ॥
तस्मात्कालातिपातेषु यात्रासाफल्यमिच्छता ।
शौनको पिप्पलादश्च महाथर्वविशारदौ ॥
तथैवाङ्गिरसः श्रेष्ठो दशरात्राद्बृहस्पति ।
तस्मात्कालातिपातेषु यात्रासाफल्यमिच्छता ॥
पञ्चरात्रोषिता सेना योक्तव्या दैवसम्पदा ।
तस्मात्पञ्चत्रिसप्ताहात्पुनर्भद्रेण योजयेत् ॥ इति पाठोनिश्चितः ॥

तथा च काश्यपः–

यात्रायां निर्गतो राजा त्र्यहं पञ्चाहमेव वा ।
सप्ताहं वा स्थितो यत्र पुनस्तमाच्छुभे दिने ॥
शुभलग्ने च दातव्या यात्रा येनाप्नुयाच्छुभम् ॥३॥

## एतदेव दूषयन्नाह–

**तच्चायुक्तमिदं प्राहुर्होराशास्त्रविदो जनाः ।**
**वाञ्छितार्थफलप्राप्तौ यात्रा परिसमाप्यते ॥४॥**

यदुक्तं यात्रायां 'पञ्चत्रिसप्तरात्रात्पुनर्भद्रेण योजयेदित्येतत्' होराशास्त्रविदो जनाः होराशास्त्रपण्डिताः, अयुक्तं अयोग्यं इति प्राहुः कथयन्ति, यतो वाञ्छितार्थफलप्राप्तौ वाञ्छितस्य अभिलषितस्य, अर्थस्य यदर्थं यात्रा दत्ता तत्फलावाप्तौ तल्लाभे यात्रा परिसमाप्यते न च पुनः पञ्चत्रिसप्ताहादिति । तस्मात् यावत्कार्यप्राप्तिर्न जाता तावत्सैव यात्रायां प्रस्थितो यात्रायां निर्गतो राजा प्रथमे ऽहनि किं प्रमाणमध्वानं गच्छेदित्यत्रोच्यते । क्रोशमात्रमेव, कुत एतल्लभ्यते तदुच्यते ।

यस्माद्बादरायणः–

तस्मात्क्रोशं गच्छेदाद्ये ऽहनि पार्थिवे विजयकाङ्क्षी ।
न्यूनं द्वित्रिक्रोशे च काले गतिभङ्गदोषाः स्युः ॥इति॥



तस्मादाद्यैव यात्रा प्रथमदत्ता सैवेति ।
उक्तञ्च–

शुभलग्ने निर्यातो राजा विनिवर्तते फलप्राप्तौ ।
जित्वा सकलान् शत्रून् पुनस्तत्रा ऽऽ दिशेल्लिङ्गम्[१] ॥४॥

## अथ ऽभियोज्यलक्षणं व्याख्यायते

तत्रादावेव तल्लक्षणमाह–

**आक्षेपशीलः पुरुषाभिधायी**
**विरक्तभृत्यः परदारगामी ।**
**लुब्धो ऽसहायो व्यसनी कृतघ्नः**
**स्थितिप्रभेत्ता ऽऽकरशीर्णराष्ट्रः ॥५॥**

**विश्रंमहाक्रोधपरो नृशंसः**
**क्षुद्रः प्रमादी न बहुश्रुतश्च ।**
**दिव्यान्तरिक्षक्षितिजैर्विकारै–**
**र्निष्पीडितो यश्च सदैव हीनः ॥६॥**

एवं विधो यो राजा सदैवहीनः दैवेन प्राक्तनशुभकर्मणा हीनो रहितो ज्ञेयः, आक्षेपणं शीलं स्वभावो यस्य सर्वसत्वात्, अर्थलोभात् निष्कारणं आक्षिपति पुरुषा ऽभिधायी अप्रियवाक , विरक्ता भृत्या यस्य वा भृत्येषु विरक्तः विद्विष्टः, परदारगामी परेषां स्त्रीणां आसक्तः लुब्धो लोभाभिभूतः, असहायः नृपान्तरसहायशून्यः व्यसनी स्त्री कपोता ऽक्षा–मृगयाजलक्रीडानृत्यगीतपरोक्षनिन्दामद्यादिषु व्यसनेषु, अनुरतः, कृतघ्नः उपकाराकरणशीलः स्थितिप्रभेत्ता प्राक्तनैकृताया स्थितिर्मर्यादा तस्यास्थितेर्भेत्ता निराशकराः । आकरं अर्थोत्पत्तिस्थानं शीर्णं नष्टं यस्य शीर्णं नष्टं राष्ट्रं यस्य । विश्रंमहा विश्वासघातकः क्रोधपरः क्रोधशीलः नृशंसः क्रूरः क्षुद्रो न्यायरहितः प्रमादी प्रमादशीलः न बहुश्रुतो मूर्खः दिव्यै-

१ लिङ्गं भूनिवेशलक्षणम्

विकारैर्ग्रहनक्षत्रसमुद्भवैः उत्पातैः, आन्तरिक्षैः उल्कानिर्घातपवनपरिवेषगन्धर्वपुरपुरन्दरचापादिभिः क्षितिजैः भूकम्पादिभिर्यो राजा निपीडितः उपहतः सदैव हीन इति ॥५-६॥

## अथान्यदप्यभियोज्यकलक्षणमाह–

अतो विपर्यस्तगुणेन राजा
तादृग्विधो ऽरिस्त्वभियुक्तमात्रः ।
तरुर्घुणैर्जग्ध इवात्तवीर्यो
महानपि क्षिप्रमुपैति भङ्गम् ॥७॥

तादृग्विधो निरुक्तलक्षणैरयुक्तः शत्रुः, अतो ऽस्मादुक्ताद्विपर्यस्तगुणैर्विपर्ययगुणैरुक्तैर्युक्तेन शुभदैवयुक्तेन अभियुक्तमात्र, आप्तवीर्य प्राप्तबलो ऽपि महान्नुसाहयुक्तो ऽपि क्षिप्रं आश्वेव भङ्गं उपैति, तरुर्घुणै र्जग्ध इव घुणैः कृमिभि र्जग्धो भक्षितो महानपि तरुर्वृक्षः क्षिप्रं सहसा भङ्गं उपैति तद्वत् ॥७॥

## अथा ऽभियोज्यलक्षणं व्याख्यायते--

विद्विष्टाः प्रवरनराः प्रतापहीना
निःशौचा मृतवरवारणा ऽश्वयोधाः ।
सोत्पाताः प्रकृतिविपर्यया ऽनुयाता
शोकार्ता रिपुवशमाशु याति सेना ॥८॥

एवं विधा सेना आशु क्षिप्रं रिपुवशं शत्रुविधेयत्वं याति गच्छति। किदृशी विद्विष्टप्रवरनरा प्रधाना नराः पुरुषा विद्विष्टा यस्यां सा तथा भूता। प्रतापहीना प्रतापेन पुरुषकारेण हीना रहिता निःशौचा शौचाचाररहिता मृतावरवारणा प्रधानगजाः वराश्वाः प्रधानतुरगा वरायोधा शूराश्च मृता यस्यां, सोत्पाता उत्पातैर्दिव्यान्तरिक्षभौमैर्युता प्रकृति विपर्ययानुयाता प्रकृतिः स्वभावः तद्विपर्ययं विपरीतं अनुयाता प्राप्ताः शोकेन व्यसनेन आर्ता पीडिता एवं विधा रिपुवशं याति ।



उक्तञ्च —

निद्रा ऽऽलस्यावनतवदनाः केचन स्वप्नशीला
भ्रष्टाचारा मलिनपरुषच्छायया क्रन्ददेहाः ।
दीर्घश्वासाः सजलनयनाः शोकलोभाभिभूताः
सैन्ये यस्य द्विजगुरुसुहृद्द्वेषिणश्चैव योधाः ॥

अकारणप्रोद्गतरोमकूपा
जये निराशाः प्रकृतेरपेताः ।
अमङ्गला चेष्टितजातहासाः
सैन्ये नरा यस्य सदाभियोज्या ॥इति॥८॥

## अधुना शुभचेष्टितमाह–

सङ्ग्रामे वयममरद्विजप्रसादा–
ज्जेष्यामो रिपुबलमाश्वसंशयेन ।
यस्यैवं भवति बले जनप्रवाद
सोल्पो ऽपि प्रबलबलं परं निहन्ति ॥९॥

यस्य राज्ञो बले सेनायां एवं विधो जनप्रवादः जनानां प्रवादो भवति स राजा, अल्पो ऽपि अल्पसैन्यो ऽपि प्रवरबलं अतिवीर्यं परे शत्रुं निहन्ति घातयति, सङ्ग्रामे समरे वयं असंशयेन, अमराणां देवानां द्विजानां ब्राह्मणानां च प्रसादात हि प्रबलं शत्रुं आशु क्षिप्रमेव जेष्याम इति सेनालक्षणम् ॥९॥

## अथ वातलक्षणमाह–

प्रक्षिप्तक्षुपपांशुपत्रविहगच्छत्रध्वजाग्रान्तकृत्
दुर्गन्धः करिदानशोषजनकः सावर्तलोष्टोत्करम् ।

यातुर्वायुरनिष्टदः शुभकरो यात्रानुगो ऽल्पोद्यमः
प्ल्हादी सुरभिः प्रदक्षिणगति स्वादुश्च वृद्धिप्रदः ॥१०॥

एवं विधो वायुः अनिलः यातुर्गच्छतो ऽनिष्टः अशुभः । कीदृशः प्रकर्षेण उत्क्षिप्ताः क्षुपा तृणादिनो पांशुः रजः पत्राणि पर्णानि विहगाः पक्षिणः, एते उत्क्षिप्ताः ऊर्ध्वं नीता येन तथा, छत्राणां आतपत्राणां ध्वजानां प्रसिद्धचिन्हानां अन्तकृत् भङ्गकारी दुर्गन्धो दुष्ट-असुरभिः हस्तिनां करिणां दानं मदं तच्च पानीयरूपं तस्य शोषं जनयति उत्पादयति सहावर्तः आवर्तेन भ्रमणेन युक्तः तृणवर्तकृत्, लोष्टानां मृत्सिकतादि वा तेषां उत्कर ऊर्ध्वं नीत्वा प्रक्षेपकृत्, एवं विधो वायुरनिष्टकरः । अथैवं विधो वायुः शुभकरः, कीदृशः यात्रानुलोमः यात्रायां अनुगच्छति यातुः पश्चाद्वहतीत्यर्थः, अल्पोद्यमो मृदुगतिर्मन्दगामी प्रल्हादि, गन्तुराल्हाददः देहसुखजनकः सुरभिः सुगन्धः प्रदक्षिणगतिः प्रादक्षिण्येन गतिर्यस्य प्रादक्षिण-पश्चिमोत्तरादिक्रमेण याति, स्वादुः मिष्टगन्धः एवं विधो वायुः शुभदः यातु शुभं ददातीति वातलक्षणम् ॥१०॥

## अथ मेघलक्षणमाह–

पृथुघनमनुलोमस्निग्धमंभोदवृन्दं
तरुनगनगरेष्टद्रव्यसत्वानुकारी ।
जयदमुभयपार्श्वादिस्थितं पृष्ठतो वा
न शुभकरमतो ऽन्यद्यानकाले नृभर्तुः ॥११॥

एवं विधं अम्भोदवृन्दं मेघसमूहं नृभर्तुः राज्ञो यानकाले यात्रासमये जयदं भवति । कीदृशं पृथुघनं अतिनिबीडं पृथु विस्तीर्णं घनं संततं अनुलोमं यात्रिकानुगम् यत्र यात्रिको याति तदनु तद्दिक्गं स्निग्धं अरुक्षं तथा तरु वृक्षः नगाः पर्वताः नगरं पुरं इष्टद्रव्याणि भृङ्गारबालव्यजनध्वजादीनि इष्टसत्वानि अश्वादय, एषामनुकारि सदृशरूपं जयदं भवति जयं ददातीत्यर्थः । यातुर्गमनशीलस्य पार्श्वद्वये दक्षिणोत्तराधिष्ठितं व्याप्तं येन पृष्ठतो वा यातुः पश्चात् स्थितं तदपि जयदं भवति । अतो ऽस्मात् उक्ताल्लक्षणान्मेघवृन्दात् अन्यत् परं न शुभम्, अपृथुं अघनं अनुलोमं रुक्षं दुष्टसत्वानां खरकरभवानराणां सदृशं अग्रगं विलोमगम् ॥११॥



## अथान्यदप्याह–

निन्दितसत्वपिसाचविचित्रो
पिशितभुजाकृतयः परुषाश्च ।
वज्रमुचः क्षतजाश्ममुचो वा
बलभयमाशु घनाः कथयन्ति ॥१२॥

एवं विधा घना मेघा यात्राकाले दृष्टा, आशु क्षिप्रं एवं बलस्य सेनाया भयं कथयन्ति । कीदृशाः निन्दिताः कुत्सिताः सत्वाः प्राणिनः काकोष्ट्रजम्बुकोष्ट्रसदृशाः पिशाचा देवयोनयः विकृतरुपाः तत्सदृशाः विचित्रा नानाकृतयो नानावर्णाश्च पिशितं मांसं भुङ्क्ते अश्नाति यः राक्षसः तदाकृतयस्तत्सदृशाः परुषाः रुक्षाः वज्रं अशनिं मुञ्चन्ति वज्रमुचः क्षतजं रक्तं, अश्म पाषाणं मुञ्चन्ति वर्षन्ति एवं विधानिष्टा ॥१२॥

## अथान्यदप्याह–

भृशं क्षरन्तो रुधिरारुणाभाः
सशक्रचापाः खररुक्षनादाः ।
रणोपयोज्या त्वतिचित्ररूपा
रणाय दृष्टा गमने ऽम्बुवाहाः ॥१३॥

गमने यात्रायां दृष्टा मेघाः रणाय सङ्ग्रामाय भवन्ति । कीदृशाः भृशं अत्यर्थं क्षरन्तो वर्षन्तः रुधिरस्य रक्तस्य अरुणस्य भा कान्ति र्येषां तथा सशक्रचापा इन्द्रधनुपोपेता खररुक्षनादा खरस्यैव रुक्षो नादः शब्दो येषां रणे सङ्ग्रामे ये उपयुज्यन्ते आयुधास्तत्सदृशी आकृतिर्येषां चित्ररूपा नानावर्णा इति ॥१३॥

## अथ वृष्टिलक्षणमाह–

सप्ताहान्तर्बलभयकरी वृष्टिरन्यर्तु जाता
केचिद्यात्रामसितजलदैः प्रोज्झितां पूजयन्ति ।

चित्राभ्रायां बलपति वधो रुक् च पीताम्बुजायां
क्षुब्धोष्णायां भवति नचिरात् व्यम्बुदायां विनाशः।१४।

अन्यर्तु जाता वर्षाकालं वर्जयित्वा, अन्यस्मिन् ऋतौ सप्ताहात्सप्ताहमध्ये यात्रायां वृष्टि-र्जाता बलस्य सेनाया भयकारी भवति, केचिन्मुनयो वसिष्ठादयः, असितजलदैः कृष्णमेघैः प्रोज्झितो वर्जितो यात्रायां पूजयन्ति।

तथा च भगवान् वसिष्ठः-

कुन्देन्दुसदृशा मेघा हंसगोक्षीरपाण्डुराः।
सुस्निग्धाः सुप्रसन्नाश्च यात्राकाले प्रपूजिताः॥ इति॥

चित्राभ्राया भवति, चित्रा नानावर्णा अभ्रोद्भूतायां दृष्टौ बलपतेः सेनापतेः वधो मरणं भवति। पीताम्बुदायां पीतमेघोद्भूतायां रुक् रोगा भवन्ति, उष्णायां दृष्टौ न चिराच्छीघ्रमेव दुश्चिक्यभयं भवति, धूमाम्बुदायां विगतमेघायां विनाशो भवति ॥१४॥

## अथान्यदप्याह-

वाहनानि सव्यगा हन्ति योषितो ऽन्यथा।
पञ्जराकृतिस्थिता सर्वतो दलेश्वरम् ॥१५॥

सव्यगा यातुर्दक्षिभागगाः वृष्टिर्वाहनान् अश्वादीन् हन्ति, अन्यथा वामभागगाः योषितः हन्ति। सर्वतः सर्वासु दिक्षु पञ्चराकृतिस्थिता दलेश्वरं सेनापतिं हन्ति घातयति ॥१५॥

## अथेन्द्रचापगर्जितयोर्लक्षणमाह-

चापमैन्द्रमनुलोममखण्डं
प्रोज्ज्वलं बलहमायतमिष्टम्।



स्फुर्जितं¹ सलिलकुम्भनिषेक-
क्षोभितार्णवसमं विजयाय ॥१६॥

ऐन्द्रं चापं इन्द्रधनुः, अनुलोमं पृष्ठवर्तिनं, अखण्डं सकलं प्रोज्ज्वलं सतेजस्कं बलहं घनं आयतं दीर्घं अत्युच्चं एवं विधं इष्टं शुभप्रदं। कुम्भे कलशे सलिलनिषेके यथा शब्दं उच्चरति तादृक् शब्दं तथा क्षोभितस्य क्षुब्धस्य, अर्णवस्य समुद्रस्य यादृक् शब्दस्तादृशं स्फुर्जितं गर्जनं राज्ञो विजयाय भवति ॥१६॥

## अथ तडिदशनिनिपातलक्षणमाह-

तन्वी प्रलम्बा विजयाय दीर्घा
तड़ित् घनस्फुर्जितवर्जिता च।
शस्तो ऽशनि श्चास्य समीपजातः
प्रदक्षिणेनाप्यति वातशब्दः ॥१७॥

तडित् विद्युत् तन्वी सूक्ष्मा प्रलम्बा लम्बायमाना दीर्घा घनस्फुर्जितवर्जिता मेघ-निर्घोषरहिता विजयाय भवति, यातुः अशनिः, असमीपजातो दूरोत्पन्नः शस्तः, अर्थादतिसमीपे न शस्त इति। स च प्रदक्षिणेनापि शस्तः, अतिवातो वातरयः शब्दोऽप्यन्तरिक्षे प्रदक्षिणेन गच्छन् शस्तः सत्फलदः। अशनि लक्षणम् "अशनि स्वनेन महता नृगजाश्वसृगालवेश्मतरुपशुषु निपतति विदारयति धरातलं चक्रस्थानेति।" तस्या ऽशन्या एवातिवातः शब्दो ऽतीवपतमानादवगतोनादः प्रदक्षिणेना ऽपि शस्तः शुभः ॥१७॥

## अथोल्कालक्षणमाह-

लग्नार्केन्दू निघ्नती शास्ति पौरान्
उल्का हन्याद्यातु पौरग्रहाश्च।

---

१ स्फुर्जितं मेघशब्दः।

यातुः शस्ता संयुता वा ध्रुवर्क्षे
नेष्टा ऽ तो ऽ न्या धूमिनी श्यावरुक्षा ॥१८॥

या उल्का लग्ने उदये अस्तमये वा अर्केन्दू सूर्याचन्द्रमसौ निघ्नन्ति हन्ति सा पौरान् एव शास्ति अनुशासनं करोति, अर्थात् उपतापयति, पौरग्रहाः गुरुरविविधुजा इति, या उल्का ध्रुवनक्षत्रे दृश्यते सा यातुः शस्ता शुभदात्री 'ध्रुवाणि त्र्युत्तरा रोहिण्य' ध्रुवाद्-न्यर्क्षाणि नेष्टा अशुभा, अथ या च धूमिनी सधूमा श्यावा कपिसरूपा रुक्षा सापि यातु-र्नेष्टा अशुभफला । उल्का कीदृगतः ।

उल्कालक्षणम्-

उल्का शिरसि विशाला निपतति प्रवर्द्धते प्रतनुपुच्छा ।
दीर्घा भवति पुरुषं भारावहो भवन्त्यस्याः ॥इति ॥१८॥

## अथ भूगर्जितलक्षणमाह-

हन्यात् नृपपौरराष्ट्रिकान् भृत्याम्भोरुहतस्करद्विजान् ।
वेलाक्रमशो दिनादितः काष्ठां ताश्च स यत्र भूस्वरः ॥१९॥

भूस्वरः भूमिशब्दः दिनादितो दिनप्रारम्भात् सूर्योदयात् वेलाक्रमशः इत्यनेनाहोरात्रं सप्तभिभागं परिकल्प्य तत्रादिमे भागे नृपं राजानं हन्ति । द्वितीये भागे पौरान् पुरवासिज-नान् हन्ति । तृतीये भागे राष्ट्रिकान् राज्याश्रितान् हन्ति । चतुर्थभागे भृत्यान् सेवकान् हन्ति । पञ्चमे भागे अम्बोरुहान् जलजान् हन्ति । षष्ठे भागे तस्करान् चौरान् हन्ति । सप्तमे भागे द्विजान् ब्राह्मणान् हन्ति । स च भूस्वरो यस्यां काष्ठायां भवति तां दिशं हन्यात् इति भूगर्जितलक्षणम् ॥१९॥

## अथ सन्ध्यालक्षणमाह--

शस्ता शान्ता द्विजमृगघुष्टा
सन्ध्या स्निग्धा मृदुपवना च ।



पांशुध्वस्ता जनपदनाशं
धत्ते रुक्षा रुधिरनिभा च ॥२०॥

या सन्ध्या तन्मधुरस्वरैः अकाभिमुखैश्च द्विजैः पक्षिभिः मृगैररण्य पशुभिः घुष्टाः कृतशब्दाः स्निग्धाः निर्मलाः मृदुपवनाः स्वल्पवाताः सा च शुभा। या च पांशुना रजसा ध्वस्ता कलुषिता सा जनपदानां लोकानां नाशं धत्ते ददाति या च रुक्षकलुषा रुधिरनिभा रक्तवर्णा सापि जनपदानां नाशं धत्ते, इति सन्ध्यालक्षणम् ॥२०॥

वराहमिहिराचार्यकृते ऽस्मिन् मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्रये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यक्षे ऽश्वमेधीययात्राविवृतौ निवेशभूम्यभियोज्य-सेना-वात-मेघवृष्ट्युल्का-भूगर्जित-संध्यालक्षणं नामा ऽध्याय एकत्रिंशः ॥३१॥

—❀—

# अथोत्पाताऽध्यायो व्याख्यायते

## तत्रादावेव परिवेशलक्षणमाह–

परिवेषोऽर्कशशिनोः शत्रुपक्षग्रहैः सहः ।
स्निग्धोऽखण्डश्च जयदः पापदा बहुमण्डलः ॥१॥
प्रतिलोमोऽतिबहुलो नेष्ट इष्ट प्रदक्षिणः ॥१½॥

अर्कशशिनोः सूर्यचन्द्रमसोः परिवेशः शत्रुपक्षग्रहैः सह शत्रपक्षे ये ग्रहाः शत्रोर्जन्मलग्न-जन्मराशिकालहोराधिपति नगराधिपतिग्रहाश्च तैः सह जयदो यातुर्जयं ददाति । तथा स्निग्धो निर्मलः, अखण्डः सकलमण्डलः जयद एव, परिवेषो बहुमण्डलो बहुभिर्मण्डलैर्युक्तः स पापदः यश्च परिवेषः प्रतिलोमः सम्मुखः, अतिबहुलः अतिघनः स नेष्टो न शुभः, यश्च प्रदक्षिणो यातुः प्रादक्षिण्येन याति स इष्टः शुभफलः ॥१½॥

## अधुना नीहारपांशुगन्धर्वनगराणां लक्षणमाह–

नीहारः पांशुपातश्च हितः स्निग्धः प्रदक्षिणः ॥२॥
गन्धर्वनगरं हन्ति प्राक् प्रभृत्यवनीश्वरम् ।
दलेशं युवराजञ्च पुरोहितमिति क्रमात् ॥३॥

नीहारपातो धूमपातः तथा पांसुपातः प्रदक्षिणः प्रादक्षिण्येन स्थितः स्निग्धश्च हितः । गन्धर्वनगराणां पुरं प्राक् प्रभृति पूर्वाद्यासु दिक्षुः दृष्टः, अवनीश्वरादीन् हन्ति । तद्यथा



पूर्वस्यां दृष्ट अवनीश्वरं राजानं, दक्षिणस्यां सेनापतिं पश्चिमस्यां युवराजानं उत्तरस्यां पुरोहितं हन्तीत्यर्थः ॥२-३॥

## अत्रैव विशेषमाह–

सिताद्यं ब्राह्मणादींश्च विदिगुत्थं च सङ्करम् ।
प्रदक्षिणश्च यात्रायां जयदं नेष्टमन्यथा ॥४॥

गन्धर्वनगरं सिताद्यं ब्राह्मणादींश्च हन्ति । तद्यथा श्वेतवर्णो ब्राह्मणान्, रक्तः क्षत्रियं पीतो वैश्यान्, कृष्णः शूद्रान् विदिगुत्थं विदिक्षु उत्पन्नं आग्नेयनैर्ऋत्यवायवैशान्येषु वर्ण-सङ्करान् हन्ति । यात्रायां पूर्वदक्षिणं प्रादक्षिण्येन जयदम्, पूर्वाग्नेययाम्यादिषु गच्छन् प्रादक्षिण्यम् । अन्यथा अप्रदक्षिणां गच्छन् नेष्टं अशुभम् ॥ ४ ॥

## अधुनोत्पातिकमाह–

दिशां दाहोऽथ जयदः प्रदक्षिणमुपागतः ।
श्वभ्रोन्नते वधो राज्ञां छायाया व्यत्यये न च ॥५॥

दिशां दाहो दिग्दाहः स च प्रादक्षिण्येनोपगतः प्राप्तः जयदो भवति । पूर्वाग्नेयदक्षिणाद्यासु गच्छन् प्रदक्षिणः । श्वभ्रोगतः तस्योन्नतेः, अकस्मात् उन्नते राज्ञां नृपाणां वधः मरणं भवति छायाया व्यत्यये विपरीते तथा राज्ञामेव वधः । छाया व्यत्ययोऽर्काभिमुखत्वम् ॥५॥

## अथान्यदप्याह–

घृताम्बुपयसां स्रावे च्युते वृक्षाच्च तत्क्षयः ।
तैलेन नाशो मुख्यानां रक्तो शस्त्रक्षताद्भयम् ॥६॥

घृतं आज्यं, अम्बु जलं पयः क्षीरं, एषां स्रावे वृक्षान्तरात् च्युते निर्गते तत्क्षयो भवति, घृतस्रुते घृतक्षयः, अम्बुनि अम्बुक्षयः पयसि गवादीनां स्तन्यक्षयः तैले स्रुते मुख्यानां प्रधानानां नाशः रक्ते शोणिते स्रुते शस्त्राद्भयं शस्त्रकृतं भयं भवति ॥ ६ ॥

अथान्यदप्याह–

मद्येन तु मिथो भेदो रुग्भयं दधिनिस्रुते ।
कुसुमात्कुसुमोत्पत्तौ परचक्रागमो भवेत् ॥७॥

मद्ये च्युते वृक्षात् मिथः परस्परं सेनाया भेदः पृथक् भावो भवति, दधिनिस्रुते रुग्भयं प्रजानां, कुसुमात् पुष्पात्कुसुमोत्पत्तौ परचक्रागमो भवति। प्राकृतं रूपं वर्जयित्वा अन्यत्रोह्यम्। यत्र न सम्भवति तत्रैव तत्फलमतो वटार्कादिषु क्षीरवृक्षेषु क्षीरस्रावो न दोषाय, खर्जूरताड वृक्षादिषु मद्यस्रावो न दोषाय, स्नेहवृक्षेषु देवदारुशरलादिषु स्नेहस्रावो न दोषाय, पुष्पात्पुष्पोद्गमश्च मल्लिकादौ न दोषाय ॥७॥

अथान्यदप्याह–

बहुतोयेऽतिसंशोषः कूपेऽसृक् प्रतिविस्रुतः ।
राज्ञोऽब्दार्द्धाद्वधं कुर्युः स्रोतोऽन्यत्वे परागमः ॥८॥

बहुतोये प्रभूतजलस्थाने अति संशोषो अतीवजलक्षयः कूपेऽसृक् प्रतिविस्रुति, कूपे कूपतडागदेवखातादिषु रक्ता प्रतिस्रावः, एतद्राज्ञो नृपस्याब्दार्द्धात्परतः षण्मासात् मासषट्कात् राज्ञो नृपस्य वधं मरणं कुर्युः। यत्कूपादौ स्वभावादेव रक्तता जलस्य तत्र नायं दोषः। अथ स्रोतोऽन्यत्वे स्रोतसां अन्यत्वे विपरीतत्वे परागमः परचक्रागमो भवति। स्रोतौ ग्रहणमुपलक्षणम्। नदीनामन्यत्वे प्रतीपगमने परागम एव ॥८॥

अथान्यदप्याह–

वृष्टिविद्युत्स्वनैर्व्यभ्रे चरस्थिरविपर्यये ।
दिनोल्कया च पीड्यन्ते जना भूपतिभिः सह ॥९॥

व्यभ्रे विगतमेघे नभसि वृष्टिर्वर्षणं विद्युत् तडित्स्वनो मेघशब्दः, तथा चराणां पदार्थानां स्थिरत्वे स्थिराणां चरत्वे तथा दिवसे यद्युल्कापातो भवति एतैः सर्वैः उत्पातैः लोका भूपतिभिः राजभिः सह पीड्यन्ते ॥९॥



अथान्यदप्याह–

सप्ताहं सन्ततान्यर्तौ वृष्टिर्हन्यान्नराधिपम् ।
अनग्निर्ज्वलनं पुंसो व्याधिराश्वेव जायते ॥१०॥

अन्यर्तौ वर्षावर्जिते सप्ताहं दिनसप्तकं अविच्छिन्ना वृष्टिः नराधिपं राजानं हन्यात्। अनग्निज्वलनं अग्निना विना ज्वालारूपं यदि दृश्यते तदा पुरुषाणां क्षिप्रमेव व्याधिर्जायते उत्पद्यते ॥१०॥

अथान्यदप्याह–

पीडा राष्ट्रस्य षण्मासादुष्णशीतविपर्यये ।
मासेऽष्टमे नृपस्यान्तो निगदे पशुपक्षिणाम् ॥११॥

उष्णकाले ग्रीष्मादौ शीतता शीतकाले हेमन्तादौ उष्णता यदि तदा राष्ट्रस्य जनपदस्य षण्मासात् षड्भिर्मासैः विज्ञेया पशूनां गवादीनां चतुष्पदानां पक्षिणां विहगानां निगदे पुंवद् व्याहरणे नपस्य राज्ञः अष्टमे मासे अन्तो मरणं भवति ॥११॥

अथान्यदप्याह–

नागरारण्यसत्वानामरण्यपुरमेव च ।
राष्ट्रपीड़ाधिके वर्षान्मुख्यलोकस्य च क्षयः ॥१२॥

नागरसत्वानां नगरप्राणिनां श्वप्रभृतीनां, अरण्यनिवसने ऋतावधिके वर्षे मुख्यस्य प्रधानलोकस्य च क्षयो विनाशो भवति। तादृगरण्य सत्वानां सृगालव्याघ्रादीनां पुरनिवसने ऋतावधिके च तादृगेव फलं भवति ॥१२॥

अथान्यदप्याह–

स्तंभोपलकुसूलार्चा पीठशय्या प्रसर्पणम् ।
गदने चापि देशस्य नाशं मासत्रयात् वदेत् ॥१३॥

स्तंम्भः स्थूणा उपला अश्म कुसूलं मृन्मयं अर्चादेवप्रतिता पीठं आसनं शय्या खट्वाद्यास्तरणं

एषां प्रसर्पणे गदने व्याहरणे पुंवच्छब्दोच्चारणे एषामेव देशस्य जनपदस्य मासत्रयात्परतः नाशो वदेत् ब्रूयात् ॥१३॥

## अथान्यदप्याह–

गोनागाभ्यामश्ववधात् व्यत्ययो वा नृपान्तकृत् ।
देशनाश स्तथा स्त्रीणां खगाहि पशुसम्भवे ॥१४॥

गौः प्रसिद्धः नागो गजः आभ्यामश्वस्यवधस्तुरगो यदि वद्ध्यते, अथवा व्यत्ययो विपरीत, अश्वेन गोनागयोर्वध एतत् वर्षार्द्धान्मासषट्कात् राज्ञः, अन्तं नाशं करोति । स्त्रीणां च योषितां नरस्त्रीणां खगाहिपशुसंभवे सति खगः पक्षी अहिः सर्पः पशुः छागादिकः, एषां संभव उत्पत्ति यदि दृश्यते तदा देशस्य जनपदस्य नाशो भवति ॥१४॥

## अधुनोत्पातात्फलसंहितानाह–

धान्यरसमद्यभोजनफलपुष्पस्नेहमांसवस्त्राणाम् ।
सिकतारजोवसासृक् स शर्करां — — ॥१५॥

— — — — — — —
— — — — — — —
— — — — — त्रुटितमत्र पत्रैकम् ॥५१॥

क्रोष्टाः सृगालः श्वा सारमेयः, अहिः सर्पः पिपीलिकाः सरीसृपजातयः शशः शशकः मृग आरण्यः ध्वाङ्क्षः काकः, आदिग्रहणात् कङ्क प्लव गृध्रा एते यतो यस्यां दिशि याति पुरे नगरे सेनायां वा प्रविशति ततस्तस्यामेव दिशि शत्रुः रिपुः पुरं सैन्यं वा घातयेत् ।

## अधुना तोयग्रहणमालभतोऽग्निदाने विधानमाह–

पातालर्क्षेराहुकेत्वोःपुरेऽरे
तोयोच्छित्तिः सालपातश्चकार्यः ।

अत्र त्रयस्त्रिशोऽध्यायोऽपि त्रटितंवर्तते ।



जामित्रस्थे भूमिजेऽस्यांशके वा
पुत्रेणेन्दोर्वीक्षितेऽग्निः प्रदेयः ॥१॥

यस्मिन् लग्ने पातालर्क्षे चतुर्थस्थाने राहुकेत्वोरन्यतमः स्थितो भवति, तेन लग्ने ये केतो राशिव्यवस्था प्रागेव व्याख्याता; यथा येन राशिना नक्षत्रेण वा सह उदेति केतु तत्रस्थ एव सङ्कल्पनीय इति। जामित्रस्थ इति भूमिजे अङ्गारके जामित्रस्थे लग्नात्सप्तमराशिस्थे इन्दोः पुत्रेण बुधेन वीक्षिते दृष्टे शत्रोः पुरेऽग्निः हुताशनो देयः, अथवा भूतिजस्यांशके तत्काललग्नात्सप्तमस्थे बुधेन वीक्षिते वाग्निः प्रदेयः, अग्निप्रहारः कर्तव्य इति ॥१॥

वराहमिहिराचार्यकृतेऽस्मिन्मतसागरे ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति भट्टोत्पलविरचितायां यद्येऽश्वमेधीययात्राविवृतौ परदुर्गालंभनोपायनामाऽध्यायश्चतुस्त्रिंशः ॥ ३४ ॥

शुभमस्तु

अतीवजीर्णात्त्रिशताब्दतीर्णात्
पत्राग्रपृष्ठाक्षरभावशीर्णात् ।
पाश्चात्यमोढाक्षरतोऽवकीर्णा
त्संपादितं कष्टत इत्थमेव ॥

इति



# शुद्धिपत्राणि

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| श्टङ्गोन्नति | शृङ्गोन्नति | क | १३ |
| ···एडनाथौ | दण्डनाथौ | ग | २४ |
| मुलक्क | सुलुक्क | ज | ३ |
| रौद्रौ | रोद्रो | ज | २१ |
| ज्ञुंकुमादिक गन्धाढ्यं | कुंकुमादिक गन्धाढ्ये | त | १३ |
| चोपलभ्यः | चापलभ्ये | ध | २६ |
| प्राक्कर्ा | प्राक्कर्मणा | ६ | २ |
| रत्नाबलिक्रतेयमार्या | रत्नाबलिकृतामार्या | १७ | १० |
| जन्मसये | जन्मसमये | २० | १० |
| वक्रज्ञशशिभिर्घूने | वक्रज्ञशशिभिद्यूने | ३३ | १४ |
| घूने | द्यूने | ३३ | १६ |
| रवि भौमसौरैः श्च | रविभौमसौरैश्च | ३५ | ५ |
| कुजचन्द्रमसो घूने | कुजचन्द्रमसो द्यूने | ३५ | १३ |
| एतयों घूने | एतयोद्यूने | ३५ | १५ |
| यतदुक्तं | एतदुक्तं | ३८ | १० |
| वैपरित्येन | वैपरीत्येन | ३९ | १९ |
| बहुनी | बहूनी | ४० | १५ |
| तज्ज्ञौ | तज्ज्ञै | ४१ | ६ |
| समचनविधाते | समवचन विघाते | ४३ | २ |
| नेयाद्याम्यदिश | नेयाधाम्यदिशि | ४५ | २३ |
| गच्छतो | गच्छन्तो | ४६ | ४ |
| रोतिण्यथो | रोहिण्यथो | ४७ | १३ |
| ज्येष्ठायी | ज्येष्ठायां | ४९ | २२ |
| आवश्यगमने | अवश्यगगने | ४९ | २५ |
| वात्रा | यात्रा | ५० | ६ |
| श्रियौ ऽर्थी | श्रेयो ऽर्थि | ५३ | १४ |
| शत्रुन् | शत्रून् | ५४ | १४ |
| पुनर्वमु | पुनर्वसु | ५७ | १४ |

